## तत्त्वसुबोधिनी

ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ । पूर्वं तदुक्तमित्यनेन गृही प्रमाणेन केषाञ्चिदवतारदर्शनेन मुक्तिरित्युक्ते तर्हि सर्वेषामपि तेनैव मुक्त्याप केषाञ्चिद्बिंबदर्शननियमेनेत्याक्षेपोथानादनन्तरसंगतिरिति भावः । ननु बिंबातिरिक्तरूप मोक्षदातृशक्त्यभावात्तच्छक्तिमद्बिंबमेवोपास्यमित्याह । नहीति । उक्तविरोधः स्यादिति नस्थानतोऽपीत्युक्तविरोधः स्यादित्यर्थः । अत्र सौत्रमपिपदं मात्रार्थकं उपलब्धिरित्य संबन्ध्यत इत्यभिप्रेत्य प्रवृत्तं न सामान्यदर्शनमात्रेण मुक्तिरिति भाष्यं व्याचष्टे । भगवद्रूपाणामिति । बिंबदर्शनादेवेति । नायं नियमः सर्वेषां किन्तु ये बिंबदर्शनयोग ऋष्यादयः तेषामेव सर्वेषां बिम्बदर्शनायोग्यत्वात् । यथोक्तं नोपासात्रैविध्यादाश्रितत्वा तद्योगादिति । ऋषयः अन्तःप्रकाशाः इति श्रुतेश्च । अन्यथादृष्टस्यैव खरनराणा प्रागुक्तविरोधात् । येषां बहिरूपासनेन मोक्षः तेषामपि हृद्युपासनं किंचित्कार्यमेवेत बृहदारण्यकभाष्यं तदवतारादिदृष्टिविशेषार्थमेवान्तरूपास्त्यावश्यकत्वपरम् । अत दृष्ट्वैवेत्यत्रांजसेत्युक्तम् । यथोक्तं काठकभाष्ये । ''प्रादुर्भावा इमेविष्णुमिन्द्रियेणैव पश्य प्रादुर्भावानपि यदाज्ञानदृष्ट्यैव पश्यति ॥ तदैवमुच्यते योगी नदृष्टैरिन्द्रियैः क्वचिदि सामान्यदर्शनस्य वैकल्पपरिहाराय सूत्रे ''न हि लोकापत्तिरित्युक्तमभिप्रेत्य प्रवृत्तं न भाष्यं व्याचष्टे । न यदीत्यादिना । नन्वस्तु लोकप्राप्तिरेवेत्युक्तिरित्यत आह । नहीति । इत्यत आह । दर्शनेनेतीति । ऋषीणां बिम्बदर्शनमेव योग्यमिति भावः ।

## वाक्यार्थविवरणम्

न हीति ॥ तथात्व एव हि बिम्बरूपविषयं ज्ञानं मोक्षसाधनम्, न यत्किञ्चि विषयमिति वक्तुं युज्यत इति भावः । उक्तविरोधस्स्यादिति । 'न भेदादिति प्रत्येकमि'ति भगवद्रूपेष्वविशेषस्योक्तत्वादिति भावः । साम्येन–समत्वेन तरतमभाव त्वेनेत्यर्थः । सामान्यतो दर्शनेन– बिम्बव्यतिरिक्तयत्किञ्चिद्रूपदर्शनेनेत्यर्थः । मृत्युविशे नन्तरमिति प्रारब्धकर्मावसाने चरमदेहपातानन्तरमित्यर्थः । न च तदिति । साम भगवद्रूपदर्शनस्य वैफल्यायोगात् किञ्चित्फलं वक्तव्यमिति भावः । सम्भवति साधन शेषः ॥ एवं सति ॥ मुक्तिरूपफलाभावकथनेऽपि ॥ लोकेति ॥ महरादिलोकेत्य दर्शने–विकल्पाद्बिम्बदर्शनेऽपि स स्यादिति यथा भगवद्रूपज्ञानमध्ये बिम्बज्ञानमेव मोक्ष

(वाक्यार्थविवरणम्),

न सामान्यज्ञानमिति विकल्प उक्तः, एवं बिम्बदर्शने बिम्बज्ञानमध्येऽपि किञ्चिद्बिम्बज्ञानं मोक्षसाधनं किञ्चिन्नेत्यपि विकल्पस्स्यादित्यर्थः । भाष्ये 'स्वात्मयोग्यया दृष्ट्य स्वबिम्बज्ञानेन मुच्यते । नात्र सन्देह इत्युक्त्या न बिम्बदर्शने विकल्प इत्युक्तं भवति भाष्ये 'नान्येन केनचित्' सामान्यदर्शनेनेत्यर्थः ॥

## वाक्यार्थमञ्जरी

उक्तेति ॥ 'न स्थानतोपी'त्युक्तसर्वरूपाविशेषेत्यर्थः ॥ ॐ न सामान्यादप्यु लब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥ उपलब्धेः सर्वरूपविषयज्ञानस्य सामान्यात्समानत्व यत्किञ्चिज्ज्ञानरूपेण मुक्तिरिति न, किं तु रूपविशेषदर्शनेनैव कथं मृत्युवत् । य मृतित्वसाम्येऽपि मृतिविशेषादेव मोक्षस्तथा रूपान्तरज्ञानस्य वैफल्यायोगात्तेन यत्फलं भव सैव मुक्तिरित्यत उक्तम् ॥ न हीति ॥ तत्फलं महरादिलोकानामापत्तिः प्राप्तिः न हि मुक्तिरित्यर्थः ॥ दर्शने विकल्पादिति ॥ किञ्चिन्मूर्तिदर्शनं मुक्तिहेतुः, किञ्चिन्नेति य विकल्पः तथा बिम्बदर्शनेऽपि कस्यचिन्मोक्षः, कस्यचिन्नेतिविकल्पः स्यादित्यर्थः अत्रोक्तो बिम्बदर्शननियमोन सर्वेषां किन्तु ये बिम्बदर्शनयोग्या ऋष्यादयस्तेषामेव सर्व बिम्बदर्शनायोग्यत्वात् । यथोक्तमुपासात्रैविध्यादाश्रितत्वादिह तद्योगादिति, ''ऋषयो प्रकाशा'' इति श्रुतेश्च । अन्यथा दृष्टचैव ह्यवताराणामिति प्रागुक्तविरोधात् । यत्तु बहिरुपासनेन मोक्षस्तेषामपि हृद्युपासनं किञ्चित्कार्यमेवेति बृहदारण्यकभाष्यं तदप्यवतार दृष्टिविशेषार्थमेव न तूपास्त्यावश्यकत्वपरं अत एव दृष्टचैव ह्यवताराणामित्यत्रांजसेत् तथोक्तं काठकभाष्ये । ''प्रादुर्भावानृतेविष्णुमिन्द्रियैर्नैव पश्यति । प्रादुर्भावानपि ज्ञानदृष्टचैवपश्यति'' तदैवमुच्यते योगीति ॥ ३३ ॥

## ३४. ताद्विध्याधिकरणम्

**'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी माठरश्रुतेर्न परमात्मना दर्शनमिति चेन्न । 'तस्यैष आत्मा विशते ब्रह्मधामे'**

(सूत्रभाष्यम्)

परमात्मैवं(व) भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यते । मायावैभवे च —

'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥
स्नेहानुबन्धो यस्तस्मिन्बहुमानपुरस्सरः ।
भक्तिरित्युच्यते सैव करणं परमी(मे)शितुरि'ति ॥

सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥ ५४ ॥

॥ इति ताद्विध्याधिकरणम् (परेणाधिकरणम्) ॥ ३४ ॥

## तत्त्वप्रदीपिका

भक्तेः सर्वसाधनेषु प्राधान्यमुक्तम् । श्रुतिं चाह– ''भक्तिरेवैनं दर्शयती''त्यादि । अतस्तयैवास्य दर्शनं न परमात्मनेति शङ्कां निराकरोति नेत्यादिना । ''एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामे''त्याथर्वणी श्रुतिः ॥

''नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामि''ति ।

पूर्ववाक्योक्तैरुपायैर्यतमानस्य ब्रह्मपुरं हृदयमेष परमात्मा विशते तत्र दृश्यत इत्यर्थः । प्रवेशो नित्यसिद्धत्वात् । प्रवचनादिभिर्भक्तिरहितैर्न लभ्यते । भक्तिप्रधानैरपि स्वातन्त्र्यान्न लभ्यः किन्त्वेतैर्भक्तिप्रधानैरुपायैर्यतमानस्यैवं विदुषो हृदये तदानीं प्रविष्ट इवाभिव्यज्यत इति । कथं तर्हि भक्तिवशत्वश्रुतिरित्यत आह–परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ''भक्तिरेवैनं नय भक्तिरेवैनं दर्शयती''त्यादेः परमात्मैव भक्त्या स्वात्मानं दर्शयति स्वात्मानं प्रापयति चेत्यभिप्राय अतः स्वातन्त्र्यं तस्यैव । साधनेषु प्राधान्याद्भक्तेर्भक्तिरेवेत्युच्यते । ''हन्ता रामशर'' इतिव अतश्च भक्तिशब्देन परमात्मा भक्त्यधिकरणे भक्तेर्नियामकः प्रोच्यते । तदेव ह्याह– ''भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत्'' तद्वशोऽहमिति ज्ञापयेत् ॥

''तत्तद्गतस्यैव हरेस्तत्तन्नामानि चाञ्जसा ।

(तत्त्वप्रदीपिका)

"दानतीर्थतपोयज्ञपूर्वास्सर्वेऽपि सर्वदा।

अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तय" इति च भविष्यत्पर्वणि ॥

"सर्वस्मादुत्तम इति सम्यक् स्नेहयुता मतिः। सुस्थिरा भक्तिरुद्दिष्टा तया मोक्षो नचान्यतः ॥
तया मोक्षो भवत्येव सा चेत्पूर्णा स्वयोग्यतः। अपरोक्षदृशा युक्ता सा पूर्णेत्यभिधीयते ॥
अपरोक्षदृशिश्चापि महाचार्योक्तदर्शनम्। सोऽपि यन्मोक्षनियतमनसा समुदीरयेत्।
तस्य दर्शनतो याति मुक्तिं नास्त्यत्र संशयः ॥
ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः। तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ॥
द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम्। सर्वं भक्त्यर्थमुद्दिष्टं निष्फलं तत्तया विना ॥
विष्णुभक्तियुतो मुक्तिं याति नान्यः कथञ्चन। एतदन्यत्तु यच्छास्त्रं न तच्छास्त्रं कुवर्त्म तत्"
इति हरिवंशेषु ॥

## तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासनसाहित्येनोक्तभक्तेः स्वातन्त्र्यनिरासादस्ति शास्त्रादिसंगतिः। अन्यथाऽव्यक्तत्वाभावप्रसङ्गात्तन्निरसनीयमेव। प्रकृतं ज्ञानमेव विषयः। किं भक्तिसामर्थ्येन भवत्युत परमात्मनेति सन्देहः। कृष्यादौ राजसेवादौ च तथा दर्शनं संदेहबीजम्। पूर्वपक्षयति ॥ भक्तिरिति ॥ भक्तिसामर्थ्येनैवापरोक्षज्ञानं न परमात्मप्रसादेन। 'भक्तिरेवैनम्' इति श्रुतौ भक्तेरेव स्वातन्त्र्येण दर्शनादिसाधनत्वदर्शनात्। एवं साधनसामर्थ्यादेव तद्दर्शनान्न तस्याव्यक्तत्वमिति भावः। सिद्धान्तयति ॥ नेति ॥ न भक्तेरेव स्वातन्त्र्येण दर्शनादिसाधनत्वं वाच्यम्। किं तु तया प्रसन्नस्य परमात्मन एव। 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुतेरित्यर्थः। एतैः प्रवचनाद्युपायैर्यो दर्शनार्थं यतेत (यतते) तस्यार्थे तैः प्रसन्नः परमात्मा ब्रह्मधाम वायुं विशति तस्य तत्राविर्भवतीत्यर्थः। परमात्मनैव चेद्दर्शनं कथं तर्हि भक्तेरेव तत्साधनत्वाभिधायकश्रुतिरुपपद्यत इति शङ्कते ॥ कथमिति ॥ परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ परेण चेति ॥ परमात्मनैव दर्शनादिकं न तु भक्त्या। तथापि भक्तिश्रुतिरुपपद्यते। कथम्। दर्शनमोक्षयोः कर्ता परमात्मा भक्त्यैव करोतीत्यतोऽत्र भक्तेर्दर्शनादौ करणत्वेनोच्यमानत्वात्। न च वाच्यं साधनान्तराण्यनुक्त्वा किं विशिष्याभिधीयते भक्तिरिति। तस्याः साधनेषु प्रधानत्वात्। कर्तृत्वाङ्गीकारे तूक्तविशेषश्रुतिविरोध इति भावः। अत्रैव स्मृतिमाह ॥ मायेति ॥ सैवेत्यस्यापि पूर्ववत्संगतिः। एवं 'हन्ता रामशर' इति करणे कर्तृत्वव्यपदेशदर्शनात्करणार्थत्वेन श्रुतिमुपपाद्य प्रकारान्तरेणाप्युपपादयति ॥ सर्वेति ॥ भक्त्यादिसर्वशब्दानां परब्रह्मणि वृत्तेर्ब्रह्मैवैनं

(तत्त्वप्रकाशिका)

युक्तमिति सूत्रांशस्यार्थान्तरमुक्तं भवति । अतो दर्शनादेः पुरुषशक्तिसाध्यत्वाभावाद्युक्तमव्यक्त ब्रह्मण इति सिद्धम् ॥ ५४ ॥

## गुर्वर्थदीपिका

अन्यथाऽव्यक्तत्वाभावप्रसङ्गादित्यत्र स्वतन्त्रसाधनशक्त्यैव दर्शने घटादिवद्विष्णोरव्य त्वाभावप्रसङ्गादित्यर्थः । ''परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्ध'' इति सूत्र योजना । चशब्द एवार्थे । परेण परमात्मनैव दर्शनं नतु केवलं भक्तिसामर्थ्येन । ''भक्तिरेवैनं नयती''ति श्रुतेः का गतिरित्यत उक्तं ''भूयस्त्वात्त्वनुबन्ध'' इति दर्शनसाधनेषु भूयस्त्वात् प्रधानत्वात् तु एव अनुबन्धः भक्तिः । ''हन्ता रामशर'' इ करणे कर्तृत्वोपचाराद्भक्तिः ''भक्तिरेवे''ति श्रुतौ कर्तृतया विशिष्य चोच्यते । 'नामानि सर्वाणी'ति श्रुत्या 'भज सेवाया'मिति धातोः कर्मणि क्तिनूप्रत्ययकरणेन भक्तिर्भगवानित्यभिप्रेत्योक्तं शब्दस्य ताद्विध्यमिति । शब्दस्य भक्तिशब्दस्य ताद्विध्यं नारायणादिनामसमूहस्य विधा प्रकारो यस्य स तद्विधस्तस्य भावस्ताद्विध्यं यतस्तस ''भक्तिरेवैन''मिति श्रुतिः प्रवृत्तेति । अस्यैव तात्पर्यकथनं भाष्ये परमात्मैवेत्यादि ॥

## भावबोधः

ओं परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ओं ॥ ५४ ॥ स्वात निरासादिति । ईश्वरप्रसादाद्वारकत्वनिरासादित्यर्थः । एवं पूर्वाधिकरणैः अधिकारि व्यवस्थितापरोक्षज्ञानस्य भक्तिसाध्यत्वे निर्णीते तस्याः स्वातन्त्र्येण तत्साधनत्वं नि इत्यनन्तरसङ्गतिरिति भावः । किमित्यादि । अत्र भक्तिः किं स्वातन्त्र्येणापरोक्षज्ञान उत परमात्मनः प्रसादद्वारेति चिन्ता । तदर्थं ''भक्तिरेवैनं नयति'' इति श्रुतिः स्वातन्त्र्येण ज्ञानसाधनप्रतिपादिका भवत्युत न भवतीति । तदर्थं सा श्रुतिः निरवकाशोत सावकाशेति । तदर्थं भक्तेः परमात्मप्रसादद्वारा ज्ञानसाधनत्वे नास्त्युतास्तीति । ''तदव्यक्तमाह हि'' इत्यनेन गतार्थताशङ्कापरिहारायाभ्यधिका प्रदर्शनार्थं भाष्ये ''भक्तिरेवैनं'' इति श्रुत्युदाहरणमित्यभिप्रेत्य तद्व्याचष्टे– भक्तिसा नैवेति । अनेन ''भक्तिरेवैनम्'' इति भक्तेरेव पृथङ्गोचकत्वप्रदर्शनान्नेशकृत्यमिति विवरणमपि व्याख्यातं भवति । अत्र सूत्रे ''च''शब्दः ''एवा''र्थः । दर्शनादिकमि

(भावबोधः)

मुक्तिं ददातीति भाष्यं सूत्रतात्पर्यकथनपरमित्युक्तं भवति । सौत्रः ''च'' शब्दः ''अप्य''र्थश्च । अपि तथापि शब्दस्य भक्तिरेवैनमिति श्रुतेस्ताद्विध्यं युक्तमिति सूत्रांशयोजनामभिप्रेत्याह– तथापीति । कथमित्यतस्तदुपपादकत्वेन परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति भक्तिः करणत्वेनोच्यत इति प्रवृत्तं भाष्यं व्याचष्टे– दर्शनमोक्षयोरिति । अनेन ''भक्त्यैव'' इति ''एव''कारसंबन्धः । ''इति''शब्दस्य हेत्वर्थकथनत्वेनोच्यत इत्यनेनापि संबन्धः । ''यतः'' शेषो वेत्युक्तं भवति । ''भूयस्त्वानुबन्धः'' इति सूत्रांशव्याख्यानपरं प्रधानत्वाद्भक्तिरिति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– न च वाच्यमित्यादिना । तथा च सूत्रे ''अनुबन्धस्तु'' इति संबन्धः । भाष्ये तु प्रधानत्वाद्भक्तिरेव करणत्वेनोच्यते; न तु साधनान्तराणीति; एवकारसंबन्ध इति भावः । स्मृतिमाहेति । उपलक्षणमेतत्–

'अनादितो गुणाः सन्तो भक्त्याद्या नह्यमूमुचन् ।'

इत्यादि न्यायविवरणोदाहृतमपि स्मृतिवाक्यं ग्राह्यम् । सैवेत्यस्यापीति । कथं तर्हि ''भक्तिरेवैनं'' इति श्रुतिरित्यतो वा साधनान्तराण्यनुक्त्वा किं विशिष्य भक्तिरेव कारणत्वेनोच्यत इत्यतो वा ''सैवेत्युक्तं'' इति पूर्ववत् सङ्गतिरित्यर्थः ॥

अत्राद्ये– सा भक्तिः करणमेवेति ''एव'' शब्दसंबन्धः ॥ द्वितीये– सैव मुख्यं न त्वन्यदित्यर्थ इति ज्ञातव्यम् ॥ ५४ ॥

## भावदीपः

ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ भक्तेः स्वातन्त्र्यनिरासस्य पादानन्तर्भावमाशङ्क्योक्तम् ॥ उपासनासाहित्येनोक्तेति ॥ अनुबन्धादिभ्य इत्यत्रोक्तेत्यर्थः ॥ स्वातन्त्र्येति ॥ भगवत्प्रसादनैरपेक्ष्येणेत्यर्थः ॥ अन्यथेति ॥ प्रसादनिरपेक्षेणोपासनासहितभक्तिमात्रेण भगवद्दर्शन इत्यर्थः । तदव्यक्तमाह हीत्युक्ताव्यक्तत्वेत्यर्थः ॥ कृष्यादाविति ॥ कृष्यादौ राजादिप्रसादनैरपेक्ष्येण फलोदयो दृष्टः । राजसेवादौ च राजप्रसादद्वारा फलोदयो दृष्ट इत्यर्थः । भाष्ये न परमात्मनो दर्शनमित्यस्य परमात्मविषयापरोक्षज्ञानं परमात्मनः प्रसादेन न भवति किं तु भक्तिसामर्थ्येनेत्यर्थमुपेत्य व्युत्क्रमेण भाष्यं व्याचष्टे ॥ भक्तिसामर्थ्येनैवेत्यादिना ॥ प्रसादेनेति शेषोक्तिः । न परमात्मनो दर्शनमव्यक्तत्वमित्यपि

(भावदीपः)

तत्तात्पर्यार्थमाह ॥ न भक्तेरेवेति ॥ आदिपदेन मुक्तिः । भाष्ये श्रुतेरित्युक्तावपि भक्तेरे पृथङ्नोचकत्वदर्शनादिति न्यायविवरणोक्त्यनुरोधेनेयमुक्तिः । तस्येत्याथर्वणवाक विवक्षितार्थस्यास्फुटत्वात्पूर्वशेषमाह ॥ एतैरिति ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य इत्यादिपूर्ववाक्योक्तप्रवचनभक्त्यादिप्रकृतपरामर्शि त्वमुपेत्य श्रुत्यर्थमाह ॥ एतैरित्यादिना ॥ प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः उपायैर्यो विजानीयात्प्राणस्थं परमेश्वरमित्याथर्वणभाष्योक्तेरिति भावः । सू प्रकृतत्वाद्दर्शनादिपदान्वयमुपेत्य परेण च दर्शनादीति सूत्रांशस्यार्थमाह ॥ परमात्मनैवेति दर्शनादिकमिति ॥ मुक्तिरादिपदार्थः । उक्तसूत्रांशस्य तात्पर्यार्थोक्तिपरं परमात्मैवेत्यादि भाष्यं साध्याध्याहारपूर्वं हेतुत्वेन व्याचष्टे ॥ तथापीति ॥ परमात्मन एव दृष्ट्यादिहेतु त्वेऽपीत्यर्थः । भक्त्यैवेति भाष्यस्थैवकारो भिन्नक्रम इति भावः ।

भाष्यस्थेतिपदं हेत्वर्थं मत्त्वोक्तमित्यत इति ॥ अत्रेति शेषोक्तिः । श्रुतावित्यर्थः प्रधानसाधनत्वादित्यंशं व्यावर्त्यपूर्वं व्यनक्ति ॥ न च वाच्यमिति ॥ साधनत्वहेतोरसिद्धि माशङ्क्याह ॥ कर्तृत्वेति ॥ उक्तेति ॥ एतैरुपायैरित्युक्तेत्यर्थः । विशेषेत्युक्त निरवकाशत्वेन भक्तिरेवेति श्रुतितो बलवत्तोच्यते ॥ अत्रैवेति ॥ परमात्मैवेत्यादि भाष्योक्तार्थ एवेत्यर्थः । स्मृतावेनं विष्णुं स्वात्मानमेवेत्यर्थः । वशं नयेत् । वशोऽहमि ज्ञापयेदिति तत्वप्रदीपोक्तार्थः । दर्शनादौ हरेरेव कर्तृत्वे कथं भक्तिरेवेति श्रुतिः कथं साधनान्तराण्यनुक्त्वा भक्तेरेवोक्तिरित्यतः स्मृतौ सैव करणमीशितुरित्युक्तमि ज्ञेयमित्याह ॥ सैवेत्यस्यापीति ॥ पूर्ववत् प्रधानसाधनत्वात्करणत्वेनोच्यत इत्यस्यैवेत्यर्थः तत्र करणमित्यनेनाद्यचोद्यस्य निरासोऽन्त्यस्य तु सैव परं करणमिति परपदेनेति ध्येयम् भक्तेः प्राधान्यं च ''तीर्थदानतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा । अङ्गानि हरिसेवा भक्तिस्त्वेका विमुक्तय'' इति । सर्वस्मादुत्तम इति सम्यक्स्नेहयुता मतिः । सुस्थि भक्तिरुद्दिष्टा तया मोक्षो न चान्यत इत्याद्यनेकवचनैः बृहद्भाष्ये प्रथमाध्याये विवृतम् परब्रह्मणि वृत्तेरिति ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यत्र सैषा प्रकृतिरित्यादिश्रुति गतस्त्रीलिङ्गप्रकृत्यादिशब्दानामिव भक्तिशब्दस्यापि ब्रह्मणि वृत्तेरित्यर्थः । यद्वा भक्तिस्थ परमो विष्णुरिति भक्तिस्थत्वोक्त्या ''तत्तद्गतस्यैव हरेस्तत्तन्नामानि चांजसा । औपचारि कनामानि तदन्येषामिति स्थिति''रिति स्मृत्युक्तदिशा शरीररूपकविन्यस्तगृहीतेरि न्यायेन ब्रह्मणि वृत्तेरित्यर्थः । भाष्यं सूत्रारूढं करोति ॥ अनेनेति ॥ अत इति

# वाक्यार्थमुक्तावली

ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुसन्धेयः ॐ ३-३-५४ ।। पूर्वाधिक
ईश्वरः प्रसन्नो बिम्बभूतमात्मानं प्रदर्श्य मोचयतीत्युक्तं समोऽपि भगवान् स्वबिम्बदर्शन ए
मोचयतीति । तद्युक्तम् । ज्ञानमोक्षयोः भक्त्यायत्तत्वादित्याक्षेपोत्थानादनन्तरसङ्गतिः
साहित्येनेति । साहित्येनानुबन्धादिभ्य इत्यत्रोक्तभक्तेरित्यर्थः । स्वातन्त्र्यनिरासादिति
ईश्वरप्रसादद्वारकत्वनिरासादित्यर्थः । अन्यथेति । साधनसामर्थ्येन प्रत्यक्षत्व इत्यर्थः
किमिति । ज्ञानं किं भक्तिसामर्थ्येनोत परमात्मनेति चिन्ता । तदर्थं भक्तिरेवैनमिति श्रु
किं भक्तेः स्वतन्त्रकारणत्वपरोत कारणत्वपरत्वेन भगवत्परत्वेन वा सावकाशेति
कृष्यादाविति । कृष्यादौ पुरुषप्रयत्नादेव फलं तेन प्रसन्नदेवतया । राजसेवादौ तु से
प्रसन्नेनैव फलमित्युभयथा दर्शनमित्यर्थः । अत्र पृथग्दृष्टिरित्युक्तन्यायं पृथगीश्वरप्रसादं वि
भक्तिसामर्थ्येनैव दर्शनादिकमिति श्रुतेर्न परमात्मना दर्शनादीत्यर्थतया प्रदर्शयन्भ
व्याचष्टे। भक्तिसामर्थ्येनेति । यद्वा ननु तदव्यक्तमाह हीत्यत्रापि संराधन इति दर्शन
पुरुषप्रयत्नस्य अतोऽनन्तेनेति प्रसादसाध्यत्वस्य चोक्तत्वान्न पुनः शङ्कावकाश इत
पृथग्दृष्टिरिति न्यायं पृथक् साधनान्तरवैलक्षण्येन भक्तिरेवेति भक्तेरपरोक्षा
हेतुत्वावधारणाच्छ्रवणपूजादिसंराधनासाध्यत्वेऽपि भक्तिसाध्यत्वमस्त्वित्यभ्यधिकाशङ्
प्रदर्शकत्वेन व्याकुर्वन्भाष्यं व्याचष्टे । भक्तिसामर्थ्येनेति । यद्वा ननु व्यतिरेकानवस्थितेश्च
नपेक्षत्वादितीश्वरव्यतिरेकेण कस्यापि कर्मणोऽनवस्थानोक्तेः कथं भक्तेरेव ज्ञानहेतुत्वम्
श्रुतिस्तु तेजोऽधिकरणन्यायेन द्वारकारणत्वपरा भविष्यति । समन्वयाध्यायोक्तरी
भगवत्परा वेति पुनर्गतार्थतेत्यतः पृथग्दृष्टिरिति न्यायं द्वारकारणान्तराणां श्रवणाद
विद्यमानत्वेऽपि पृथक् भक्तिरेवेति दृष्टेः श्रुतेः भगवद्वाचकशब्दान्तरे विद्यमाने
पृथग्विशिष्य भक्तिरेवैनमिति दृष्टेः श्रुतेः, न द्वारकारणत्वपरत्वेन वा भगवत्परत्वेन
सावकाशत्वमिति न परमात्मनो दर्शनादिकमित्यर्थकतया प्रदर्शयन् भाष्यं व्याचष्टे
भक्तिसामर्थ्येनेति । एतैः प्रवचनाद्यैरिति । भक्तिपूर्वकप्रवचनाद्यैरित्यर्थः । अथ
तत्पूर्ववाक्ये नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेनेति भक्तिहीनप्रवचन

(वाक्यार्थमुक्तावली)

सूत्रे चशब्द एवार्थः । दर्शनमोक्षयोः प्रकृतत्वात् दर्शनादिकमित्यन्वेतीति भाव व्याचष्टे। परमात्मनैवेति । एतेन परमात्मैव दर्शनादिकं प्राप्य मुक्तिं ददातीति भाष्यां व्याख्यातो भवति । सौत्रश्चशब्दोऽप्यर्थश्च । अपि तथापिशब्दस्य भक्तिरेवैनं नयतीति श्रु ताद्विध्यं तद्विधत्वं भक्तेर्दृष्टिं प्रति कर्तृत्वप्रतिपादकत्वमिति सूत्रांशयोजनामभिप्रेत्याह तथापीति । एतेन भक्तिरुच्यत इति भाष्यांशः भक्तिः श्रुतावुच्यते भक्तिरेवेति श्रुतिरुपप इति व्याख्यातो भवति । कथमिति । यदि परमात्मैव दर्शनादिकं न तु भक्त्या स्वतन्त्र कथं तर्हि भक्तिरेवेति भक्तेः कर्तृत्वश्रुतिरुपपन्ना विरोधादिति भावः । तत्परिहाराय शब्द ताद्विध्यमित्यावर्तते । चशब्दो यस्मादित्यर्थे । अनुबन्धेनेति विपरिणम्यान्वेति । प दर्शनादिकमिति च । ततश्च यस्मात् परेण कर्त्रा अनुबन्धेन भक्त्यैव दर्शनादिकं भ अतः शब्दस्य भक्तिरेवेति श्रुतेः ताद्विध्यं तद्विधत्वमेतैरुपायैः श्रुतिसमानत्वभक्तेः करण प्रतिपादकत्वम् । अतः करणे कर्तृत्वोपचारा श्रुतिरुपपद्यत इति सूत्रार्थं हृदि निधाय प्र परमात्मैवेत्यादिसमग्रभाष्यं प्रधानत्वादित्यंशं विहाय व्याचष्टे । दर्शनमोक्षयोरिति । अ भाष्ये भक्त्यैवेत्येवकारसम्बन्ध इति शब्दस्य हेत्वर्थकस्य यथाश्रुतमुच्यत इत्यनेनापि सम्ब इत्युक्तं भवति । भूयश्चाननुबन्ध इति सूत्रांशव्याख्यापरं प्रधानसाधनत्वाद्भक्तिरेव कारण नोच्यत इति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वं व्याचष्टे । न च वाच्यमित्यादिना । तथ सूत्रेऽनुबन्धस्त्विति तुशब्दसम्बन्धः । भाष्ये तु प्रधानसाधनत्वाद्भक्तिरेव कारणत्वेनोच्यत तु साधनान्तराणीत्येवकारसम्बन्ध इति भावः । अत्रैव स्मृतिमिति । अनादिगुणविस्तर न्यायं सूचयन्निति पूरणीयम् । भक्तिस्थो भक्तिनामकः परमो विष्णुरनादिभ स्वानुग्रहेणेषद्व्यक्तया तया भक्त्या करणेनैनं जीवं स्वाभिमुखं कुर्यात् । परमात्मवशोऽहमिति ज्ञापयेत् । ततः परं पुनरधिकप्रसादेनाभिव्यक्तया दर्शनं यया पुनरभिव्यक्तया एतया भक्त्या मुक्तिं प्रदद्यादिति । अनादितो विद्यमानस्य भक्त्यादिगु भगवत्प्रसादेन क्रमेणाभिवृद्धस्यैव करणतया मुक्तिहेतुत्वस्योक्तत्वेन स्वतः सामर्थ्याभावा भावः । तदुक्तं न्यायविवरणे । ''अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमूमुचन् । तद्गुणसुव्यक्तिं कृत्वैनं मोचयेद्धरि''रिति । सैव इत्यस्यापीति । कथं तर्हि भक्तिरेवैन श्रुतिरित्यतो वा साधनान्तराण्यनुक्त्वा किं विशिष्य भक्तिरेव करणत्वेनोच्यत इत्यत सैवेत्युक्तमिति पूर्ववत्सङ्गतिरित्यर्थः ।

अत्राद्ये सा भक्तिः करणमेवेत्येव सम्बन्धः । द्वितीये सैव मुख्यं करणं न त्वन्या

(वाक्यार्थमुक्तावली)

भक्तिशब्देन तदुक्तौ किं कारणमित्यतः प्रधानसाधनवाचकत्वात् भक्तिशब्दस्य श
कविन्यस्तगृहीतेरिति न्यायेन तत्रस्थभगवद्ग्रहणायोपादानमिति भूयस्त्वात्त्वनुबन्ध
सुगममिति सूत्रांशस्यार्थान्तरमुक्तमिति भावः । अत एव भक्तिस्थः परमो विष्णुरि
तत्वप्रदीपे च भक्तिनामक इत्युक्तम् ।

## तत्त्वसुबोधिनी

ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ स्वातन्त्र्यनिरास
ईश्वरप्रसादद्वारकत्वनिरासादित्यर्थः । एवं पूर्वाधिकरणैरधिकारिभेदेन व्यवस्थि
क्षज्ञानस्य भक्तिसाध्यत्वे निर्णीते तस्य स्वातन्त्र्येण तत्साधनत्वं निरस्यत इत्यनन्त
रिति भावः । अन्यथेति । सामर्थ्येन व्यक्तत्वे स्वतः परमात्मनो व्यक्तत्वं न स्याति
तथा दर्शनमिति । कृष्यादिकं स्वसामर्थ्येनापि सफलं भवति परमात्मनाप्येवं राज
कमपि स्वसामर्थ्येनापि सफलं राजसेवयापीत्यर्थः । तदव्यक्तमाह हीत्यनेन गतार्थ
परिहाराय भाष्ये भक्तिरेवैनं नयति इति श्रुत्युदाहरणमित्यभिप्रेत्य तद्व्या
भक्तिसामर्थ्येनेवेति । अत्र सूत्रे चशब्द एवार्थः । दर्शनादिकमिति शेष इत्यभिप्रे
परमात्मनैवेति । आदिपदेन मुक्तिः ॥ अनेन परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं
भाष्यं सूत्रतात्पर्यकथनपरमित्युक्तं भवति । सौत्रश्चशब्द अप्यर्थः अपि तथापि
भक्तिरेवैनमिति श्रुतेस्ताद्विध्यं युक्तमिति सूत्रांश योजनामभिप्रेत्याह । तथापि
कथमित्यतस्तदुपपादकत्वेन परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति मुक्तिक
उच्यत इति प्रवृत्तं भाष्यं व्याचष्टे । दर्शनमोक्षयोरिति । अनेन भक्त्यैवेत्येवक
इतिशब्दस्य हेत्वर्थकत्वेन उच्यते इत्यनेनापि संबन्ध इत्युक्तं भवति । भूयस्त्वात्त्वनुब
सूत्रांशव्याख्यानपरं प्रधानसाधनत्वाद्भक्तिरिति भाष्यं तन्निवर्तनीयाशङ्कापरिहारपूर्वकं
॥ न च वाच्यमित्यादिना । तथा च सूत्रे अनुबन्धस्त्विति संबन्धः । भ
प्रधानाद्भक्तिरेव कारणत्वेनोच्यते इति न तु साधनान्तराणीत्येवकारसंबन्धः । सैवे
इति ॥ कथं तर्हि भक्तिरेवैनमिति श्रुतिरित्यतो वा साधनान्तराण्यनुक्त्वा किं
भक्तिरेव कारणत्वेनोच्यत इत्यतो वा सैवेत्युक्तमिति पूवसंगतिरित्यर्थः । आद्ये सा
कारणमेवेत्येवशब्दसंबन्धः । द्वितीये सैव मुख्यं न त्वन्यदित्यर्थ इति वाच्यम् । अ
प्रकारान्तरेण श्रुत्युपपादनेनेत्यर्थः सूत्राक्षरार्थस्तु चशब्द एवार्थः । एवं च

(तत्त्वसुबोधिनी)

परमात्मनैवदर्शनादिकं भवतीति संबन्धः । चः अप्यर्थे । तथापि शब्दस्य ताद्वि
तादृशार्थप्रतिपादकत्वं स्वातन्त्र्येण साधनत्वाप्रतिपादकत्वं युक्तं परमात्मदर्शनोक्तेः मुख्य
कारणत्वेनोच्यमानत्वात्तथापि साधनान्तराण्यपहाय किं भक्तिरैव विशिष्याभिधीयत इ
उक्तं अनुबन्धस्तु भक्तिस्तु भूयस्त्वात् प्रधानत्वादिति विशिष्योच्यते । यद्वा परेणैव वाच
निमित्तेन भक्तिरेवैनमिति शब्दस्य ताद्विध्यं स्वातंत्र्येण कर्तृत्वप्रतिपादकत्वं युक्तमित्यर्थः

## वाक्यार्थविवरणम्

उपासनसाहित्येनोक्तेति । उपासनं प्रति सहकारित्वेनोक्तभक्तिरित्यर्थः । स्वा
न्त्र्येति । भगवदपरोक्षज्ञानादिजनन इत्यर्थः । अव्यक्तत्वेऽपि भक्तेरेव स्वातन्त्र्ये भक्तिरू
पुरुषप्रयत्नेनैव भगवतो व्यक्तत्वप्राप्त्या 'तदव्यक्तमाह हि' इत्यत्रोक्तमव्यक्तत्वं
स्यादित्यर्थः । कृष्यादाविति । धान्यादिरूपफलं कर्षणादिसाधनसामर्थ्येनैव दृष्टम् । भृ
राजसेवादौ कृते सति धनप्राप्तिरूपं फलं प्रसन्नेन राज्ञैव भवदृष्टम् । ज्ञानमपि फलम्
अतस्तत्किं भक्तिरूपसाधनसामर्थ्येनैव भवति उत प्रसन्नेन परमात्मनैवेति सन्देह इत्यर्थ
'भक्तिरेवैनम्' इति श्रुतिः (श्रुताः) भक्तिरेवैनं जीवं प्रति एनं–परमात्मनं दर्श
भक्तिरेवैनं जीवं एनं–परमात्मानं नयति–प्रापयति । पुरुषः हरिर्भक्तिवशः भक्तिपराध
इत्यर्थः । प्रवचनं–व्याख्यानम् । आदिपदेन भक्त्यादिपरिग्रहः । तस्यार्थे–तदर्थं तद्दर्शना
मित्यर्थः । तत्र वायुरूपाधिष्ठाने । तस्य–अधिकारिणः । सर्वैरपि वासना
मूर्तिर्ध्यातव्या। तदन्तस्तदाकारा मुख्यप्राणमूर्तिर्ध्यातव्येति । 'प्रतिमां-प्रतिमान्तस्स्थ
इत्यादिना तन्त्रसारे स्पष्टम् । अतो वायुरूपाधिष्ठाने आविर्भवतीत्युक्तं युक्त
ज्ञातव्यम्। करोति–दर्शनमोक्षौ जीवस्य ददातीत्यर्थः । अत्र– 'भक्तिरेवैनम्' इति श्रुतौ
तथा च हन्ता रामशर इतिवत् करणे कर्तृत्वोपचार इति भावः । उक्तविशेषश्रुतीति
एतैरुपायैर्यतते इति प्रवचनभक्त्याद्युपायानां करणत्वाभिधायकविशेषश्रुतीत्यर्थः । भ
भक्तिस्थः– भक्तिविषयः । परमः विष्णुः तयैव भक्त्यैव एनं–जीवं वशं–स्ववशम् । नये
पापयेत् । स्ववशं कुर्यादित्यर्थः । यातः–प्राप्तः सन् । पूर्ववदिति । परमात्मन
दर्शनादिकर्तृत्वे कथं तर्हि भक्तेरेव तत्साधनत्वाभिधायकश्रुतिरुपपद्यत इत्यत आह– सै
॥ दर्शनादिकं विष्णुर्भक्त्यैव करोतीत्येवं ईशितुः विष्णोः सा भक्तिः करणमेव

विशिष्याभिधीयत इत्यतः परमित्युक्तम् । प्रधानकरणमित्यर्थः । तथा च प्रधानसाध
त्वाद्विशिष्य तदुक्तिरिति पूर्ववत्संगतिरित्यर्थः । तथा च सूत्रे चशब्द एवार्थोऽप्यर्थश्च
दर्शनादिकं भवतीति शेषः । एवं च परेणैव–परमात्मनैव दर्शनादिकं भवति, न भक्त्या
अपि– तथापि शब्दस्य 'भक्तिरेवैनमि'ति श्रुतेः ॥ ताद्विध्यम् ॥ मोक्षप्रतिपादक
युज्यते। परमात्मैव भक्त्या दर्शनादि करोतीति करणे कर्तृत्वोपचाराङ्गीकारात् । 'हन्त
रामशरः' इतिवत् । साधनान्तराण्यनुक्त्वा विशिष्य भक्तिः कस्मादुच्यत इत्यत उक्तम्
भूयस्त्वादिति । अनुबन्धः– भक्तिरितरसाधनान्तराणि विहाय विशिष्योच्यते । भूयस्त्वात्
साधनेषु प्रधानत्वादिति सूत्रार्थः । एवं सति 'भक्तिरेवैनमि'ति श्रुत्यर्थः कथमित्यत उक्त
'ब्रह्मैवेनं नयति' इत्यादीति । वाच्येन– भक्तिशब्दवाच्येन शब्दस्य ताद्विध्यं 'भक्तिरेवै-
नमि'ति श्रुतेः स्वातन्त्र्येण दर्शनादिकर्तृत्वप्रतिपादकत्वमित्यर्थः । पुरुषशक्तीति
भक्त्यादिरूपपुरुषप्रयत्नेनेत्यर्थः ॥

## वाक्यार्थमञ्जरी

स्वातन्त्र्यानिरासादिति ॥ भगवत्प्रसादाद्वारकत्वनिरासादित्यर्थः ॥ अव्यक्तत्वाभावेति ॥ भक्तिसामर्थ्येनैव दृष्टत्वादिति भावः ॥

ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ज्ञानं परेण च परमात्मनैव भवति न भक्त्या तर्हि 'भक्तिरेवैनमि'ति श्रुतेः का गतिरित्युक्तम् ॥ शब्दस्य ताद्विध्यमिति ॥ शब्दस्योक्तश्रुतेस्ताद्विध्यं तु भक्तिहेतुत्वप्रतिपादकत्वं भक्तेः करणत्वादुपपन्नम् । साधनांतरत्यागेन भक्तेरेवेत्युक्तिः कुत इत्यत उक्तम् ॥ भूयस्त्वात्त्वनुबन्ध इति ॥ अनुबन्धस्तु भक्तिस्तु करणेषु भूयस्त्वात्प्रधानत्वादुक्त इत्यर्थः ॥ सैवेत्यस्यापीति ॥ साधनांतराण्यनुक्त्वा किं विशिष्य भक्तिरेव करणत्वेनोच्यत इत्यतः सैवेत्युक्तमिति पूर्वसङ्गतिरित्यर्थः । तथा च सैव मुख्यं न त्वन्यदित्यर्थः ॥ ३४ ॥

## ३५. एकाधिकरणम्

**जीवांशानां पृथगुत्पत्तेर्नानादियोग्यतापेक्षेति न मन्तव्यम् । कुतः ?**

## तत्त्वप्रदीपिका

उपासनाभेदवद्दर्शनभेदः सुखतारतम्यं च प्रतिपुरुषं योग्यताविशेषादित्युक्तम्। सा चानादि
युक्तम्। अन्यथा कदाचिदसुखादीनामपि मोक्षित्वापातात्। तस्य च श्रुतिभिर्निषेत्स्यमानत्वात्
चानादित्वं नियन्तुं शक्यते। जीवांशानां पश्चादुत्पद्यमानानां भिन्नत्वोपपत्तेः। तेषु योग्यत
सादित्वादित्यत आह– एक आत्मनः शरीरे भावात्॥ यथांऽशी शरीराच्छरीरा
स्वकर्मनिर्मितमेव प्राप्नोति। यदा त्वंशेन शरीरान्तरं प्राप्नोति तदाऽपि तथैव स्वकर्मनिर्मितमे
अतः शरीरान्तरवर्ती सन्नप्यंशोंऽशिनैक एव॥

## तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासनस्य योग्यतासापेक्षत्वसाधनादस्ति शास्त्रादिसंगतिः
अन्यथोपास्त्यव्यवस्थाप्रसङ्गात्तत्समर्थनीयम्। प्रकृतोपासनादि विषयः। योग्यतापेक्षं न
सन्देहः। योग्यायोग्यक्रियादर्शनं सन्देहबीजम्। पूर्वपक्षयति॥ जीवेति॥ नोपासन
योग्यतापेक्षाऽस्ति। योग्यता हि भवन्ती अनादिर्भवेत्। अन्यथा तदुपासनादेरप्यागन्तुक
संभवात्। न चानादित्वं योग्यताया युज्यते। इन्द्रादिजीवांशानामर्जुनादीनां योग्यताया
दभावात्। तेषामेवोत्पत्तिमत्त्वेन तद्धर्मस्यानादित्वायोगात्। न चांशिनोऽनादित्वादंशस्योत्प
भावः। अशांशिनोः पृथक्त्वात्। कुतः। अंशिनि ज्ञानिनि सुखिनि दुःखिनि च
ज्ञानाद्यभावेनांशस्यांशि (वर्त्मागन्तृत्वात्) वर्त्मनागन्तृत्वात्। अन्यथा ज्ञानादिभेदो न स्या
अतोंऽशांशिनोः पृथक्त्वादंशस्योत्पत्तेरनादियोग्यताभावादुपासनादेर्योग्यतापेक्षा नास्तीति तद
स्थितमिति भावः। पूर्वपक्षं प्रतिषेधति॥ नेति॥ कुतो न मन्तव्यमित्याक्षिपति॥ कुत इ
तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे॥ एक इति॥ अस्त्येव सर्वेषामुपासनादौ योग्यतापेक्षा
चांशस्योत्पत्तिमत्त्वेऽनादियोग्यताभावः। अंशोंऽशीत्येक एवेत्यंशस्योत्पत्त्यभावात्। तदैक्य
कुतः। आत्मनोंऽशिनः कर्मनिर्मितशरीरेंऽशस्य वर्तमानत्वात्। न च भेदे तद्युक्तम
अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्। न चांशस्य पृथक्कर्मास्ति। न चाकर्मनिमित्तः शरीरसं
युक्तः। अपवर्गाभावप्रसङ्गादिति भावः॥ ५५॥

## गुर्वर्थदीपिका

आगन्तुकत्वप्रसङ्गादित्यत्रागन्तुकत्वं नाम यस्य यस्यापेक्षा तस्य तस्य प्राप्तिरित्यर्थ
अंशांशिनोः पृथक्त्वादित्यत्रांशांशिनोः पृथक्त्वादंशस्योत्पत्तिरेव। अतस्तन्निष्ठा योग्यताऽ

प्रसङ्गादित्यत्र शरीरपरम्परायाः कर्मोपाधिनिबन्धनत्वाभावे स्वाभाविकत्वप्रसङ्गेन स्वाभाविकस्य च कदाऽप्यनपायादिति भावः ।

## भावबोधः

ओं एक आत्मनः शरीरे भावात् ओं ॥ ५५ ॥ योग्यतासाधनसापेक्षत्वादिति । अत्र पूर्वाधिकरणे न्यायविवरणोक्तरीत्याऽऽनादिभूतायाः भक्तेः करणत्वोक्तौ जीवांशानामुत्पत्तिमत्त्वेनानादिभूततत्तद्योग्यताया एवाभावेन कथं जीवस्वरूपानुबन्धित्वेन भक्त्यादेरनादित्वमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । योग्यतेत्यादि । अत्रोपासनायोग्यता सापेक्षा न संभवत्युत संभवतीति चिन्ता । तदर्थं योग्यताया अनादित्वं न संभवत्युत संभवतीति । तदर्थमंशानामर्जुनादीनामुत्पत्तिरस्त्युत नास्तीति । तदर्थं किं अशांशिनोर्भेद उताभेद इति । तदर्थं तयोः परस्परं सुखदुःखज्ञानाद्यनुसन्धानं नास्त्युतास्तीति । पृथक्त्वादिति । अनेन भाष्ये पृथक्त्वेनोत्पत्तिः पृथगुत्पत्तिरिति विग्रहः प्रदर्शितो भवति । पृथक्त्वे हेतुप्रतिपादकत्वेनांशिमार्गस्यांशेनागम्यत्वात् तयोर्भेद इति न्यायविवरणं संयोजयति– अंशिनीति । एक एवेति । अनेन पूर्वसूत्रादवधारणार्थक चशब्दस्यानुवृत्तिर्वा ''सर्वं वाक्यं सावधारणं'' इति न्यायेन वा सौत्र एकशब्दः सावधारण इत्युक्तं भवति । अत्र सूत्रे ''आत्मनः'' इत्यंशस्यांशांश्युभयपरत्वमंशिकर्मनिर्मितत्वं च षष्ठ्यर्थ इत्यभिप्रेत्य प्रवृत्तमंशिकर्मेत्यादिभाष्यं व्याचष्टे– आत्मनोंऽशिन इति । अकृतेति । अंशस्याकृताभ्यागमनमंशिनः कृतविप्रणाश इत्यर्थः ॥

ननु नांशिकर्मनिर्मितशरीरे अंशस्य भावोऽस्ति, स्वकर्मनिर्मित एवावस्थानोपपत्तेरिति अत अन्यथा दृष्टं विना शरीराद्यनुपपत्तेरिति न्यायविवरणांशस्यार्थमाह– न चांशस्येति । एतच्छरीरसंबन्धात् पूर्वमर्जुनादीनामिन्द्राद्यंशिव्यतिरेकस्यैवाभावादिति भावः । अत्र सूत्रे तुशब्द एवार्थः ।

## भावदीपः

ॐ एक आत्मनः शरीरे भावात् ॐ ॥ योग्यतेति ...

(भावदीपः)

भाष्याद्युक्तदिशा आदिभक्त्यादिसंपत्तिरूपयोग्यतासापेक्षत्वस्यैवोपासनादावयोगादिति श
नात्पूर्वसंगतिरपि सूचिता ॥ अव्यवस्थेति ॥ असुरादीनामपि तत्प्रसंगादित्यर्थः । तथा
सर्वथापि तु त एवेत्यादिवक्ष्यमाणविरोध इति भावः ॥ उपासनादीति ॥ दृष्टिरादिपदार्थः
योग्यतेति ॥ अनादिभक्त्यादिगुणपूगसंपत्तिसापेक्षं न वेत्यर्थः । ऐश्वर्यात्परमाद्विष्
र्भक्त्यादीनामनादित इत्यादिस्मृत्या स्थानविशेषादित्यत्र तथैव योग्यतास्वरूपोक्तेः
तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगत इत्यादिस्मृत्या अनुबन्धादिभ्य इत्यत्रोक्तयापि त
प्रतीतेः । अदृष्टानियमादित्यत्र चन्द्रिकायां तथैव व्यवहाराच्च ॥ योग्यायोग्येति ॥ ल
पुंसां स्वयोग्यक्रिया स्वायोग्यक्रिया च दृश्यत इति तदेव सन्देहबीजमित्यर्थः ।
योग्यस्यायोग्यस्य च पुंसः क्रियादर्शनमित्यर्थः । शेषोक्तिपूर्वं व्युत्क्रमेण भाष्यं व्याचष्टे
नोपासनेति ॥ अनादीति पदं पूर्वपक्षोपपादकत्वेन व्याचष्टे ॥ योग्यता हीति
आगंतुकत्वेति ॥ तथा चासुरादीनामपि तत्प्रसंग इति भावः । परंपराहेतुत्वेन भाष्योक्तं
योजयति ॥ इन्द्रादीति ॥ पृथगिति भाष्यस्थं शङ्कापूर्वं हेतुत्वेन व्याचष्टे ॥ न चांशिन
॥ पृथक्त्वेनोत्पत्तिरिति भाष्ये विग्रह इति भावः । पृथक्त्वहेतोरसिद्धिनिरासाय
ज्ञानादिभेद इत्यादिद्वितीयसूत्रभाष्यसूचितम् । अंशिमार्गस्यांशेनागम्यत्वादित्यन्यत्रोक्तं
विवृण्वन्नेवात्र योजयति ॥ अंशिनीति ॥ वर्त्मागंतृत्वात् भिन्नमार्गत्वादित्यर्थः । वर्त्म
पाठे तद्व्यापाराज्ञातृत्वादित्यर्थः । हेतोरप्रयोजकत्वं निराह ॥ अन्यथेति
अंशांशिनोरपृथक्त्वे इत्यर्थः । अन्यत्रोक्तहेतुपूर्वकं भाष्यार्थमुपसंहरति ॥ अत इति
ज्ञानादिभेदेनांशस्यांशिवर्त्मागंतृत्वादित्यर्थः । फलमाह ॥ तदिति ॥ अनियतं स्यादित्यर्
तथा च प्रज्ञान्तरपृथक्त्ववदित्यत्रोपासनाभेदवद्दर्शनभेद इति यदुक्तं यच्च यावदधिकारमि
सुखतारतम्यं योग्यताविशेषाधीनमित्युक्तं यच्च प्राप्तेश्च समंजसमिति तत्सर्वमसमं
स्यादिति भावः ॥ पूर्वभाष्यलब्धप्रतिज्ञामाह ॥ अस्त्येवेति ॥ प्रागुक्तचोद्यमनूद्य तन्नि
कत्वेन भाष्यं व्याचष्टे ॥ न चांशस्येत्यादिना ॥ अंशांशिनोरेकत्वमेवेति भाष्यमेक
सूत्रांशारूढं करोति ॥ अंश इति ॥ कुत इति भाष्येण सामानाधिकरण्यलाभाय भ
शेषमाह ॥ इत्येक इत्यादि ॥ अंशीत्यादिभाष्यं संगमयन् व्याचष्टे ॥ तदिति
उत्सूत्रत्वशङ्कानिरासायात्मनोंऽशिन इत्युक्तम् ॥ अकृतेति ॥ स्वाकृतकर्मनि
स्वस्यावस्थानेनाकृताभ्यागमस्यान्यकर्मनिर्मितदेहे स्थित्वा कृतस्य कर्मणः स्वाभोज्य

(भावदीपः)

स्वकर्मार्जितदेहयोगस्य वा सर्वथा कर्मनिरपेक्षदेहयोगस्य वा अर्जुनाद्यंशस्योपपत्तेरित्याशंक्यादृष्टं विना शरीराद्यनुपपत्तेरिति न्यायविवरणोक्तेरंश्यदृष्टं विना सर्वथादृष्टं विनेति चार्थद्वयमुपेत्य निराह ॥ न चेति ॥ न चाकर्मेति ॥ नापीत्यर्थः । कुतो न युक्त इत्यतः शरीरादीत्यादिपदार्थमाह ॥ अपवर्गेति ॥ कर्मानिमित्तत्वे स्वाभाविकत्वापत्त्या कर्मावसानरूपनिवर्तकाभावेन देहयोगस्य कदाप्यनिवृत्त्या मोक्षाभावप्रसंगादित्यर्थः ॥ ५५ ॥

## वाक्यार्थमुक्तावली

ॐ एक आत्मनः शरीरे भावात् ॐ ३-३-५५ ॥ उपादानस्य योग्यतासापेक्षत्वसमर्थनादिति । अत्रोपासनस्येत्युपलक्षणम् । तत्साहित्येनोक्तभक्तेरिति च ग्रहणम् । अत एवोपासनादिविषय इति वक्ष्यति । तथा चानादित्वेनोक्तायाः भक्तेः योग्यतासापेक्षतासमर्थनादनन्तरसङ्गतिरिति भावः । अन्यथेति । योग्यतासापेक्षत्वाभावे योग्यतानुसारेण गुणनियमोपदेशभावेनोपास्त्यव्यवस्थाप्रसङ्गात् । इतरे त्वर्थसामान्यादित्युक्तं स्यात् । भक्तेरनादित्वं चोक्तं न स्यादिति भावः। प्राकृतेति । उपासनादि योग्यतासापेक्षं न भवत्युत भवतीति चिन्ता । तदर्थं योग्यताया अनादित्वं न सम्भवत्युत सम्भवतीति । तदर्थमिन्द्राद्यंशानामर्जुनादीनामंशभेदेनोत्पत्तिरस्त्युत भेदेनोत्पत्तिर्नास्तीति । भाष्ये नानादियोग्यतापेक्षेत्यनादियोग्याताक्षेप उच्यते । स च द्वेधा सम्भवति । योग्यापेक्षामङ्गीकृत्य योग्यताया अनादित्वाक्षेपेण वा योग्यातानादित्वमङ्गीकृत्योपासनादेः तदपेक्षत्वमात्राक्षेपेण वोभयाक्षेपेण वा । नाद्यः । पादासङ्गतेः । न द्वितीयः । जीवांशानां पृथगुत्पत्तेरिति हेत्वसङ्गतेः । न तृतीयः । योग्यतानादित्वस्योपासनाङ्गतया सिद्धया नातिवक्तव्यत्वेन तदाक्षेपवैय्यर्थ्यात् । उपासनायोग्यतानपेक्षत्वे हेत्वनुक्तेश्चेत्यत उभयाक्षेपोऽत्र विवक्षितः । तत्र योग्यतापेक्षत्वाभावे तस्या अनादित्वाभावो हेतुः । सिद्धान्तिना योग्यतापेक्षत्वायैव तदनादित्वस्यावश्यमङ्गीकार्यत्वादिति भावेन व्याचष्टे । नोपासनाद्यर्थमित्यादिना । अनादिर्भवेदिति । अनादिरिति त्वयाङ्गीकर्तव्या भवेदित्यर्थः । अन्यथेति । सादित्वे योग्यता व्यर्था । ब्रह्मादिषु योग्यतावैचित्र्यवत् । उपासनावैचित्र्यस्याप्यागन्तुकत्वसम्भवादित्यर्थः । उपलक्षणमेतत् । अन्यथा कदाचिदसुराणामपि मोक्षित्वापातात् । तथा चोपास्तिव्यवस्थायोग इति तत्वप्रदीपरीत्याप्यतिप्रसङ्गो द्रष्टव्यः । पृथक्त्वादिति । अनेन भाष्ये पृथगित्यस्य पृथक्त्वे-

(वाक्यार्थमुक्तावली)

सूत्रे पूर्वसूत्रावधारणार्थकश्चशब्दोऽन्वेति । आत्मनीति षष्ठ्यन्तं विभक्तिविपरिणा प्रथमान्तं च विवक्षितम् । तथा चात्मांशोंऽशीत्येक एव । कुतः । आत्मनोंऽशि सम्बन्धिनि तत्कर्मनिर्मिते शरीर एवात्मनोंऽशस्य भावादिति सूत्रार्थमभिप्रेत्य व्याचष्टे । इति । अकृताभ्यागमेति । अंशस्याकृताभ्यागमः । अंशिनस्त्विंद्रादेरर्जुनादिदेहप्रापकक नाशप्रसङ्ग इत्यर्थः । तदुभयमुपपादयति । न चांशस्येति । अर्जुनदेहापादकं इन्द्र विनाऽर्जुनस्य पृथक्कर्म न चास्तीत्यर्थः । तथा चेन्द्रकर्मवैयर्थ्यमर्जुनशरीरं चाकारणकमि भावः । अकृताभ्यागमः को दोष इत्यत आह । न चेति । अपवर्गेति । कर्माभावे बन्धकशरीरसंयोगेऽपि मोक्षोऽपि तथा स्यादिति भावः ।

## तत्त्वसुबोधिनी

ॐ एक आत्मनश्शरीरे भावात् ॐ । योग्यतायाः एव अभावेन तत्स्वरूपानुबन्धित भक्त्यादेरादित्वमित्याक्षेपोत्थानादनन्तरसंगतिरिति भावः । अन्यथेति । योग्यतास क्षत्वाभाव इत्यर्थः । तद्वत् योग्यताया आगन्तुकत्ववत् । तदभावात् अनादित्वाभावात एक एवेति । अनेन पूर्वसूत्रात् अवधारणार्थकचशब्दस्यानुवृत्तिं मत्वा सर्वं व सावधारणमिति न्यायेन वा सौत्र एकशब्दसावधारण इत्युक्तं भवति । अत्र सूत्रे आत्म इत्यस्यांशाभ्युपगमपरत्वमंशिकर्मनिर्मितत्वं च षष्ट्यर्थ इत्यभिप्रेत्य प्रवृत्तिमंशिकर्म इत्या भाष्यं व्याचष्टे । आत्मनोंऽशिन इति । अकृतेति । अंशस्याकृताभ्यागतमंशिनः प्रमाणांश इत्यर्थः । ननु नांशिकर्मनिर्मितशरीरेंऽशस्य भावोऽस्ति स्वकर्मनि एवावस्थानोपपत्तेरित्यत आह । न चांशस्येति । एतत् शरीरसंबन्धात्पूर्वं अर्जुनाद इन्द्राद्यंशव्यतिरेकस्य चाभावादिति भावः । न च कर्मानिर्मित एवास्य शरीरसंयोगः स्यादित्यत आह । न चेति । अपवर्गेति । कर्मानिमित्तकतच्छरीरसंसर्गस्य कदाप्यपग संभवादिति भावः ।

## वाक्यार्थविवरणम्

अव्यवस्थाप्रसंगादिति ॥ अयोग्येनापि कर्तव्यताप्रसंगादित्यर्थः । तद्वत्–योग्यताव प्रसंगात्–जीवधर्मत्वाविशेषादित्यर्थः । तदिति– अनादित्वेत्यर्थः । कुत इत्यत अ

संबन्धो द्रष्टव्यः । पृथगित्यस्य निवर्त्याशङ्कामाह– न चेति । पृथक्त्वात्– भेदादित्यर्थ तथा च पृथक्–पृथक्त्वादित्यर्थो द्रष्टव्यः । अन्यथा–पृथक्त्वाभावे । ज्ञानादिभेदः अंशा नोरित्यर्थः । तत्तु–उपासनम् । सूत्रे एक इत्यस्यापेक्षितपूरणेनार्थमाह–अंशः अंशी चे एवेति । आत्मन इत्यस्य अर्थान्तरमाह– अंशस्येति । न चेति । अंशांशिनोर्भेदे त अंशकर्मनिर्मितशरीरे अंशस्य वर्तमानत्वं न हि युक्तमित्यर्थः । कुतो न युक्तमित्यत अ अकृतेति । अंशस्य कर्माभावेऽपि शरीरप्राप्त्या अकृताभ्यागमः । अंशिकर्मणोंऽ प्रत्यप्रयोजकतया अंशिनः कृतप्रणाश इत्यर्थः । नन्वेतावता अंशिकर्मनिर्मितशरीरे अंश वर्तमानत्वाभावेऽपि स्वकर्मनिर्मित एवावस्थानोपपत्तेर्नाकृताभ्यागमप्रसंग इत्यत आह– चांशस्येति । पृथक्कर्मेति । अंशिकर्मव्यतिरिक्तकर्मेत्यर्थः । ननु नाकृताभ्यागमो दोषाय मया कर्माभावेऽपि शरीरसबन्धप्राप्त्यङ्गीकारादंशस्येत्यत आह– न चाकर्मेति अकर्मनिर्मितशरीरसंबन्धः– कर्मनिर्मितशरीरसंसर्गाभावः । कर्माभावेऽपि शरीरसंबन्ध यावत् । कुतो न युक्त इत्यत आह– अपवर्गेति । यदि कर्माभावेऽपि शरीरसंबन्धोऽङ्ग क्रियते तर्हि सर्वदा शरीरसंबन्धस्यैव प्राप्त्या अंशस्यापवर्ग एव न स्यादिति भावः ।

## वाक्यार्थमञ्जरी

अंशिवर्त्मनेति ॥ अंशिमार्गेण गन्तृत्वादित्यर्थः । अन्यथा अभेदे ॥ ॐ आत्मनश्शरीरे भावात् ॐ ॥ अंशोऽर्जुनः अंशिनेंद्रेणैकः अभिन्न एव कु आत्मनोंऽशिनः कर्मनिर्मिते शरीरे आत्मनोंऽशस्य भावात्सत्वादित्यर्थः ॥ अकृतेति अंशस्याकृत कर्मभोगापत्तिरंशिनः कृतकर्मनाशादित्यर्थः । ननु नांशिकर्मनि शरीरेंऽशोऽस्ति किन्तु स्वकर्मनिर्मित एवेत्यत आह ॥ न चांशस्येति ॥ एतच्छरीरसम्बन्ध त्पूर्वमर्जुनस्येन्द्रशरीरं विना कर्मापादकशरीरांतराभावादिति भावः । तर्हि मास्तु कर्मेत्याह न चेति ॥ अपवर्गेति ॥ शरीरसंसर्गस्य कर्मनिर्मितत्वे यावत्कर्मनाशेन सर्वथा शरीरसम् न्धध्वंस रूपो मोक्ष उपपद्यते कर्मानियतत्वे च तस्यानागन्तुकत्वेन कदाप्यनपाय दुक्तमोक्षाभावप्रसङ्ग इत्यर्थः ॥

## सूत्रभाष्यम्

॥ ॐ [illegible] ॐ

(सूत्रभाष्यम्)

अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणे'ति ॥ ५६ ॥

॥ इति एकाधिकरणम् ॥ ३५ ॥

## तत्त्वप्रदीपिका

अंशिनः सुखेऽप्यंशस्य दुःखमंशिनो महाज्ञानेऽप्यंशस्याल्पज्ञानमिति सुखज्ञानादीनां व्यवस्थि तत्वात् । भेद इत्यत आह– व्यतिरेक इत्यादि सूत्रम् । तद्भावभावित्वादिति सूत्राक्षरा तदुपासनादिभोगादिति व्याख्याति । ''भावो वृद्धिः समुद्दिष्टः क्वचिद्भावो मनः स्मृत'' इति शब्दनिर्णये । ज्ञानसुखादिभेदेऽपि नांशांशिनोर्भेदः । तदुपासनाकर्मादिनैव ज्ञानसुखादिभोग दंशस्य। अंशिन एवाज्ञानदुःखनिमित्तसद्भावेन तद्भोगादंशस्य । अन्यथा देहदैहिकभोगानाम कस्मिकत्वेन सर्वसङ्करप्रसङ्गात् । एकस्य युगपत्सुखदुःखे एकस्मिन्नेव ज्ञानाज्ञाने च विरुद्धे चेन्मैवम् । यस्य यदा वा कृत्स्नाज्ञानदुःखाभावस्तत्र सर्वरूपेषु ज्ञानसुखाभ्यामेव भाव्यम् । अन त्वंशिनोऽपि ज्ञानाज्ञानसुखदुःखदर्शनादविरुद्धं भाति च विशदं न भातीति ॥

## तत्त्वप्रकाशिका

ज्ञानादिभेदादंशांशिनोर्भेद एव । अतो नांशस्योत्पत्तिमतोऽनादियोग्यता युक्तेत्याश परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ व्यतिरेक इति ॥ यथोपलब्ध्यादौ व्यतिरेकस्तथांशांशिनोरपि एवेति न वाच्यम् । अल्पे ज्ञानादावनुसंधानाभावेऽपि प्रधानसाधनोपासनादिफलानुसंधानात् अंशगतज्ञानादेरंशिनाऽनुसंधीयमानत्वात् । अंशिगतस्य चांऽशेन सर्वस्याननुसंधानमीश्वराचिन्त शक्त्यायत्तमिति भावः । अत्र स्मृतिं प्रमाणयति ॥ परमेति ॥ अतोऽस्त्येव सर्वेषामुपासनादा नादियोग्यतापेक्षेति युक्ता तद्व्यवस्थेति सिद्धम् ॥ ५६ ॥

## गुर्वर्थदीपिका

उपासनादिफलानुसन्धानादित्यत्रोपासनादि फलमपरोक्षज्ञानिनोऽपीन्द्रस्य नित्यपरो भावेन मध्ये मध्य उपास्यबिम्बापरोक्षदर्शनं तस्यानुसन्धानादंशेनानुसन्धानादित्यर्थः अंशगतसर्वानुसन्धानाभावेऽपि तस्य बिम्बदर्शनेऽयमपि बिम्बं पश्यति । इदं चानुसन्धानं सति कथं स्यात् । अंशी त्वंशगतं सर्वमनुसन्धत्ते । अंशस्तु मानुषशरीरादिदो

सुमनसा''मिति वचनात्स्वस्वबिम्बदर्शनस्य निरुपाधिपरमेष्टानुभवरूपत्वेन बलीयस्त्व द्बलादस्यानुसन्धानं जायते । यथा स्वस्कन्धगतं वस्त्रादिकं सदाऽननुसन्दधदपि पुरु स्वशिरस्थितपाषाणादिभारं बलीयस्त्वादनुसन्धत्ते तद्वदिति भावः । एवं च तस्यांशि भावेन भावनया ध्यानेन स्वस्यापि भावित्वं भावनावत्त्वम् । उभयत्रापि भावपदे भावनाफलदर्शनमुच्यते । तथा च तदुपास्तिफलदर्शनेन स्वस्याप्युपास्तिफलदर्शनवत्त्वादि सौत्रहेतोरर्थस्सूचितः ॥

## भावबोधः

उपलब्धिवद्व्यतिरेके एव नेति संबन्ध इत्यभिप्रेत्य प्रवृत्तं ज्ञानादिभेदे विद्यमानेऽपीति भाष्यं व्याचष्टे– यथेति । तस्यांशिन उपासनादिभोगभावे अंशगतोपासनादिभोगस्य भावित्वादिति सूत्रांशस्यार्थमभिप्रेत्य भाष्ये तदुपासनादिभोगादंशस्येत्युक्तम् । तत्साधनोत्त मस्यांशिकृतस्यांशेन भुज्यमानत्वादिति न्यायविवरणानुसारेण व्याचष्टे– प्रधानेति न्यायविवरणस्य साधनोत्तमस्येत्यस्य अभिप्रायकथनमल्पे ज्ञानादाविति ।

''अंशिनोऽशेषसन्धानमत्यल्पस्यापि विद्यते''

इत्यनुव्याख्यानं मनसि निधायाह– अंशगतज्ञानादेरिति । सर्वस्यापीत्यर्थः । ''विशेषस्तु कश्चिदीशकृतो भवेत्'' इत्यनुव्याख्यानं मनसि निधायाह– अंशिगतस्येति । अत्र प्रथमे अंशांशिनोरेकत्वे हेतूक्तिः । द्वितीये बाधकोद्धारः ॥ ३५ ॥

## भावदीपः

ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ॥ उपलब्धिवदिति शेषोक्तिपूर्वं नेत्यादिभाष्यं सूत्रारूढं दर्शयन् सूत्रभाष्ये च व्याचष्टे ॥ यथेति ॥ अप्यन्तभाष्यस्य हेतूक्तिपरभाष्येणाऽन्वयमुपेत्य व्याचष्टे ॥ अल्प इति ॥ साधनोत्तमस्यादृष्टस्यांशिकृतस्यांशेन भुज्यमानत्वादित्यन्यत्रोक्त्यनुरोधेनोक्तम् ॥ प्रधानसाधनेति ॥ अंशिनोऽशेषसंधान- मत्यल्पस्यापि विद्यते ।

भुवि जातेन चांशेन सुखदुःखादि तद्गतम् । अनुभूयते विशेषस्तु कश्चिदीशकृतो

## वाक्यार्थमुक्तावली

ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ३-३-५६ ॥ अत्र तुशब्दोऽवधारणे आत्मन इति वर्तते । उपलब्धिपदं सुखादेरुपलक्षणमित्यभिप्रेत्योपलब्धिवदित्यस्य तात्प कथनपरं ज्ञानादिभेदे विद्यमानेऽपीति भाष्यमिति चाभिप्रेत्य सूत्रार्थमाह । यथेति एतेनोपलब्धिवदुपलब्ध्यादौ ज्ञानादाविवात्मनोंऽशस्यांशिनश्च व्यतिरेक एव भेद एवेति वाच्यमिति सूत्राक्षरार्थ उक्तो भवति । ज्ञानादौ भेदो नामानुसन्धानाननुसन्धानवैलक्षण्यम दृष्टान्तकथनस्यायमभिप्रायः । ज्ञानादौ यथाऽनुसन्धानाननुसन्धानभेदोऽस्ति त तदनुसारेणांशांशिनोर्भेदोऽङ्गीकार्यः । अभेदेऽनुसन्धानस्य प्रयोजकत्वेन प्रकृते तदभावेन भेदायोगादिति । अन्यथा दृष्टान्तमात्रकथनस्यानुपयोग इति ज्ञेयम् । नन्वेवं भेदसाधक सत्वेन कथमंशांशिनोर्भेदाभाव इत्यतः ज्ञानादिभेदोऽप्रयोजक इति भावेन प्रवृत्तं ज्ञानादि विद्यमानेऽपि तदुपासनादिभोगादंशस्येति भाष्यं साधनोत्तम इत्युक्तन्यायप्रदर्शकत व्याचष्टे। अल्प इति । एतेन सूत्रे भावशब्द आवर्तते । आद्यो ज्ञानपरः । भवतेरनुभवा कत्वात् । उपासनेति यावत् । प्रज्ञान्तरपृथक्त्ववदित्युक्तत्वात् । भावो भावना ध्यानमि वा । यद्वा भावो मनः, "भावो वृद्धिः समुद्दिष्टः कचिद्भावो मनःस्मृतः" इति तत्वप्र शब्दनिर्णयोदाहरणात् । तेन च मानसी क्रियोच्यते । द्वितीयस्तु तज्जन्यवृद्धिशब्दितफलप भावो वृद्धिरित्युक्तेः । भावित्वादिति । भाववत्वात् अनुसन्धानवत्वादित्यर्थः । त चात्मनोंऽशस्य तद्भावभावित्वात्तस्यांशिनः भावस्योपासनायाः भावः फलं तद्भावः त भावित्वादनुसन्धातृत्वादिति सूत्राक्षरार्थः । आत्मनोंऽशिनस्तदुपासनादिभोगादंशगतोपासन सुखादिति सर्वसुखादिति सूत्रार्थं भाष्ये चांशिन इति शेषं च मत्वा व्याचष्टे । अंशगतेति कथमयं विशेष इत्यतो विशेषस्तु कश्चिदीशकृतो भवेदित्यनुव्याख्यानं मनसि निधायाह अंशिगतस्येति । अत्राद्येंऽशांशिनोरभेदे हेतूक्तिः। द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अत्र सूत्रे तुशब्द एवार्थः । उपलब्धिर्व्यतिरेक एव न तु संबन्ध इत्यभिप्रेत्य प्र ज्ञानादिभेदेऽपीति भाष्यं व्याचष्टे । यथेति । अंशिनः उपासनादिभोगाभावे अंशो सनादिभोगस्य भावित्वादिति सूत्रांशस्यार्थमभिप्रेत्य भाष्ये तदुपासनादिभोगादंशस्येत्युक्तम्

अंशेन कुतो नानुसंधीयत इत्यत आह । अंशिगतस्येति । अत्र प्रथमे अ
हेतूक्तिः द्वितीये बाधकोद्धारः ॥ ३५ ॥

## वाक्यार्थविवरणम्

व्यतिरेकः भेदः । तथा चोपलब्धिवदंशांशिनोर्व्यतिरेको न त्विति
प्रधानसाधनेति । भवत्यादिसाधनोत्तमेत्यर्थः । तथा च 'तद्भावभावित्व
तस्यांशिन उपासनाजन्यसुखादिभोगभावे सति अंशस्यापि तद्भोगस्य–
भावित्वादित्यर्थः । तद्भावभावित्वादित्यंशस्य तस्यांशस्य ज्ञानादिभावे
तद्भोगस्य भावित्वादित्यर्थान्तरमभिप्रेत्याह– अंशेति । परमेतीति । तस्यैव
कर्मणा अंशिनः सकाशात् पृथग्जाता ये अंशास्तेंऽशिना पुनरैक्यं प्रपद्यन्त इत

## वाक्यार्थमञ्जरी

ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ॥ उपलब्धिवत्
अंशांशिनोरपि व्यतिरेकोभेदो न तु नैव ॥ कुतः ॥ तद्भावभावित्वात्
भावेनोपासनेनांशस्य भावित्वात्तत्फलभोक्तृत्वादित्यर्थः । इतश्च न भेद इत्य
अंशगतज्ञानादेरिति ॥ सर्वस्येत्यर्थः अभेदेंशस्यांशिगतसर्वाननुसन्धानं कथमित्य
अंशिगतस्येति ॥ ३५ ॥

## ३६. अङ्गावबद्धाधिकरणम्

**॥ ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ ५७ ॥**

**ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते । हि**

**'समत्वाद्वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।**
**उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिनः' इति ब्रह्मतर्कवचनात् ॥ ५७ ॥**

## तत्त्वप्रदीपिका

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥** यद्यपि प्रतिशाखं प्रतिवेदं च
परिवारदेवतानां उपासनापूजानमस्काराद्युच्यते । तथाऽपि तन्नोपसंहार्यम् ।
समानानामुत्तमानां चेति हिशब्दसूचितब्रह्मतर्कवचनादवगन्तव्यम् ।

(तत्त्वप्रदीपिका)

''विष्णोरङ्गसमुद्भूतेर्विष्णोरङ्गानि देवताः ।
उच्यन्ते सर्ववेदेषु स्वरूपे भेदिनोऽपित्वि''त्याध्यात्मे ॥

प्रतिशाखमित्युक्त्वा पुनः प्रतिवेदमित्युक्तिरविभक्तवेदस्य विद्यमानत्वात् ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासनस्य यथायोग्याऽङ्गदेवतोपासनयुक्तत्वेन कर्तव्यताप्रतिपादनादि शास्त्रादिसंगतिः । अन्यथा तत्प्रतिपादकवेदवैर्थ्यस्योक्ततारतम्याभावस्य च प्रसङ्गात्प्रतिपादनी मेतत् । प्रकृतं भगवदुपासनमेव विषयः । अन्यदेवतोपासनयुक्तं वा कर्तव्यं केवलं वेति सन्देह ब्रह्मोपासनविधेः साधारण्यं सन्देहबीजम् । अन्यदेवतोपासने च तस्य गुणोपसंहारपूर्वकत्व त्किमेकस्य श्रुतिप्रतीतगुणाः सर्वेषूपसंहर्तव्या न वेति सन्देहः । लौकिकपुरुषपूजादौ द्वैविध्यद सन्देहबीजम् । केवलमेव ब्रह्मोपासनं कर्तव्यमिति पूर्वः पक्षः । 'तमेवैकं जानथात्मानमन्या वा विमुञ्चथ' 'पूजयेन्नान्यदेवता' इत्यादेरन्यदेवतोपासने चैकस्य प्रतीतगुणाः सर्वेपूपसंहर्तव्याः देवत्वादिगुणानां सर्वेपूपसंहारदर्शनात् । अतोऽन्यदेवानामनुपास्यत्वात्तदभिधायकवेदवैयर्थ्यम् उपास्यत्वे वा साम्येनोपास्यत्वान्नोक्ततारतम्योपपत्तिरिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे अङ्गेति ॥ ब्रह्मादिदेवतोपासनपरिचर्यादि कार्यमेव । न च श्रुत्यादिविरोधः । तत्र प्राधान नोपसनस्यैव निषिद्धत्वात् । अङ्गत्वेनोपासनस्याभ्युपगत्वात् । उपसंहारे तु विशेषोऽस्ति सर्ववेदानां सर्वशाखासूक्तं यद्ब्रह्माद्यङ्गदेवतासंबन्धिगुणजातं तत्सर्वं रुद्रादिषु नोपसंहार्यं कि योग्यमेवोपास्यम् । यथा खलु भगवद्वाचकवाक्यानां न सर्वेषामन्यत्रान्वयोऽपि तु योग्यानामेवे भावः । कुत एतदित्यत आह ॥ हिशब्दादिति ॥ सूचितादिति शेषः । अङ्गदेवताद्युपासनं कार्य यावद्ब्रह्मादीनां गुणजातं तत्सर्वं रुद्रादिषु नोपसंहार्यम् । कुतः । भवेत्साम्येनोपासनं युक्तं यदि ते साम्यमेव स्यात् । नैतदस्ति केषाञ्चित्समत्वात्केषाञ्चिदुत्तमत्वात् । तत्कुतः वेदसिद्धा नानागुणत्वेन तेषां दृष्टेरिति भावः ॥ ५७ ॥

## गुर्वर्थदीपिका

अङ्गावबद्धा ब्रह्माद्याः परिवारदेवता अङ्गतयाऽवबद्धास्सन्त उपास्याः । 'रमाब्रह्म दयस्तस्य परिवारतयैव त्वि'ति वचनात् । न तु परमात्मवन्मुख्यतया । तत्रापि सर्ववेदोक्त स्तत्तद्देवगुणाः सर्वदेवेषु न सामान्येनोपास्याः । किन्तु विशेषोऽस्ति । प्रतिवेदं शाखासु

(गुर्वर्थदीपिका)

ब्रह्मण्येवोपास्याः । रुद्रादिषु नहि=नोपास्या हि । तेषां गुणानां रुद्रादिष्
मयोग्योपासनयाऽनर्थप्रसिद्धिं च हिशब्देनाह । एवं रुद्रेऽपि प्रतिवेदं प्रतिश
प्रोक्ताः "त्रियम्बकाय त्रिपुरान्तकाय कालाग्निरुद्राय नीलकण्ठाये"त्याद्या
नोपास्याः । एवं पूर्वपूर्वासाधारणगुणा उत्तरोत्तरेषु नोपास्याः किन्तु
एवोपास्याः । देवत्ववैष्णवत्वादयस्तु साधारणगुणाः सर्वत्रोपास्या इति
जनामभिप्रेत्याह ब्रह्मादीति । परिचर्यादीत्यत्र परिचर्या=पूजा । आदिपदे
प्रदक्षिणादिकं गृह्यते । ब्रह्माद्यङ्गदेवतेत्यत्रादिपदेन वायुः सरस्वती भारती
अन्यत्रोपसंहाराभावमित्यत्र=अन्यत्रापरेष्वित्यर्थः ।

## भावबोधः

ओं अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ओं ॥ ५७ ॥
पूर्वाधिकरणे योग्यतायां समर्थितायां तदनुसारेणाङ्गदेवतोपासनकर्तव्यता
इत्यनन्तरसङ्गतिरिति भावः । अन्यदेवतेति । अत्र भगवदुपासनं किं केवल
ब्रह्माद्यङ्गदेवतोपासनं युक्तमेवेति चिन्ता । तदर्थं अन्यदेवताप्रतिपाद
निष्प्रयोजनं उत सप्रयोजनमिति । तदर्थं "अन्या वाचो विमुञ्चथ" "पूजये
इति निषेधवाक्यं निरवकाशमुत सावकाशमिति । अन्यदेवतोपासनापक्षेऽपि उ
गुणोपसंहारो न युज्यत उत युज्यत इति । तदर्थमेकैकस्य प्रतीता गुणाः सर्वे
संहर्तव्या उत व्यवस्थया वोपसंहर्तव्या इति । तदर्थं व्यवस्थानियामकं नास
गुणान्तरानुसन्धानस्य क्वचित् दर्शनमात्रेण समाधिकाङ्गदेवतान्तरगुणा अ
उपसंहर्तव्या इति न्यायविवरणानुसारेणाह– अन्यदेवतोपासने त्विति । "अ
इत्येतन्निवर्तनीयमाह– तमेवैकमिति । उपासनादीति भाष्यगतपरिचरणादि
रोधेनाह– पूजयेदिति । सूत्रे ब्रह्माद्या उपास्या इति शेषः । "तु"शब्द "एवा
उपास्य एवेति संबन्धः । ब्रह्माद्या इत्येव वक्तव्ये "अङ्गावबद्धा" इति वचनं "
विमुञ्चथ" इत्यादिवाक्यविरोधपरिहारार्थमित्यभिप्रेत्य प्रवृत्तं ब्रह्माद्यङ्गदेवतावबद्ध
भाष्यं व्याचष्टे– ब्रह्मादीति । [illegible]

(भावबोधः)

वाक्यान्वयन्यायेन उपसंहारान्न शाखास्वित्यादिविशेष इति न्यायविवरणानुसारेण व्याच
उपसंहारे तु विशेषो अस्तीत्यादिना । स्मृतावङ्गदेवताद्युपासनमित्यतः परं कार्यमुत्तम
गुणजातं सर्वमध्यमेष्विति शेषः । नोपसंहार्यमित्यन्वयः । उपसंहाराकर्तव्यत्वे समत्वा
त्यादिहेतुकथनं तस्यासिद्धिपरिहारार्थं वेदसिद्धान्तेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याच
अङ्गदेवताद्युपासनमित्यादिना । वेदसिद्धान्त इति । अनेन नानागुणत्वेन तेषां श्रु
दृष्टेरिति न्यायविवरणांशोऽपि व्याख्यातः ।

## भावदीपः

ॐ अंगावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ यथायोग्यांगदेवतेति
तत्तद्देवतायोग्यतानुसारि यदुपासनं तत्तद्योग्यगुणविशिष्टत्वेन परिवारदेवताध्यानं यत्तद्यु
त्वेनेत्यर्थः । एतेन यासामिन्द्रादिदेवतानामर्जुनाद्यंशैरेकत्वोक्त्योपासनाया योग्यतासापे
सिद्धम् । तासामेवेह योग्यतानुसार्युपासनं साध्यत इति पूर्वसंगतिरपि सूचिता । अस्मिन्
प्रागुक्तप्रमेये विरोधाभावादाह ॥ तत्प्रतिपादकेति ॥ संज्ञातश्चेदित्याद्युक्तदिशा स
परममुख्यवृत्त्या भगवत्प्रतिपादकत्वेऽपि अन्यार्थं तु जैमिनिरित्याद्युक्तदि-शाऽमुख
वृत्त्याग्नीन्द्रमित्रावरुणादिसूक्तादिरूपवेदस्य देवताप्रतिपादकत्वमप्यस्तीति भावः
वैयर्थ्यस्येति ॥ आध्यानाय प्रयोजनाभावादित्युक्तदिशा तदुक्तेरुपासनैकार्थत्वात् ।
चेन्द्रादिकर्मानुष्ठानोपयोगितया इन्द्रादिज्ञानार्थं तदुक्तिः । स्वातन्त्र्येण तज्ज्ञानस्याऽ
त्वात् । स आत्मा अंगान्यन्या देवता इत्यादावीशपरिवारत्वोक्तिवैयर्थ्यादुपासनार्थत
मुख्यत्वाच्चेति भावः । यथा योग्येत्युक्तेः फलमाह ॥ उक्ततारतम्येति ॥ एकैकदेवतागु
सर्वत्रोपासने मिथ्योपासनस्य न प्रतीके न हि स इति वक्ष्यमाणदिशा निषिद्धत्वेन
सर्वदेवतागुणानां सत्यतापत्त्या यावदधिकारमित्यत्रोक्ततारतम्यपरिलोपः स्यादित्यर्थः
प्रागुक्तप्रमेयाक्षेपलाभायैव मिथ्योपासनत्वापत्तिरित्यनुक्त्वैवमुक्तम् ॥ ब्रह्मेति ॥ त
जिज्ञासस्वेत्यादिविधेरित्यर्थः । आत्मानमेव लोकमुपासीत तमेवैकं जानथेत्यादिवि
दर्शनदशायामिति भावः । सौत्रतुशब्दव्यावर्त्यपूर्वं पूर्वपक्षोपयोगिसंशयमाह ॥ अन्यदेवत

द्वैविध्येति ॥ केषुचित्साम्येन पूजानमनसेवादि केषुचिद्विषमपूजादि चोपलभ्यत इ
एकत्र कृतपूजादेरन्यत्राप्युपसंहारतदभावदर्शनमित्यर्थः । नन्वेवं द्विरूपविचारपरत

(भावदीपः)

सर्वशास्त्रार्थो न वेति द्विरूपविचारपरत्वेऽपि संशब्दार्थविचारत्वेनैकीकरणादेकत्वं देवतोपासनविचारत्वेनैकीकरणादेकत्वमिति तात्पर्यात् । अत एव पूर्वतन्त्रेऽर्थवादाधिक द्विरूपविचारपरत्वेऽप्येकत्वम् । विवृतं च जिज्ञासासूत्रचन्द्रिकायां द्विपर्वाविचार इत्यादि भाष्यादौ द्वितीयविचारमात्रप्रतीतावपि परिवारतया ग्राह्या अपि हेयाः प्रधानत ईक्षतिनयानुभाष्योक्त्या सौत्रांगपदोक्त्या उपासनांगदेवानामिति भाष्योक्तस्मृत्या विचारान्तरस्यापि सूचनात् । देवतोपासनासामान्यस्यासिद्धौ तद्विशेषचिन्ताया अ सरदुःस्थत्वादन्यस्य चैतच्चिन्तापरस्याभावादत्र संभवाच्च । क्रमेण पूर्वपक्षद्वयं व्यनक्ति केवलमेवेत्यादिना ।। अपि हेया इत्युक्तिसूचितहेतुमाह ।। तमेवेति ।। गुणान्तरानुसंधा क्वचिद्दर्शनमात्रेण समाधिकांगदेवतान्तरगुणा अप्यंगदेवतान्तरे उपसंहर्तव्या न्यायविवरणमूलकं द्वितीयपूर्वपक्षमाह ।। अन्यदेवतेति ।। देवत्ववैष्णवत्वादिगुणानामित ।। अत इति ।। तमेवेत्यादिवचनादित्यर्थः ।। आदिपदार्थं वदन् तदन्तभाष्यं शेषोक्त आद्यसिद्धान्तपरतया तावद्व्याचष्टे ।। ब्रह्मादीति ।। अङ्गपदं तमेवेत्यादेर्गतिसूचकं व्याचिकीर्षुणा ब्रह्मादिदेवतेत्युक्तम् । नमस्कारादिरादिपदार्थः । एतेन सूत्रे अंगावब अंगैर्ब्रह्मादिदेवैरवबद्धाः संबद्धाः तद्विषया उपासनापूजानमस्कारादयः कार्या इत्यर्थ उ भवति । विष्णोरंगसमुद्भूतेर्विष्णोरंगानि देवताः । उच्यन्ते सर्ववेदेष्विति दशमेऽष्टत्रिंशाध्य यतात्पर्योक्तेरंगपदसूचितं अपि हेयाः प्रधानत इत्यनुभाष्योक्तं हेतुमाह ।। तत्रेति द्वितीयसिद्धान्तमाह ।। उपसंहारे त्विति ।। तुशब्दार्थमाह ।। विशेषोऽस्तीति ।। कथमित्य भाष्ये उपासनादीति पदं तद्विषयगुणजातपरमुपेत्य समग्रभाष्यमेकान्वयतया व्याचष्टे ।। सर्वे ।। उक्तमिति शेषोक्तिः । अवबद्धशब्दार्थः संबंधीति । रुद्रादिष्विति शेषोक्तिः एतेनांगानां ब्रह्मादिदेवानामवबद्धाः संबन्धिनो गुणा रुद्रादौ नोपसंहार्या इति सूत्रांशस्य उक्तो भवति । अनिषिद्धे गुणानां वाक्यान्वयन्यायेनोपसंहारादिति न्यायविवरणोक्त व्यंजयन् भाष्येण संयोजयति ।। योग्यमेवेत्यादिना ।। भाव इत्यन्तेन । एतेन प्रतिवे शाखासूक्ता अङ्गावबद्धा ब्रह्माद्यंगदेवतासंबन्धिनो गुणा रुद्रादिषु नोपास्या इति सूत्रा दर्शितो भवति । हिशब्दाद्वचनादित्यनयोरन्वयाप्रतीतेराह ।। सूचितादिति शेष इति ।। स्मृत नांगदेवताद्युपासनमुपसंहार्यमित्येतत्स्वोक्तसिद्धान्तद्वयोपयोगित्वाय भिन्नवाक्यतया व्याचष्टे

(भावदीपः)

श्रुतिषु दृष्टेरित्यन्यत्रोक्त्यनुरोधेनांत्यपादभावमाह ॥ वेदसिद्धान्त इति ॥ नानागुणत्वे सर्वोत्तमत्वविद्यापुत्रसंपदादिभिन्नभिन्नफलदातृत्वोमापतित्ववाणीपतित्वादिनानागुणत्वेनेत्यर्थः व्यक्तमेतत्प्रथमाध्याय बृहद्भाष्योक्तपैंगिश्रुत्यादौ ॥ ५७ ॥

## वाक्यार्थमुक्तावली

ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेद ॐ ३-३-५७ ॥ यथायोग्या देवतोपासनेति । यस्यां देवतायां ये गुणा उपासितुं योग्याः तदनतिक्रमेणाङ्गदेवतोपा यथायोग्याङ्गदेवतोपासनं तद्युक्तत्वेन कर्तव्यतासमर्थनादित्यर्थः । एतेन देवादीनामना योग्यतायां समर्थितायां तदनुसारेण तेषामुपास्यत्वसमर्थनादनन्तरसङ्गतिरप्युक्ता वेदितव्या अन्यथेति । अङ्गदेवतोपासनाभावे तत्प्रतिपादकवेदवैयर्थ्यस्य तेषु स्वयोग्यगुणानुपसंहारे स सर्वोपसंहारे मिथ्योपासनस्यानर्थहेतुत्वेन सर्वेषां सर्वगुणवत्त्वापत्त्या तारतम्याभावस्य च प्र इत्यर्थः । तथा च सर्ववेदान्तप्रत्ययं, इयदामननादित्युक्तमयुक्तमिति भावः । अन्यदेवते अत्र भगवदुपासनं केवलमेव कर्तव्यमुतान्यदेवतोपासनायुक्तमिति चिन्ता । तदर्थं तमे जानथात्मानमन्या वाचो विमुंचथ, पूजयेन्नान्यदेवता इत्यादिकं सर्वथान्यदेवतोपा निषेधकमुत प्राधान्येन तन्निषेधकमिति । ब्रह्मोपासनविधेरिति । ब्रह्मोपास्व ब्रह्मोपचरस विधेरित्यर्थः । किमेकस्येति । किमेकस्य देवस्य श्रुतिप्रतीतगुणाः सर्वेषूपसंहर्तव्या नोपसंहर्तव्या इति चिन्ता । तदर्थं देवत्वादिगुणानां सर्वेषूपसंहारवद्गुणान्तराणामप्युपस बाधकं नास्त्युतास्तीति । लौकिकेति । लौकिकपुरुषेषु क्वचिन्नीचोच्चभावेन पूजाद मित्यर्थः। ननु प्रमेयद्वये पृथक् संशयपूर्वपक्षसिद्धान्तकरणात् कथमिदमेकमधिकरणम् देवतोपास्तिविषयत्वेनेकाधिकरणत्वेऽङ्गेषु यथाश्रयभाव इत्यत्र विचार्यमप्यत्रैव स्यादिति चे अत्र प्राधान्येनाङ्गदेवतासु यथायोग्यगुणोपसंहार एव विचार्यते । गुणोपसंहारपादत्वात् । एव तत्रैव पूर्वपक्षसिद्धान्तन्यायौ न्यायमालायां पठितौ । विवृतौ च न्यायविवरणे गुणोपसंहारविचारदेवतोपास्तेः कर्तव्यत्वसिद्धावेव भवतीति तद्विचारोपसंदृब्धत्वाद्विचार निरूपणपरमेतदन्तर्भेदाधिकरणमिति न दोषः ।

अङ्गावबद्धा इत्यंशव्यावर्त्यं पूर्वपक्षमाह । केवलमेवेति । सिद्धान्तेऽङ्गपदेन सावक यितव्यश्रुतिमुक्तार्थे प्रमाणत्वेनाह । तमेवैकमिति । समग्रसूत्रव्यावर्त्यपूर्वपक्षं सन्नि

(वाक्यार्थमुक्तावली)

एकान्तभक्तत्वादिगुणानां सर्वेषु तत्वदेवेषु सन्निधानापरपर्यायोपासनादर्शनादित्यर्थः। उपासनादीत्यादिपदानुरोधादाह । परिचर्यादीति । अत्रादिपदेन नमस्कारादिर्गृह्यते ।

सूत्रे तुशब्दोऽवधारणे । कार्या इत्यध्याहृतेन सम्बद्ध्यते । भाष्ये कार्यमित्यध्याहृत भावेनाह । कार्यमेवेति । सूत्रे ब्रह्मादिदेवतावबद्धेति ब्रह्मादिवाचकप्रसिद्धपदे प्रयो अङ्गपदग्रहणेन व्यावर्त्यमाशङ्क्य निषेधति । न चेति । एतेनाङ्गोत्पन्नत्वाद श्रितत्वात्परिवारत्वाच्चाङ्गपदेन ब्रह्माद्या उच्यन्ते । ''विष्णोरङ्गसमुद्भूतेः विष्णोरङ्ग देवताः । उच्यन्ते सर्ववेदेषु स्वरूपभेदिनोऽपि तु'' इति वचनात् । तथा चाङ्गावब अङ्गसंज्ञकब्रह्मादिदेवेष्ववबद्धाः सम्बद्धाः उपसनाद्याः कर्तव्या एव विहितत्वात् । न च वाचो विमुंचथ, पूजयेन्नान्यदेवता इति श्रुतिस्मृतिविरोधः । अङ्गत्वेनोपासनस्यात्र विधान श्रुत्यादौ प्राधान्योपासनानिषेधादिति सूत्रखण्डार्थ इत्युक्तं भवति । भावबोधे तु ब्रह्माद्या उपास्या इति व्याख्यातम् । तेषामङ्गावबद्धा अङ्गतयावबद्धाः स्थिता इत्येतदध्य ब्रह्मादिविशेषणमिति हृदयम् । द्वितीयपूर्वपक्षप्रतिक्षेपाय सूत्रं व्याख्यातं प्रतिशाखं प्रतिवेदं नोपसंह्रियत इति भाष्यं तत्र प्रतिवेदं प्रतिशाखमित्यतः परमुक्तं ब्रह्माद्यङ्गदेवतासम्बनि गुणजातं रुद्रादिष्वित्यध्याहारः ।

सूत्रे तुशब्दो विशेषार्थः । रुद्रादिषूपास्या इति शेषः । तथा च प्रतिवेदं प्रतिशा चोक्ता अङ्गदेवतावबद्धाः ब्रह्माद्यङ्गदेवतासम्बन्धिनो गुणास्तु रुद्रादिषु नोपास्याः, कि योग्या एवोपास्या इत्यर्थं मनसि निधायाह । उपसंहारे इत्यादिना । प्रतिवेदं शाख विद्यमानं भगवत्परं वाक्यजातं यथा ब्रह्मादौ नोपसंह्रियते नान्वीयते तथेति दृष्टान्तपरत नापि सूत्रभाष्ये योजयति । यथा खल्विति । सर्वेषां सहस्रशीर्षेत्यादीनां योग्या हिरण्यगर्भः समवर्तताग्र इत्यादीनाम् । दृष्टान्तानभिप्राये भाष्ये नोपसंहार्यमिति स्यात् नोपसंह्रियत इति स्मृतावङ्गदेवताद्युपासनं कार्यमित्यन्वयः । उपसंहारस्य कर्तव्य समत्वादित्यादिहेतुः तस्यासिद्धिपरिहारार्थं नानादृष्टिरिति न्यायं प्रदर्शयितुं वेदसिद्धान्तवेदि नेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे । अङ्गदेवताद्युपासनमित्यादिना ।

(तत्त्वसुबोधिनी)

अन्यथेति । अङ्गदेवतोपासनाकरणेति द्विधा वैयर्थं यथायोग्यतदकरणे च तारतम्यानु पत्तिरित्यर्थः । तस्येति । उपासनस्येत्यर्थः । एकस्याङ्गदेवस्य । सर्वेष्वङ्गभूतदेवेषु भाष्यगतपरिचर्यादिपदानुरोधेनाह । पूजादिष्विति । सूत्रे ब्रह्माद्या उपास्या इति शेषः तुशब्द एवार्थः । तस्य उपास्या एवेति संबन्धः । ब्रह्माद्या इत्येव वक्तव्ये ''अङ्गावबद्धा इ वचनं अन्यावाचो विमुञ्चथेत्यादिवाक्यविरोधपरिहारार्थमित्यभिप्रेत्य प्रवृत्तं ब्रह्माद्यङ्गदेवता बद्धोपासनादिति भाष्यं व्याचष्टे । ब्रह्मादीति । सूत्रे प्रतिवेदं प्रति शाखास्विति संबन्धः उ गुणजातमुपसंह्रियत इति शेष इत्यभिप्रेत्य प्रवृत्तं प्रतिशाखमित्यादिभाष्यं व्याचष्टे उपसंहारेतु विशेषोऽस्तीति । तावदङ्गदेवताद्युपासनं कार्यमित्यतःपरं कार्यमुत्तमानां गुणज सर्वधर्मेष्विति शेषः । नोपसंहार्यमित्यन्वयः । उपसंहाराकर्तव्यत्वे समत्वादिति हेतुक तस्यासिद्धिपरिहारार्थम् । वेदसिद्धान्तेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे अङ्गदेवताद्युपासनमिति ।

## वाक्यार्थविवरणम्

अन्यथा– अङ्गदेवतोपसनायुक्तत्वेनाकर्तव्यत्वे । तत्प्रतिपादकेति । ब्रह्माद्यङ्गदेव प्रतिपादकेत्यर्थः । उक्ततारतम्येति । साम्येनोपासने इति शेषः । 'इयदामनन इत्यनेनोक्तं यद्देवानां तारतम्यं, तदभावप्रसङ्गादित्यर्थः । एकस्य– देवस्य । द्वैविध्येर् एकस्य गुणाः महत्त्वाद्याः अन्यत्रोच्यमानाश्च दृष्टा इत्यर्थः । भाष्ये अङ्गदेवत बद्धोपासनादि– अङ्गदेवतासंबन्ध्युपासनादिकार्यमित्यर्थः । ननूक्तं उपासनस्य गुण संहारपूर्वकत्वादेकस्य श्रुतिप्रतीता गुणाः सर्वेषूपसंहर्तव्या इति तत्राह– उपसंहारे त्वि अङ्गदेवतागुणोपसंहारविषये इत्यर्थः । सर्ववेदानामिति । सर्ववेदानां संबन्धिन्यो सर्वशाखास्तास्वित्यर्थः ॥ भगवद्वाचकवाक्यानां विष्णुपुरुषसूक्तादीनाम् ॥ अन्यत्र लक्ष्म्यादौ । यथा लक्ष्म्यादेः सर्ववेदप्रतिपाद्यत्वेऽपि भगवत्परत्वेन प्रसिद्धविष्णुसूक्त व्यतिरिक्तवेदप्रतिपाद्यत्वमेव । अतस्तदीयसूक्तादौ तस्योक्तगुणा न लक्ष्म्यादौ युक्ताः तद्योग्याः । एवं रुद्रादेः वेदप्रतिपाद्यत्वेऽपि ब्रह्माद्युत्तमदेवताप्रतिपादकत्वेन प्रसिद्धहिर गर्भादिसूक्तव्यतिरिक्तवेदप्रतिपाद्यत्वमेव । अतस्तत्सूक्तादौ हिरण्यगर्भादिरुक्ता रुद्रादिदेवेष्वनुपसंहर्तव्याः । किन्तु तद्योग्या एवेत्यर्थः । तथा च अङ्गावबद्धाः अङ्गदे सम्बद्धाः तद्विषयकाः उपासनाद्याः कार्या एव । अन्यदेवतोपासनेन तद्गुणोपसंहार

ब्रह्मादिदेवतानां प्रतीतं गुणजातं रुद्रादिषु नोपसंहर्तव्यमिति सूत्रार्थः । तत्र विशेषम यावदिति ॥ नानागुणत्वेन ॥ परस्परायोग्यगुणत्वेन ॥

## वाक्यार्थमञ्जरी

उक्तेति यावदधिकारमित्यत्रेत्यर्थः ॥ ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ अङ्गावबद्धा अंगैरप्रधानैर्ब्रह्मादिभिरवबद्धाः सम्बद्धास्तद्विषया इति यावत् । उपास्त्य कार्या एव उपसंहारे च तु विशेषोस्ति सकः प्रतिवेदं याः शाखाः ता सूक्तमुत्तमगुणजात चेन्नोपासनं कर्तव्यमित्यर्थः । वेदसिद्धान्ते वेदादिशास्त्रे ॥

## सूत्रभाष्यम्

**॥ ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥ ५८ ॥**

सर्वदेवतामन्त्रा यथाऽधीयन्त एवमविरोधो वा ।

'उपासनाङ्गदेवानां परमाङ्गतया भवेत् ।
उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ॥
पुरुषाणां विशेषाद्वा यथायोगं भविष्यती'ति बृहत्तन्त्रे ॥ ४८ ॥

॥ इति अङ्गावबद्धाधिकरणम् ॥ ३६ ॥

## तत्त्वप्रदीपिका

मन्त्रादिवद्वाऽविरोधः ॥ इन्द्राग्न्यादिदेवताशब्दवाच्यविषया वेदादिमन्त्रा यथाऽधीयन्त ए तत्तदङ्गदेवताशब्दवाच्योपासनाद्यविरोधो वा ब्रह्मविषयत्वबुद्धिभावात् । सर्वदेवतामन्त्र यथाऽधीयन्त एवमविरोधो वेति भाष्यस्यान्योऽप्यर्थ उच्यते । सर्वदेवतामन्त्रा यथाऽधीयन्त तत्तदनुस्मृत्या तद्वदुपसंहार्यत्वं च केषां, अवरेषामिति लभ्यते । समानां समोपासनस्योत्त मानामधमोपासनस्य च ''समत्वाद्वोत्तमत्वाद्वे''ति निषिद्धत्वात् । अत्र प्रमाणमाह– ''उपास- नाङ्गदेवानां परमाङ्गतया भवे''दित्यादि । अङ्गादुद्भूता अङ्गस्थाः परिवारभूता वा ब्रह्मादयोऽङ्ग- देवास्तेषामुपासना कर्तव्यैवावरैः स्वस्मात्परमाङ्गत्वात् । न च प्राधान्येन, परमस्य विष्णोरङ्गत्वेनैव । गुणानामुपसंहरि...

## तत्त्वप्रकाशिका

एवमेकत्र प्रतीतानां सर्वगुणानामन्यत्रोपसंहाराभावमुक्त्वोपसंहारं चाभ्युपगच्छत्सूत्रं पवि
व्याचष्टे ॥ मन्त्रेति ॥ यथाग्र्याद्यधमदेवताविषयं मन्त्रविद्यादिकं ब्रह्माद्युत्तमदेवताविषयत्वेनाऽध
तेऽध्येतृभिरुत्तमानां तत्प्रतिपाद्यत्वात् । एवमधमगुणानामुत्तमेषूपसंहारे न कश्चिद्विरोधः ।
तद्गुणित्वादिति भावः । उक्तं चैतत् । 'देवता सर्वविद्यानां स्वयं नारायणः प्रभुः । ऋते
प्रसिद्धश्च देवता श्रीस्तथाऽत्र च । ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च । पूर्वप्रसिद्धवर्जं तु शक्र
देवता मताः । इन्द्रावरा विशेषेण लिङ्गेनैव पृथक् पृथक्' । इति । यदुक्तं देवतोपासनं
यथायोग्यं गुणोपसंहारश्च कर्तव्यः इति तत्किं सर्वैः कार्यं न वेत्यपेक्षायामाह ॥ उपासने
भवेत्सर्वैः कार्येति शेषः । फलविशेषेऽतिशयितफलार्थं पुरुषविशेष उत्तमाधिकारित्व
फलविशेषस्तेषामेव । उपासकप्रतिपत्तौ साधन एवायं विकल्पः । यथायोग्यमेव च सा भव
अतो यथायोग्यमङ्गदेवतानामुपास्यत्वात्सर्वं युक्तमिति सिद्धम् ॥ ५८ ॥

## गुर्वर्थदीपिका

उपसंहारमभ्युपगच्छदित्यस्योपसंहारमवरेषूक्तगुणानामुत्तमेषूपसंहारमित्यर्थः । पू
उत्तमेषु विद्यमानगुणानामेवावरेषूपसंहारो न कर्तव्य इत्युक्तम् । इदानीं त्ववरेषु विद्य
गुणानामुत्तमेषूपसंहारः कर्तव्य इत्युच्यत इति भावः । ऋते तत्र प्रसिद्धाश्चेत्यत्र तत्र ना
प्रसिद्धाः पुरुषसूक्तविष्णुसूक्तवामनसूक्ताद्या ऋते "श्रीश्च सर्वविद्यानां देवता" अ
लक्ष्म्यां च प्रसिद्धा अम्भ्रणीसूक्तादिविद्या ऋते एव ब्रह्मा सर्वविद्यानां देवता । वि
लिङ्गेन "हिरण्मयेन सविता रथेन" "अग्निर्दिवि हव्यमाततने"त्यादिलिङ्गेन नि
पृथक्पृथक् स्वस्वसूक्तमात्रे देवताः । न त्विन्द्रादिवत्सर्वविद्यानामित्यर्थः । अतिश
फलार्थमित्यस्य "यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामन्वि"ति भा
वचनात्साङ्गदेवतोपासनेनातिशयितहरिप्रसादाख्यफलार्थमित्यर्थः । अत्रायं विवेकः ।
नित्यमुक्ताऽपि श्रीः स्वभर्तरि भगवति प्रीत्यतिशयेन तमुपास्ते तदाऽनन्तवेदोक्तगु
दनुक्तांश्च स्वयोग्यगुणान् स्वगुणान् स्वावरगुणांश्च स्वबुद्धिबलेन भगवत्युपसंहृत्योप
तदङ्गभूतश्रीदेवीं च भगवदेकनिष्ठसूक्तातिरिक्तवेदोक्तसकलगुणान् स्वगुणान् स
गुणांश्चोपसंहृत्योपास्ते । तदैव तस्य भगवतः परमानुग्रहो नान्यथा । यदा च रुद्रः भ
मुपास्ते तदा स्वयोग्यवेदोक्तगुणान् भगवत्युपसंहरति । श्रीदेव्यां च भगवदेकनिष्ठसू
रिक्तवेदोक्तस्वयोग्यगुणानुपसंहरति । ब्रह्मणि च श्रियो हरेश्चासाधारणसु

(गुर्वर्थदीपिका)

नोपसंहरति। एवमविवेचने स्वनीचाङ्गदेवतागुणस्यापि स्वेनोपास्यत्वप्रसङ्गेन तारतम्यवि
स्यादिति ज्ञेयम् । उपासकप्रतिपत्तौ साधन एवायं विकल्प इत्यत्रोपासका अङ्गदेव
गुणोपासकाः । तेषां प्रतिपत्तिः मनुष्याद्यास्सर्वेऽपि मोक्षाधिकारिणोऽङ्गदेवतोपासका
किंतूत्तमाधिकारिण एवेति सम्प्रतिपत्तिः । तस्यां सिद्धायां, साधने=तैः क्रियम
गुणोपसंहाराख्यसाधने । अयं विकल्पः उत्तमोत्तमानां गुणाः अवरेष्ववरेषु नोपसंहर्तव्य
अवरगुणास्तूत्तमेषूपसंहर्तव्या इति विकल्पः विरुद्धपक्षद्वयमित्यर्थः ॥

## भावबोधः

उत्तमेष्वधमापेक्षया मन्त्रादिवद्वेति न्यायविवरणानुसारेण सर्वदेवतेत्यादिभाष्यं व्याच
यथेति । सर्वदेवतामन्त्रा यथाऽधीयन्त इति भाष्यस्य यथेत्यादिस्वकृतं व्याख्यानं ऋग्भा
सम्मत्या समर्थयति– उक्तं चैतदिति । देवतोपासनं सर्वैः कार्यं न वेंति प्रश्नोत्तरपरः पू
इत्यभिप्रेत्याह– भवेत् सर्वैः कार्येति शेष इति ॥

ननु उपसंहृतिस्तु फलातिशयार्थं सर्वैः कार्या भवेत् । अन्यथा न त्विति योजन
उपासकानां मध्ये ये फलार्थिनः त एव पुरुषविशेषालब्धाः पुनः किमुच्यते पुरुषा
विशेषादिति तत्राह– पुरुषविशेष इति ॥

नन्वेवं तर्हि उत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या इति विकल्पार्थप्राप्
अन्येषां सर्वात्मनोपसंहारनिषेधः स्यात् । तथा च फलातिशयार्थं सर्वैरुपसंहृतिः कर्तव्ये
प्रागुक्तविरोधः स्यादित्यत आह– फलविशेषस्तेषामेवेति । तथा चोपसंहृतिरित्युत्तरार्धे स
कार्येत्यस्यानुवृत्तिः नास्तीति भावः ॥

ननु उपसंहृतिः फलातिशयार्थं कर्तव्या नान्यथा फलाभावे कर्तव्येति पुरुषविशे
उत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या वेति पक्षद्वयाभावात् कथं पुरुषाणां विशेषाद्वे
विकल्प इत्यत आह– उपासकप्रतिपत्ताविति । उपासनाङ्गदेवतानामिति प्रथमार्धेनोपासका
प्रतिपत्तौ अतिप्रसङ्गनिरासार्थं साधन एव फलसाधनोपासन एव पुरुषविशेषैः उत्तमाधि
कारिभिरेव फलयोग्यैः फलातिशयार्थं उपासनमुपसंहृतिः कार्या । अन्यथा तदन्यै
फलायोग्यैरत एव फलातिशयार्थित्वाभावेन ...

(भावबोधः)

पुरुषविशेषैः कर्तव्यो अन्यैर्न कर्तव्य इति उपासकेषु विकल्प इत्यर्थः । यथायोग्यमिति
सोपसंहृतिरुत्तमेष्वधमगुणानामेव नाधमेषूत्तमगुणानामिति यथायोग्यमित्यर्थः । अत्रा
''अङ्गावबद्धा'' इत्यनेन भगवदुपासनस्य ब्रह्माद्यङ्गदेवतोपासनासाहित्येन कर्तव्यतोक्तिः
''न शाखासु'' इत्यनेन उत्तमदेवगुणानामधमेषूपसंहाराभावोक्तिः । द्वितीये– अधमगुण
नामुत्तमेषूपसंहारसमर्थनमिति सूत्रक्रमः ॥ ३६ ॥

## भावदीपः

ॐ मंत्रादिवद्वाऽविरोधः ॐ ॥ उपसंहारं चेति ॥ एकत्र प्रतीतानामन्यत्रेत्यनुषङ्गः
उत्तमेष्वधमगुणापेक्षया मन्त्रादिवद्वेतीत्यन्यत्रोक्त्यनुरोधेन भाष्यं व्याचष्टे ॥ यथेति ॥
चैतदिति ॥ उत्तमानामधमदेवतामन्त्रप्रतिपाद्यत्वं ऋग्भाष्ये उक्तमित्यर्थः । तदाह ॥ देव
॥ एतदर्थोक्तिः यथा सर्वदेवतामन्त्राः भगवदर्थकत्वेनाधीयन्ते एवमविरोधो
भाष्यस्यार्थान्तरसूचनाय वा तत्रेत्युत्तरार्धस्थतच्छब्दपरामर्शद्योतनाय वेति ज्ञेयम् ।
भगवति प्रसिद्धाः सूक्तविद्या ऋते वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता । तथात्र
श्रीदेव्यां प्रसिद्धा विद्या अंभ्रणीसूक्ताद्या ऋते अन्यासां ब्रह्मैव देवता । ततः परं च तेन
वक्ष्यमाणेन तारतम्यक्रमेणैव पूर्वप्रसिद्धवर्जं पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयि
अन्यासां विद्यानां तु शक्रान्ता देवता मता इत्यर्थः । देवतानां भूयस्त्वात्कथं शक्रा
इत्युक्तिरित्यतः इन्द्रावरा इति पृथग्विशेषणव्यावर्तकेन लिङ्गेन श्रुतिलिङ्गा
ज्ञापकेनैवेन्द्रावरास्तत्र तत्र विद्यासु देवताः स्युः, न तु श्रुतिलिङ्गाद्यभावे । इन्द्रपर्यन्त
श्रुत्याद्यभावेऽपि पूर्वप्रसिद्धवर्जं देवताः स्युरिति शक्रान्ता देवता मता इत्युक्तमिति भाव
अत्रेन्द्रावरा इत्यतः पूर्वं देवता मता इत्यतःपरं ब्रह्मवायू गिरौ वीन्द्रेत्यादि
ताक्रमोक्तिपरश्लोकचतुष्टयस्येहानुपयोगादपाठ इति ध्येयम् । न त्वयमेव भाष्यक्रम
भ्रमितव्यम् ॥ तत्किमिति ॥ पूर्वोक्तं द्वयमित्यर्थः ॥ आहेति ॥ अङ्गदेवतोपासनं सर्वैः
गुणोपसंहारस्तु सर्वैर्न कार्यः । किं तूत्तमाधिकारिभिरतिशयितफलार्थं कार्य इत्याहेत्यर्थ
फलानां विशेष इति निमित्तसप्तमीमुपेत्याह ॥ अतिशयितफलार्थमिति ॥ फलविशेषार्थि
कैश्चिद्वा उत्तमाधिकारिभिर्वेति भ्रमनिरासायाह ॥ फलविशेषस्तेषामेवेति ॥ ननूपसंहृ
पुरुषविशेषैः फलानां विशेषार्थं कार्या । न त्वन्यथेत्यर्थोक्तौ वाशब्दो व्यर्थ इत्यत आह

(भावदीपः)

उपासकैः क्रियमाणप्रतिपत्तिरूपसाधन एवायम् । अंगदेवानां भगवत्परिवारतया प्रतिप
सर्वैः कार्या । न तु गुणप्रतिपत्तिः । सा तु फलातिशयार्थिभिरुत्तमाधिकारिभिः कार्ये
विकल्पो न तु फलविशेषार्थिभिर्वा पुरुषविशेषैर्वेत्येवंरूपविकल्प इत्यर्थः । पुरुषवि
क्रियमाणापि गुणोपसंहृतिः किंरूपेत्यतो विशेषे त्विति तुशब्द उपसंहृतौ विशेषद्योतक
भावेनाह ।। यथेति ।। सा गुणोपसंहृतिः उमाया रुद्रे साक्षाद्भर्तृत्वगुरुत्वादे रुद्रस्य ब्रह्
पितृत्वगुरुत्वादेरुपसंहृतिरित्येवमादिरूपेत्यर्थः ।। अत इति ।। श्रुतिषु देवतातद्गुणोक
न्यथानुपपत्तिबलात्तमेवेत्यादेरनंगत्वनिरासपरत्वादुपासनेत्यादिस्मृति बलाच्चेत्यर्थः ।। सर्वे
।। प्रागुक्ततारतम्यादिकमित्यर्थः ।। ५८ ।।

## वाक्यार्थमुक्तावली

ॐ मन्त्रादिवद्वाविरोधः ॐ ३-३-५८ ।। वाशब्दो व्यवस्थितविकल्पे
अवरगुणानामुत्तमेषूपसंहारेऽपीति शेषः । मन्त्रादिवन्मन्त्रादेरिवेत्यर्थं मनसि निधाय व्याचष्टे
यथेति । उक्तं चेति । ऋग्भाष्य उक्तमित्यर्थः । इन्द्रावरास्तु पृथक्पृथक् स्वासाधार
लिङ्गश्रुत्यादिनैव विद्यानां देवताः न त्विन्द्रादिवत् पूर्वप्रसिद्धवर्जसर्वविद्यानां देवता इत्यर्थः
देवतोपासनं सर्वैः कर्तव्यं न वेति प्रश्नोत्तरपर आद्यार्थ इति भावेनाह । भवेत्सर्वैः क
इति । गुणोपसंहारः सर्वैः कार्यो न वेत्यस्योत्तरपरोपसंहृतिरिति श्लोकः । तत्र फला
विशेष इति तादर्थ्ये सप्तमीत्याह । फलानां विशेष इति । तेषामुत्तमानामेव योग्यो
सर्वेषामित्यर्थः । नन्वेवं पुरुषविशेषपदेनोत्तमाधिकारिणः स्वीकृत्य फलविशेषस्तेष
मेवेत्यङ्गीकारे उपसंहृतिरित्यर्थे विशेषाकाङ्क्षायामुपसंहृतिः कार्या । तदनपेक्षायां न का
वेत्येकं विकल्पमुक्त्वा द्वितीयार्धे पुरुषाणां विशेषात् ल्यब्लोपनिमित्ता पञ्चमी । योग्यत
विशेषमपेक्ष्यैवोपसंहृतिर्भवेत् । पुरुषविशेषैः फलापेक्षाभावेऽप्युपसंहृतिः कार्या नान्यैरि
योग्यता यत्र विकल्पान्तराम्नानमयुक्तम् । अतः फलेन विकल्पाम्नानं मोक्षयोग्यमात्र
साधारणम् । पुरुषाणां विशेषाद्वेति तु फलानपेक्षायामपि तत्साधने उपासने उत्तमाधि
कारिणामेव योग्यता नान्येषामिति विकल्पान्तरपरमित्यङ्गीकार्यम् । तथा च क
फलविशेषस्तेषामेवेत्युच्यत इत्यत आह । उपासकेति । फलानां विशेषार्थमित्यलौकि

(वाक्यार्थमुक्तावली)

विशेषाद्वेत्यस्य पूर्वत्रैवान्वयाङ्गीकारादिति भावः। तथा च स्मृत्यर्थः । परमाङ्गतया परमात
परिवारत्वेनाङ्गदेवतानामुपासना सर्वैर्मोक्षयोग्यैः कार्या भवेत् । उपसंहृतिस्तु पुरुषाणामुपा
कानामुत्तमाधिकारित्वमपेक्ष्य तद्योग्यफलविशेषार्थं भविष्यति । अन्यथोत्तमाधिकारित्वाभ
तादृशफलयोग्यताया एवाभावात् न वा न कर्तव्या वा । वेति व्यवस्थितो विकल्पः
श्लोकोपसंहृतिरुपास्यानां देवानां गुणयोग्यतामपेक्ष्योपासकानां स्वयोग्यतामपेक्ष्य
भवतीति। भावबोधे तु नन्वेवं तर्ह्युत्तमाधिकारिभिः कर्तव्यान्यैर्न कर्तव्येति विकल्पार्थप्रा
तेषां सर्वात्मनोपसंहारनिषेधः स्यात् तथा च फलातिशयार्थं सर्वैरुपसंहृतिः कार्या । अन्
फलाभावे न कर्तव्येति पुरुषविशेषैरुत्तमाधिकारिभिः कर्तव्याऽन्यैर्न कर्तव्येति पक्षद्वयाभा
कथं पुरुषाणां विशेषाद्वेति विकल्प इत्यत आह । उपासकप्रतिपत्ताविति । पुरुष
विशेषादित्यनेनोत्तमाधिकारिरूपोपासकप्रतिपत्तावुत्तमाधि- कारिभिरेव फलातिशयापे
अन्यथा न कर्तव्येत्युपसंहृतिरूपसाधन एवायं विकल्पो न तु पुरुषविशेषैः कर्तव्याऽ
कर्तव्येत्युपासकेषु विकल्प उच्यत इत्यर्थ इत्युक्तम् ।

## तत्त्वसुबोधिनी

सर्वदेवतामन्त्रायथा विधीयन्ते इति भाष्यस्य स्वर्पयेत्यादिस्वकृतव्याख्यानं ऋग्भ
संमत्या समर्थयति । उक्तं चैतदिति । स्वयं साक्षात्प्रभुरिति देवत्वोपपादनार्थम् ।
भगवति प्रसिद्धाः सूक्तदिविद्याः ऋते वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता । त
श्रीदेव्यां प्रसिद्धा अंभृणीत्युक्ता विद्यानां शक्रान्ता देवता मताः । अन्या अपि भारत्य
ज्ञातव्याः । यद्येताः सर्वा अपि विद्यादेवता इत्युक्तम् । तत्राह । इन्द्रावरा इति । यद्यप
सर्वा अपि विद्यादेवता भवन्त्येव । तथापि पृथक् पृथक् विशेषणव्यावर्तकेन
श्रुतिलिंगादिना ज्ञापकेन इन्द्रावराः तत्र तत्र विद्यासु देवताः । न तु श्रुतिलिंगा
इन्द्रपर्यन्तास्तु श्रुत्याद्यभावेऽपि पूर्वप्रसिद्धवर्जं देवताः स्युरिति शक्रान्ता इत्युक्त
देवतोपासनं सर्वैः कार्यं न वेति प्रश्नोत्तरपरः पूर्वार्ध इत्याह । भवत्सर्वैः कार्येति शेष
ननूपसंहृतिस्तु फलातिशयार्थं सर्वैः कार्या भवेत् । अन्यथा न त्विति योजनायां उपास
मध्ये ये फलातिशयार्थिनः त एव पुरुषविशेष इति । नन्वेवं तर्हि उत्तमाधिकारिभिः क
अन्यैः न कर्तव्या इति विकल्पार्थप्राप्त्या अन्येषां सर्वात्मनोपसंहारनिषेधः स्यात् । त

फलविशेषस्तेषामेवेति । तथा च उपसंहृतिः फलातिशयार्थं कर्तव्या इत्युक्तार्थे
कार्येत्यस्यानुवृत्तिः नास्तीति भावः । ननु उपसंहृतिः फलातिशयार्थं कर्तव्या अन
फलाभावे न कर्तव्या इति पुरुषविशेषैरुत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या
पक्षद्वयाभावात् कथं पुरुषाणां विशेषाद्वेति विकल्प इत्यत आह । उपासकप्रतिपत्ताविति
उपासनाङ्गदेवानां इति प्रथमार्धेन उपासकप्रतिपत्तौ अतिप्रसंगनिरासार्थं साधन
फलोपासन एव पुरुषविशेषैः उत्तमाधिकारिभिरेव फलयोग्यैः फलातिशयार्थं उपासन
उपसंहृतिः कार्या अन्यथा तदन्यैः फलायोग्यैः तत एव फलातिशयार्थित्वाभावेन कर्त
वेति विकल्प इत्यर्थः । यद्वा पुरुषविशेषादित्यनेन उत्तमाधिकारिरूपोपासकप्रतिपत्तौ
उत्तमाधिकारिभिः फलातिशयापेक्षया कर्तव्याऽन्यथा च न कर्तव्या वेति उपसंहृतिरूपसाध
एवायं विकल्पो न तु पुरुषविशेषैः कर्तव्या अन्यैः न कर्तव्येति उपासकेषु विकल्प उच्य
इत्यर्थः ।। भावा उपासकाः देवाः तेषां प्रतिपत्तौ उपासनायाः साधन एव उपासनासाध
नीभूतफलेच्छायामेव विकल्पः फलेच्छा कर्तव्या न वा उत्तमाधिकारिण एव कदाचिदिच्छ
कुर्वन्ति कदाचिदनिच्छया कुर्वन्ति इत्यर्थः । अन्यथा ह्यङ्गदेवतोपासनस्यादनूपकत्वं
स्यादिति ध्येयम् । यद्वा नायमुपासकविकल्पः येन फलातिशयार्थे कर्तव्याऽन्यथा फलाति
शयाभावे न कर्तव्येति पुरुषविशेषैः उत्तमाधिकारिभिः कर्तव्येति पक्षद्वयाभावात् पुरुषाण
विशेषाद्वेति कथं विकल्प इति शङ्केत, किं नाम उपसंहृतिरेव कार्या न वा कार्येति
उपसंहृतिरूपसाधन एव विकल्प इत्यर्थः । ननु अन्यनिष्ठतया अप्रतीयमानस्य अन्यनिष्ठत्वेन
पर्यवसाने अतिप्रसंगात् कथं पुरुषाणां विशेषाद्वेति उपासकनिष्ठतया प्रतीयमानविकल्पस्य
साधनतया पर्यवसानमुच्यते इत्यतो युक्तमेव, एतदुपासकानां असंहृतिरूपसाधनस्य च
व्यापारव्यापारिभावेन नियामक संबन्धसत्वात् । तथा च व्यापारिनिष्ठतया प्रतीयमानस्य
तद्व्यापारनिष्ठतया पर्यवसाने नातिप्रसंगावकाश इत्याशयेनोक्तम् । उपासकप्रतिपत्ताविति ।
उपासकानां प्रतिपत्तिः व्यापारः तद्रूपे साधन इति संबन्धः । यथायोग्यमिति । सोपसंहृतिः
उत्तमेषु अधमगुणानामेव अधमेषु उत्तमगुणानामिति यथायोग्यमित्यर्थः । अत्राद्ये सूत्रे
अङ्गदेवतोपासनसमर्थनम् । अस्य च सूत्रस्य अङ्गावबद्धास्तु ब्रह्माद्याः उपास्या एव शाखासु
प्रतिवेदं उक्तं गुणजातं अधमेन उपसंहार्यमिति अक्षरार्थः । द्वितीये

## वाक्यार्थविवरणम्

तत्प्रतिपाद्यत्वात् ।। अधमदेवताविषयकमन्त्रप्रतिपाद्यत्वादित्यर्थः ।। तेषु । उत्तमेषु तद्गुणित्वात् । अधमनिष्ठगुणवत्त्वसद्भावादित्यर्थ ।। तेषु तेषामिति वा ।। अस्मिन्नर्थे भ प्रमाणानुक्तेः स्वयं तदाह ।। उक्तं चैतदिति । ऋग्भाष्य इत्यर्थः ।। देवतेति ।। या तेनो सा देवतेत्यर्थः । तत्र नारायणे प्रतिपादकत्वेन प्रसिद्धा नारायणसूक्तादिविद्या ऋते, सर्वविद्यानां देवता । अत्र च श्रियां प्रसिद्धाः अम्भृणीसूक्तादिविद्या ऋते, ब्रह्मैव सर्वविद्य देवता ।। ।। पूर्वेति ।। ब्रह्माद्युत्तमदेवताप्रतिपादकत्वेन प्रसिद्धहिरण्यगर्भसूक्त व्यतिरिक्तसर्वविद्यानां शक्रान्ता देवा देवतात्वेन मताः ।। इन्द्रावराः ।। आहङ्क कप्राणाद्याः यत्र विद्यायां स्वस्वलिङ्गानि वर्तन्ते तत्रैव प्रतिपाद्यदेवतात्वेन मताः सर्वाविद्यानामित्यर्थः । उर्वरितं भावबोधे स्पष्टम् । उपासकप्रतिपत्ताविति वाव यद्वेत्यादिना भावबोधोक्तयोजनैव समीचीनेति ध्येयम् । ननु उपसंहृतिः फलातिशयार्थं कार्या भवेत् । अन्यथा न त्विति योजनायां उपासकानां मध्ये ये फलातिशयार्थिन पुरुषविशेषाः लब्धाः, पुनः किमुच्यते पुरुषाणां विशेषादिति । तत्राह ।। पुरुषविशेष इ नन्वेवं तर्हि उत्तमाधिकारिभिः कर्तव्या, अन्यैर्न कर्तव्येति विकल्परूपवाशब्दार्थप्र अन्येषां सर्वात्मनोपसंहृतिनिषेधः स्यात् । तथा च फलातिशयार्थं सर्वैरुपसंहृतिः भवेदिति प्रागुक्तविरोधः स्यादित्यत आह ।। फलविशेषस्तेषामेवेति । तथा चोपसं रित्युत्तरार्धे सर्वैः कार्येत्यस्यानुवृत्तिर्नास्तीति भावः । तथा चेष्टापत्तिरिति हृद ननूत्तमाधिकारिभिः फलविशेषार्थमुपसंहृतिः कर्तव्येति प्राप्त्या पुरुषाणां विशेष पुरुषभेदसूचको विकल्पः कथमित्यत आह ।। उपासकेति ।। अत्र साधनशब्दो भावस न करणसाधनः । तथा च पुरुषाणां विशेषादित्यनेन उत्तमाधिकारिरूपे पासकप्रतिपत्तौ सत्यां उत्तमाधिकारिभिरपि फलातिशयापेक्षा चेत् कर्तव्या । अन्यथ कर्तव्येति फलसाधन एवायं विकल्पो न तूपासकपुरुषेषु विकल्प इत्यर्थः । यथायोग्य ।। सा उपसंहृतिरुत्तमेष्वधमगुणानां नाधमेषूत्तमगुणानामिति यथायोग्यमित्यर्थः ।।

## वाक्यार्थमञ्जरी

ॐ मन्त्रादिवद्वाविरोधः ॐ ।। नीचगुणानामुत्तमैरुपसंहारेऽविरोधः कथं मन्त्रादि यथा मन्त्रादेः सूक्तादेरधमपरस्योत्तमविषयत्वेऽध्ययनं तथेत्यर्थः ।। तेषु तद्गुणत्वादि उत्तमानां नीचगुणत्वादित्यर्थः । उत्तमानां तत्प्रतिपाद्यत्वादित्यत्र ऋग्भाष्यसम्मतिम

उक्तं चेति ॥ स्वयं साक्षाद्देवता तत्र नारायणे अत्र श्रियां विशेषेणैव लिङ्गेन देवता इ इत्यर्थः । ननूपसंहृतिस्तु फलातिशयार्थं सर्वैः कार्या भवेत् अन्यथा न त्विति योजनाय मुपासकानां मध्ये फलार्थिनस्त एव पुरुषविशेषा लब्धाः पुनः किमुच्यते पुरुषा विशेषादिति तत्राह ॥ पुरुषविशेष इति ॥ नन्वेवं सत्युत्तमाधिकारिभिः कर्तव्याऽन्यै कर्तव्येति विकल्पार्थप्राप्त्याऽन्येषां सर्वात्मनोपसंहारनिषेधः स्यात् तथा च फलातिशय सर्वैरुपास्तिः कर्तव्येति प्रागुक्तविरोधः स्यादित्यत आह ॥ फलविशेषस्तेषामेवेति ॥ त चोपसंहृतिरित्युत्तरार्धे सर्वैः कार्येत्यस्यानुवृत्तिर्नास्तीति भावः । ननूपसंहृतिः फलातिशया कर्तव्या अन्यथा फलाभावेन कर्तव्येति पुरुष विशेषैरुत्तमाधिकारिभिः कर्तव्या अन्यै कर्तव्या इति च पक्षद्वयाभावात्कथं पुरुषाणां विशेषाद्वेत्युक्तविकल्प इत्यत आह ॥ उपासक प्रतिपत्ताविति ॥ पुरुष विशेषादित्यनेनोत्तमाधिकारिरूपोपासकप्रतिपत्तौ तैरुत्तमाधिकारिभि फलातिशयापेक्षया कर्तव्या अन्यथा न कर्तव्येत्युपसंहृतिरूपसाधन एवायं विकल्पो न पुरुषविशेषैः कर्तव्याऽन्यैर्न कर्तव्य इत्युपासकेषु विकल्प उच्यत इत्यर्थः ॥ यथायोग्यमिति । सोपसंहृतिरुत्तमेष्वधमगुणानामेव नाधमेषु उत्तमगुणानामिति यथायोग्यमित्यर्थः ॥ ३६ ॥

## ३७. भूमाधिकरणम्

॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ ५९ ॥

सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत्सर्वत्र सहभावात् (दीक्षाप्रायणीयोदय-नीयसवनत्रयावभृथात्मकः क्रतुः इत्यधिकः पाठः क्वचित्) ।

'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।
तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥'

इति च गौपवनश्रुतिः ॥ ५९ ॥

॥ इति भूमाधिकरणम् ॥ ३७ ॥

## तत्त्वप्रदीपिका

(तत्त्वप्रदीपिका)

आत्मत्वस्यैव विशेषोदितत्वात्, भूमगुणस्य च महत्त्वपर्यायस्यावरेषामुपासितुमशक्यत्वान्न वैशिष्ट्यमिति प्राप्त आह– ''भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति'' ॥ सर्वगुणेषु भूमगु प्राधान्यं सर्वत्र सम्बध्योपासनीयत्वेन । तमृत एकगुणस्याप्यनुपासनीयत्वात् । न च तदुपा स्याशक्यत्वम् । प्रत्यधिकारिनानात्वस्य वक्ष्यमाणत्वात् । यथा सवनत्रयात्मकः क्रतुरहीन प्रत्यहं सम्बध्यमानो विशिष्टो भवति, तमन्तरेणैकस्याप्यह्नोऽननुष्ठेयत्वेन । ''ध्रुवाः शास्त्र मातानां'' इति च सत्राणि प्रकृत्य याज्ञिकोक्तिः । एवमिहापि । अतः पूर्णज्ञानः पूर्ण इत्येवोपासनं कार्यमिति सिद्धम् ॥

## तत्त्वप्रकाशिका

अत्र ईश्वरदर्शनसाधनस्य भूमगुणोपासनस्य सर्वोपासकसाधारण्यसमर्थना शास्त्रादिसंगतिः । अन्यथा लौकिकतयोपासनप्रसङ्गात्समर्थनीयम् । प्रकृतभगवद्गुणान 'यो वै भूमा' इत्यादौ श्रुतो भूमगुण एव विषयः । सर्वोपास्यो न वेति सन्देहः । गु विध्यदर्शनं सन्देहबीजम् । तत्रोपासकं प्रति भूमगुणस्य संभृत्यादिगुणेभ्यो न विशे सर्वोपास्यो न भवतीति पूर्वः पक्षः । वैयर्थ्यात् । आनन्दादिकं हि सर्वाधिकारिणामि तच्च तद्गुणोपासनेनोपपद्यते । न हि निरतिशयत्वापरपर्यायं भूमत्वं कस्यापीष्टं येन तदु सार्थकं स्यात् । न च भूमत्वस्यानन्दादिविशेषणत्वात्सर्वोपास्यत्वम् । विशेषणत प्रियशिरस्त्वादीनामिव फलानुपयोगित्वेनानुपास्यत्वात् । अतो भूमत्वस्य सर्वोपास्य भावान्नालौकिकतयोपासनमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ भूम्न इति सर्वैरुपास्यो भूमगुणः सर्वगुणेषु तस्य ज्यायस्त्वात् । कस्मात् । यथा खलु दीक्षा णीयोदयनीयसवनत्रयाऽवभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्याव वैफल्याज्ज्यायस्त्वं ततश्च सर्वैः कर्तव्यत्वम् । तथा भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनो एवेष्टफलसिद्धेः । एतदपि कुतः । 'भूमैव देवः' इति श्रुतेरिति भावः । देवः सर्वै त्वेनोपास्यः । कस्मात् । भूमा गुणो गुणराशितो यतः क्रतुवद्विशिष्टः । कथम् । य भूमैवोपासितः फलं विधत्ते नैवाऽभूमा तस्मादित्यर्थः । अतः सर्वैरानन्दाद्याः पूर्णत्वेनो इति न लौकिकतयोपासनमिति सिद्धम् ॥ ५९ ॥

## गुर्वर्थदीपिका

अत्रेश्वरदर्शनसाधनस्य भूमगुणोपासनस्येत्यत्र भूमगुणोपासनं नाम परमात्मन्यानन

(गुर्वर्थदीपिका)

अतश्चतुर्गुणोपासकेष्वपि लौकिकानन्दादिगुणेभ्योऽप्यतिशयाय पूर्णानन्दः परमात्मा पूर्णज्ञानः परमात्मेत्यादिरूपेणैवोपासनस्याभिप्रेतत्वेन पृथगुपासनाभावान्न चतुर्गुणोपासकत्वभङ्गः । न हि कुण्डलिनश्चत्वारः पुरुषा इत्युक्ते विशेषणीभूतकुण्डलैस्तच्चतुष्ट्वस्यासम्भव इति भावः । क्रतुवदित्यत्र क्रतुपदेन सकलप्रधानयागाङ्गभूता अत एव सर्वत्र कर्तुं योग्यत्वात्क्रतुपदवाच्याः दीक्षाप्रायणीयोदयनीयाख्यकर्मत्रयसवनत्रये क्रियमाणकर्मत्रयावभृथस्नानाख्याः कर्मविशेषाः कथ्यन्ते ॥

## भावबोधः

ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ओं ॥ ५९ ॥ सर्वोपासकसाधारण्येति । अतीताधिकरणेऽन्यदेवतोपासनस्य कर्तव्यत्वमुक्त्वा प्रसङ्गाद्भूमगुणोपासनस्यापि सर्वोपासकसाधारण्यमत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः । अन्यथेति । अन्यथाऽऽनन्दादीनां अपूर्णत्वेन उपासनाप्राप्तौ लौकिकतया उपासनप्रसङ्गात् ''कार्याख्यानादपूर्वं'' इत्युक्तमयुक्तं स्यादिति भावः । सर्वेति । अत्र भूमगुणः सर्वोपास्यो न भवत्युत भवतीति चिन्ता । तदर्थं भूमगुणस्य सर्वत्रानन्दादिषु सहभावेनोपासनाभावेऽपि इष्टसिद्धिर्न भवत्युत भवतीति भूमगुणस्योपासकं प्रति विशेषाभावेऽपीऽति पूर्ववाक्यानुसारेण विशेष इति न्यायविवरणगतपूर्वपक्षप्रतिज्ञाभागं व्याचष्टे– तत्रोपासकं प्रतीति । अनेन संभृत्यादिगुणेभ्य इति विशेष इत्युक्तं भवति । तस्य तात्पर्यमाह– सर्वोपास्यो नेति । तत्तदिष्टगुणानुसारेण फलोपपत्तिरिति न्यायविवरणांशं व्याचष्टे– आनन्दादिकं हीति ॥

ननु भूमत्वस्यापीष्टत्वेन तदुपासनमपि सार्थकमेवेत्यत आह– न हीति । ''भूमैव देवः'' इति श्रुतेरिति । इयमेव च श्रुतिः न्यायविवरणोदाहृतेति ज्ञातव्यम् ॥ ३७ ॥

## भावदीपः

ॐ भूम्नः क्रतुबज्जयायस्त्वं तथा च दर्शयति ॐ ॥ सर्वेति ॥ एतेन पूर्वत्रांगदेवतोपासनस्य सर्वसाधारण्योक्तिप्रस्तावादिहापि तदुच्यत इति पूर्वसंगतिरपि सूचिता । लौकिकतयेति ॥ परमतः सेतून्मानेत्यत्र पूर्णत्वाख्योन्मानत्वादिनैवालौकिकत्वोक्तेरि

(भावदीपः)

विष्णुरित्युक्तावपि आध्यात्मसंबन्धभूमेत्यादाविवात्र भूमशब्दो बहुत्वरूपपूर्णत्ववाची । 
पूर्णतायामित्युक्तेरिति भावेन इत्यादौ श्रुतो भूमगुण इत्युक्तं पूर्णगुणत्व इत्यर्थः
भूमगुणस्योपासकं प्रति विशेषाभावेऽपि तत्तदिष्टगुणानुसारेण फलोपपत्तिरित्यविशेष
न्यायविवरणं विवृण्वन् प्रतिज्ञात्वेनान्वयपूर्वं तदेकदेशमुपादत्ते ॥ तत्रेति ॥ एवं स
सतीत्यर्थः । संभृत्यादिभ्य इति शेषोक्तिः । किमुक्तं भवतीत्यतः यथा संभृतिद्युव्या
प्रियशिरस्त्वादिगुणा न सर्वोपास्यास्तथा भूमगुणोऽपीत्युक्तं भवतीति भावेन तद्वाक्
फलितार्थमाह ॥ सर्वोपास्यो न भवतीति ॥ कुत इत्यतः संभृत्यादिभ्यो न विशेष इत्युक
संभृत्याद्यनुपासनेऽप्यानन्दादय इत्युक्तगुणोपासनेनैवानन्दानुभवरूपमोक्षसिद्धिवत् भूमगुण
पासनेऽपीति भूमोपासनस्य वैयर्थ्यरूपहेतुरपि लब्ध इति भावेनाह ॥ वैयर्थ्यादिति
भूमगुणोपासनस्येति योज्यम् । तत्तदिष्टगुणानुसारेण फलोपपत्तिरित्यंशवैयर्थ्योपपादक
व्याचष्टे ॥ आनन्दादिकमिति ॥ विशेषभावेऽपीत्यंशमपि पदसूचितशङ्कां दर्शयन् तत्तदि
णोक्त्यैव निरस्तेत्याह ॥ न च भूमत्वस्येति ॥ एके तु विशेषाभावेऽपीति पाठमु
व्याकुर्वते ॥ अत इति ॥ वैयर्थ्यादित्यर्थः ॥ नालौकिकतयोपासनमिति ॥ कार्याख्यान
पूर्वमित्यत्रोक्तमिति भावः ॥ ज्यायस्त्वोक्तेरसांगत्यनिरासाय साध्यमध्याहृत्य तत्र हेतु
भाष्यं व्याचष्टे ॥ सर्वैरिति ॥ कस्मादिति ॥ ज्यायस्त्वं तेनोपास्यत्वं च कुत इत्यर्थ
सिद्धेरित्यन्तेन समाधिः । दीक्षा यजमानसंस्कारकर्म । प्रायणीयोदयनीयौ क्रतोरादा
क्रमेण कर्तव्याविष्टिविशेषौ । प्रातःसवनमाध्यंदिनसवनतृतीयसवनभेदेन सोमाभिषव
सवनत्रयेत्यर्थः । अवभृथो नाम अप्स्ववभृथेन चरन्तीत्युक्तेष्टिविशेषः । क्रतोरग्निष्टो
सर्वयागेषु द्वादशाहाद्यहर्गणेष्वित्यर्थः ॥ अत इति ॥ भूमत्वसहभावेनैवानन्दाद्युपा
स्येष्टफलहेतुतायाः श्रुत्युक्तत्वादित्यर्थः ॥ ५९ ॥

## वाक्यार्थमुक्तावली

ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ३-३-५९ ॥ अत्र यथा 
गुणोपसंहारः सर्वाधिकारिको न भवति तत्साध्यफलातिशयस्य सर्वेषामनपेक्षितत्वादित्
एवमेव भूमत्वमपि न सर्वैरुपास्यम् । तत्साध्यनिरतिशयपूर्तेः सर्वेषामनिष्टत्वा
न्यायसाम्येनाक्षेपोत्थानादनन्तरसङ्गतिः । अन्यथेति । आनन्दादेः भूमत्वानुपासन इत्य
तथा च कार्याख्यानादपूर्वमित्युक्तमयुक्तं स्यादिति भावः । यो वै भूमा तत्सुखमि

गुणिपरत्वेनोक्तस्तथापि तत्र भावभवितृभेदेन धर्मिपरत्वेन स्वीकारेऽपि वस्तुतो भाव कशब्दत्वाद्गुण इति साधूक्तम् । सर्वेति । अत्र भूमगुणः सर्वोपास्यो न भवत्युत भ चिन्ता । तदर्थं तदुपासनं व्यर्थमुतानन्दाद्युपासनस्य फलवत्त्वात्सार्थकमिति । अत्र सूत्रे ज्यायस्त्वमिति संभृत्यादिगुणेभ्य उपासकं प्रति भूमगुणस्य वैशेष्योक्त्या नि पूर्वपक्षमाह । अत्रेति । तदुक्तं न्यायविवरणे । भूमगुणस्योपासकं प्रत्यविशेष इति । किमित्यत आह ।। सर्वोपास्य इति ।। कथमविशेषो येनोपास्यत्वाभाव इत्यतः तद्वत्फल योगित्वेन व्यर्थत्वादित्याह ।। वैय्यर्थ्यादिति ।। वैय्यर्थ्यमेवेष्टं फलमिति न्यायप्रदर्श कमाह। आनन्दादिकमिति । भूमत्वस्यापि सर्वाधिकारिणामिष्टत्वे तदप्युपास्यमे आह। न हीति । अधिकारिवर्गे निरतिशयतत्वस्य हिरण्यगर्भस्येष्टत्वेऽपि तति कस्यापीत्यर्थः । विशेषणत्वेऽपीति । ननु प्रियशिरस्त्वादीनामानन्दविशेषत्वादिति सा विशेषभावः प्रागुक्तः । इह तु पूर्ववत्तद्विशेषणमुच्यते । कथमविरोध इति चेन्न । प्रियशि हि प्रियशिरसो भावः । तच्च शिरोरूपमुपकारजं सुखम् । तस्यानन्दविशेषवत्वे कारजत्वनारायणात्मकशिरोरूपत्वादिकं सुखस्य विशेषणमेवेति तद्विवक्षयाऽयं ग्रन्थः इत्यविरोधोपपत्तेः सूत्रोक्तं ज्यायस्त्वं हेतुरिति भावेन साध्यमध्याहरति । सर्वैरिति ज्यायस्त्वमित्यस्यैव सर्वोपास्यत्वमित्यर्थं मत्वोक्तं सर्वैरिति । तद्धेतुतया प्रकार व्याचष्टे । सर्वगुणेष्विति । कस्माद्धेतोर्ज्यायस्त्वं भगवद्गुणत्वाविशेषादिति भावः। क्रतु दृष्टान्तबलाल्लब्धं क्रतुवत्सर्वत्र सहभावादित्युक्तं हेतुं विशदयति । यथेति । ननु क्रतुः दीक्षाद्यंगकलापविशिष्टज्योतिष्टोमवाचित्वात्कथं तस्य विश्वजिदादियागेषु अनुवर्तन मित्यत उक्तं भाष्ये । दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकःक्रतुरिति । क्रतुपदेनाङ्गकलापविशिष्टो ज्योतिष्टोम उच्यते । किं नाम दीक्षाद्यात्मकः दीक्षादिरू कलाप एव क्रतुपदेन विवक्षित इति । तदेतदज्ञात्वा यत्केनचित्प्रलपितम् । दीक्षादिवि क्रतोः सर्वत्र सहभावप्रतिपादनं भाष्यकारीयं मीमांसाज्ञानमूलमिति तदपास्तं वेदित शिष्टिरित्युक्तन्यायप्रदर्शकं तथा च दर्शयतीति सूत्रखण्डमवतार्य व्याचष्टे । एतदप क्रत्वङ्गानां सर्वेष्वन्वयेनैव फलहेतुत्वं तद्दृष्टान्तेन भूमत्वस्य सर्वत्रानन्दादिषु सहभा

(वाक्यार्थमुक्तावली)

उक्तः । तथापि बह्वर्थत्वादविरोधः । तथा चायं सूत्रार्थः । भूम्नो भूमस्य सर्वोपास्यत्व
कुतः । च यस्मात् सर्वेषु ज्यायस्त्वम् । तदपि कुतः । क्रतुवत् दीक्षाद्यङ्गकला
सर्वयागेष्विव भूमत्वस्य पूर्णानन्दः पूर्णज्ञान इत्यादिप्रकारेण सर्वगुणेषु विशेष
सहोपास्त्यैव फलप्रापकत्वात् । न चेदमप्रामाणिकम् । च यस्माद्दर्शयति तथा श्रुतिरिति

## तत्त्वसुबोधिनी

ॐ भूम्नः कृतवज्ज्यायस्त्वं तथा च दर्शयति ॐ ।। सर्वोपासकसाधारण्येति । अतीत
करणेऽन्यदेवतोपासनस्य सर्वैः कर्तव्यत्वमुक्त्वा प्रसंगात् भूमगुणोपासनस्यापि सर्वोपा
साधारण्यमत्र समर्थ्यत इत्यनन्तरसंगतिरिति भावः । अन्यथेति । अन्यथा आनन्दादीन
पूर्णत्वेन उपासनाप्राप्तौ लौकिकतया उपासनप्रसंगात् कार्याख्यानादपूर्वमित्युक्तम
स्यादिति भावः । पूर्वपक्षमाह । तत्रोपासकं प्रतीति । तस्य तात्पर्यमाह । सर्वोपास्यमि
ननु भूमत्वस्यापीष्टत्वेन तदुपासनमपि सममेवेत्यत आह । न हीति । दीक्षेत्यादिभाष्य
भावः । यथा सवनत्रयात्मकः क्रतुरहितादिषु प्रत्यक्षसंबध्यमानविशिष्टो भवति । तमन
कस्याप्ययं हेतुत्वेनत्वत एकगुणस्यामनुष्ठेयत्वं न ध्रवाः शस्त्रायातामताना इति सू
प्रकृत्यपातिकोक्तिरेवमिहापि सर्वगुणेषु भूमगुणस्य प्राधान्ये सर्वत्रसंबध्य उपासनावत्वेन
एकगुणस्याप्यनुपासनीयत्वादिति । अप्रतीतार्थत्वात् श्रुतिं व्याचष्टे । देव इति ।

## वाक्यार्थविवरणम्

अन्यथा ।। पूर्णज्ञानेत्यादिरूपेण ज्ञानादिविशेषणतया पूर्णत्वापरपर्यायभूमगुणस
पास्यत्वे भगवद्ज्ञानादिगुणानां लौकिकत्वेन उपास्यत्वप्राप्त्या कार्याख्यानादित्युक्तालौ
तयोपासनं अयुक्तं स्यादिति भावः । भूमगुणस्योपासकं प्रति विशेषाभाव इति पूर्वपक्षव
परन्यायविवरणमपेक्षिताध्याहारेण व्याकुर्वन्नेव तदनुसारेण पूर्वपक्षमाह ।। तत्रोपासकं प्र
।। तस्याभिप्रायमाह ।। सर्वोपास्य इति ।। यथा सम्भृत्यादिगुणानां न सर्वोपास्यत्वं
भूमगुणस्यापीत्यर्थः ।। वैय्यर्थ्यादिति ।। भूमगुणोपासनस्येत्यर्थः ।। तद्गुणेति ।। स
गुणश्चेति विग्रहः । आनन्दादिगुणेत्यर्थः ।। फलानुपयोगित्वेनेति ।। तदुपासन
योग्यतयेत्यर्थः ।। नालौकिकतयेति ।। आनन्दादेः पूर्णत्वेनोपासने खलु अलौवि

(वाक्यार्थमुक्तावली)

प्राप्तमिति भावः ॥ यथा खलु दीक्षाप्रायणीयोदयनीयेत्यादि ॥ प्रायणी
मिष्टिद्वयम् । ननु दी… दीक्षा- प्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतो
सहभावाज्ज्यायस्त्वमुक्तं … तत्रेदं शङ्क्यते । एतादृशक्रतोः कथं सर्वत्र सहभ
भृथयोः सर्वत्र सहभावे… ऽपि प्रायणीयोदयनीयेष्ट्योः सर्वत्र कथं सहभावः
सहभावः सर्वथा अस… भावित एव । सुत्यासवनशब्दौ तु पर्यायन्वेन स
यस्मिन् अन्हि सोमः … कण्ड्यते स कालः सुत्येति व्याख्यानाच्च
सोमयागसाधारणधर्मतया … तदितराश्वमेधादिसर्वयज्ञेषु सोमकण्डनाभावेन
प्रामाणिकत्वादिति । तत्रेदमुत्तरम् । सर्वत्रेत्यनेन न सर्वयज्ञा विवक्षि
सोमयागप्रभेदरूपा या अग्निष्टोमात्यग्निष्टोमातिरात्रषोडश्युक्थवाजपेया- त्पुय
संस्थाः एव विवक्षिताः । तासु च सर्वत्र प्रायणीयोदयनीयसवनत्रयाणामस्त
तदभिप्रायेणैव सर्वत्रेत्युक्तम् । न च प्रधानयाग एव सवनत्रयम् । न
संस्थास्त्विति वाच्यम् । षोडशीरूपसंस्थायां तावत्सवनत्रस्य सद्भावः ।
सवनमि'त्यादिना महानाम्नीनामित्यादिखण्डे स्पष्टं प्रतिपादितः ।
षट्कसंस्थास्वपि सवनत्रयमस्तीति न कोऽपि दोष इति ध्येयमित्याहुः ॥

## वाक्यार्थमञ्जरी

अन्यथेति ॥ पूर्णत्वस्यानुपास्यत्वे आनन्दादीनामपूर्णत्वेनोपासनाप्र
तयोपासनप्रसङ्गादित्यर्थः । तथा च कार्याख्यानादपूर्वमित्युक्तालौकिक
भावः । ततः किमित्यत आह ॥ सर्वोपास्यो नेति ॥ सम्भृत्याद्यविशेषे
सर्वोपास्यत्वमत आह ॥ वैयर्थ्यादिति ॥ तदेव व्यनक्ति ॥ आनन्दादिकं
भूमत्वस्यापीष्टत्वेन तदुपा…सनमपि …कमेवेत्यत आह ॥ न हीति ।
क्रतुवज्ज्यायस्त्वं त… …र्यति … भूमगुणस्य सर्वगुणेषु ज्यायस्त्व
क्रतुवत् य… …पस्य … सर्वयागेष्वनुवृत्तावेव तद्योग्यानु
प्राधा… …स्य सर्वगु… फलहेतुत्वं कुत इत्यत उक्त
दर्श… …व देव …था …

(भावबोध:)

तर्हि स्मृतावनुमानस्य शब्दानन्तरं तदनन्तरं च प्रत्यक्षस्य ग्रहणे किं निमित्तमित्यत आ
तत्त्वर्णय इति ॥

ननु प्रमाणान्यप्यविद्यमानमर्थं दर्शयेयुरित्याशङ्कां परिहरति– न चेति । ननूक्तमत्र भू
विशेषसद्भावे केषाञ्चित् सम्यक्पूर्णानन्दः केषाञ्चित् किञ्चित्पूर्णानन्द इति मिथ्योपासनमि
आह– अन्यानिषेधादिति ॥ ३८ ॥

## भावदीपः

ॐ नानाशब्दादिभेदात् ॐ ॥ ६० ॥ विशेषेति ॥ पूर्वं सामान्येनोक्तस्यात्र विशे
विचारात्पूर्वसंगतिरपि सूचिता ॥ उक्तेति ॥ यावदधिकारमित्यादौ उक्तानंदादितारतम्येत्
॥ उभयविधेति ॥ किंचित् घटादिवस्तु सर्वेषामेकप्रकारेणैव प्रतीयते किञ्चिच्च शास्त्रार्थी
वस्तु तारतम्येन प्रतीयत इति भावः । भूमगुणः उपासकानामेकप्रकारेणैव प्रत
इत्यङ्गीकार्यम् । विशेषस्य कल्पनोपपत्तेरित्यन्यत्रोक्तं व्यनक्ति ॥ सर्वेषामिति ॥ तथ
इति ॥ किञ्चित्पूर्णानन्दत्व इत्यर्थः । एष परम आनन्दः । अनिर्देश्यं परमं सुखम् ।
वाचो निवर्तन्त इत्यादेरीशानन्दस्य निरतिशयपूर्णानन्दत्वेन तरतमभावापन्नपूर्ण
स्याभावादिति भावः ॥ अनर्थेति ॥ न प्रतीके न हि स इत्यत्र तथा वक्ष्यमाणत्वा
भावः ॥ अत इति ॥ भूमत्वे विशेषकल्पनायोगादित्यर्थः ॥ अतो भूमत्वमपि नानैवोपा
इति भाष्यार्थं वक्तुमाह ॥ भूमत्वमिति ॥ अत इति भाष्यपदस्य स्मृत्युक्त
परामर्शिनोऽन्यमप्यर्थमाह ॥ शब्दादिभिरित्यादिना ॥ शब्दानुमानप्रत्यक्षैरित्यर्थः
प्रदृश्यते। अत इत्युक्तस्मृत्यर्थं व्यनक्ति ॥ शब्दादीनां चेति ॥ स्मृतिशेषानुरोधे
इत्यादिभाष्यं यतो भूमत्वमपि नानैवोपास्यते अतो नानोपासनात्फलतारतम्यमपि यु
मित्यर्थतया प्रकारान्तरेण व्याचष्टे ॥ नानोपासनाच्चेति ॥ फलतारतम्यमिति ॥ एतच्च स
पूर्णत्वेऽपि ''यथोदंचनकुंभादेः सरित्सागरयोरपि । अल्पेन महता वापि पूर्तियोग्य
भवेत्'' ॥ ''एवं नरादिब्रह्मान्तजीवानां साधनैरपि । अनादिसिद्धैर्भक्त्याद्यैः पूर्तियोग्य
भवेत्'' ॥ ''अल्पैः पूर्तिस्तथाल्पानां पूर्तियोग्यतया भवेदिति प्रथमबृहद्भाष्योक्त
ध्येयम् । सूत्रे अक्षादिभेदादिति वाच्ये शब्दादीत्युक्तिक्रमे बीजमाह ॥ तत्वेति ॥
श्रुत्वा तदनुकूलतर्कैः प्रतिकूलतर्कान् परिहृत्य ध्यानानन्तरमपरोक्षतः प्रत्येतीति श्रवण

(वाक्यार्थमुक्तावली)

प्राप्तमिति भावः ॥ यथा खलु दीक्षाप्रायणीयोदयनीयेत्यादि ॥ प्रायणीयोदयनीयनामक-मिष्टिद्वयम् । ननु दीक्षा– प्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वत्र यज्ञेषु सहभावाज्ज्यायस्त्वमुक्तं तत्रेदं शङ्क्यते । एतादृशक्रतोः कथं सवर्त्र सहभावः । दीक्षाव-भृथयोः सर्वत्र सहभावेऽपि प्रायणीयोदयनीयेष्टयोः सर्वत्र कथं सहभावः । सवनत्रयस्य तु सहभावः सर्वथा असम्भावित एव । सुत्यासवनशब्दौ तु पर्यायन्वेन सम्मतावित्युक्तेः । यस्मिन् अन्हि सोमः कण्ड्यते स कालः सुत्येति व्याख्यानाच्च । सवनत्रयस्य सोमयागसाधारणधर्मतया तदितराश्वमेधादिसर्वयज्ञेषु सोमकण्डनाभावेन सवनत्रयस्या-प्रामाणिकत्वादिति । तत्रेदमुत्तरम् । सर्वत्रेत्यनेन न सर्वयज्ञा विवक्षिताः । किन्तु सोमयागप्रभेदरूपा या अग्निष्टोमात्यग्निष्टोमातिरात्रषोडश्युक्थवाजपेया- त्पुर्यामसंज्ञकाः सप्त संस्थाः एव विवक्षिताः । तासु च सर्वत्र प्रायणीयोदयनीयसवनत्रयाणामस्त्येव सहभावः । तदभिप्रायेणैव सर्वत्रेत्युक्तम् । न च प्रधानयाग एव सवनत्रयम् । न तदङ्गभूतसप्त-संस्थास्त्विवति वाच्यम् । यषोडशीरूपसंस्थायां तावत्सवनत्रस्य सद्भावः । 'पीतवद्वै प्रातः सवनमि'त्यादिना महानाम्नीनामित्यादिखण्डे स्पष्टं प्रतिपादितः । तद्वदग्निष्टोमादि-षट्कसंस्थास्वपि सवनत्रयमस्तीति न कोऽपि दोष इति ध्येयमित्याहुः ॥

## वाक्यार्थमञ्जरी

अन्यथेति ॥ पूर्णत्वस्यानुपास्यत्वे आनन्दादीनामपूर्णत्वेनोपासनाप्राप्तौ लौकिक तयोपासनप्रसङ्गादित्यर्थः । तथा च कार्याख्यानादपूर्वमित्युक्तालौकिकत्वानुपपत्तिरिति भावः। ततः किमित्यत आह ॥ सर्वोपास्यो नेति ॥ सम्भृत्याद्यविशेषेऽपि कुतो न सर्वोपास्यत्वमत आह ॥ वैयर्थ्यादिति ॥ तदेव व्यनक्ति ॥ आनन्दादिकं हीति ॥ ननु भूमत्वस्यापीष्टत्वेन तदुपासनमपि सार्थकमेवेत्यत आह ॥ न हीति ॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ भूम्नः भूमगुणस्य सर्वगुणेषु जायस्त्वं प्राधान्यं कथं क्रतुवत् यथा दीक्षाद्यङ्गकलापस्य विश्वजिदादिसर्वयागेष्वनुवृत्तावेव तद्योग्यानुष्ठानफलहेतुत्वेन प्राधान्यं तथा तद्वद्भूमगुणस्य सर्वगुणानुवृत्तत्वेन फलहेतुत्वं कुत इत्यत उक्तम् ॥ तथा च दर्शयतीति ॥ च यस्माद्भूमैव देव इति श्रुतिः तथा उक्तार्थं दर्शयत्यत इत्यर्थः । यद्यपि क्रतुशब्दो दीक्षाद्यंगविशिष्टया गवाचकत्वेन मीमांसकप्रकरणसिद्धः तथाप्यत्र तदङ्गकलाप-

## ३८. नानाशब्दाधिकरणम्

॥ ॐ नानाशब्दादिभेदात् ॐ ॥ ६० ॥

'शब्दोऽनुमा तथैवाक्षो योग्यताभेदतस्सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥
अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते ।
अतः फलस्य नानात्वं नानैवोपासनं(ना)यत' इति ब्रह्मतर्के ।

अतो भूमत्वमपि नानैवोपास्यते ॥ ६० ॥

॥ इति नानाशब्दाधिकरणम् ॥ ३८ ॥

### तत्त्वप्रदीपिका

यथा नाधिकारिभेदात्तत्र तत्र सवनत्रयस्य भेदः । एवं सर्वाधिकारिणामप्येकरूप
भूमगुणोऽपीत्यत आह– नाना शब्दादिभेदात् ॥ शब्दोऽनुमाऽक्ष इत्येतानि प्रमाणानि । त्री
चैतानि योग्यताविशेषात् । ब्रह्मादीनामेकैकमर्थं बहुधा दर्शयन्ति । अत ईशस्य पूर्णत्वं शब्दादि
नानैव प्रदृश्यते । योग्यताविशेषादेव । न च क्रतुवदेकरूपत्वमिति वाच्यम् । सर्वसाम्याभावात्
विवक्षितसाम्येन दृष्टान्तत्वोपपत्तेः । उक्तिक्रमभेदस्तु प्रमाणानां श्रवणादिक्रममपेक्ष्य युज्यते । श्रुत
वेदार्थं तदनुकूलतर्कैः प्रतिकूलतर्कान् परिहृत्य ध्यानानन्तरं पश्यतीति ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मासाक्षात्कारसाधनभूमोपासनेऽधिकारिणां विशेषसमर्थनादस्ति शास्त्रादिसंगतिः
अविशेषे तूक्तानुपपत्तेरसौ समर्थनीयः । प्रकृतभूमगुण एव विषयः । किमधिकारिणामुपास
तारतम्येन प्रतीयते एकप्रकारेण वेति सन्देहः । उभयविधवस्तुप्रतीतिः सन्देहबीजम् । सर्वे
भूमत्वमेकप्रकारेण प्रतीयत इति पूर्वः पक्षः । भूमत्वे विशेषकल्पनायोगात् । न हि केषाञ्चि
त्सम्यक्पूर्णानन्द इति केषाञ्चित् पूर्णानन्द इत्युपासनं युक्तम् । तथात्वे मिथ्योपासनप्रसङ्गात्
मिथ्योपासनस्यानर्थहेतुत्वात् । अतः सर्वेषामेकप्रकारेण भूमत्वोपासकत्वान्नोक्ततारतम्यमिति
सिद्धान्तयत्सूत्रं पठित्वा स्मृत्युदाहरणपूर्वकं व्याचष्टे ॥ नानेति ॥ भूमत्वमुपासनेऽधिकारि
[illegible]

तत्त्वनिर्णयो वेदार्थनियमोऽपरोक्षज्ञानं चेति क्रमभावीनि शब्दादिजन्यानीति शब्दा
भूमत्वे विशेषानुपपत्तिः । अतीतवत्सराणां मासानामानन्त्येऽपि विशेषव
अन्यानिषेधान्नान्यथोपासनम् । अतो भूमत्वदृष्टावधिकारिणां विशेषसद्भावाद्युक्तं
सिद्धम् ॥ ६० ॥

## गुर्वर्थदीपिका

अधिकारिणां विशेषसमर्थनादित्यत्राधिकारिणां विशेषो नाम ब्रह्मा स
पूर्णतां भगवद्गुणेष्वनुसन्धत्ते । ततः किंचिदूनं रुद्रः । एवं मनुष्योत्तमपर्यन्तं
अधिकारिणां तारतम्याख्यविशेषः समर्थ्यत इति भावः । शब्दानां चेत्यस्य मा
पश्येत्युक्ते भूशब्दः तद्योग्यप्रदेशविशेषमेव प्रत्याययति न सर्वम् । ततोऽप्यपि
प्रति तावन्तं भागं न पाताळादिभागम् । सर्वज्ञऋष्यादीन्प्रति तु सर्वं भागं प्रद
भूमशब्दोऽपीति भावः । अतीतवत्सरवासराणामित्यत्रानादिकालमारभ्यातीतवत
मित्यर्थः । अव्यवहितवत्सरवासरैस्सहाप्यनन्ता एवातीतवत्सरवासराः । ततः
रवासरैः सह तु येऽनन्ता अतीतवत्सरवासरा स्तदानन्त्यं नैतदानन्त्यसदृशम् ।
ततः पूर्वमित्यानन्त्येऽप्यनन्ता अवान्तरविशेषाः सन्ति । तद्वदिति भावः ।
त्सराणामप्यानन्त्यमस्ति । तदन्तर्गतदिवसानामप्यानन्त्यमस्ति । तत्र व
द्वासरानन्त्ये यथा विशेषोऽस्ति तद्वदिति भावः ॥

## भावबोधः

ओं नाना शब्दादिभेदात् ओं ॥ ६० ॥ अधिकारिणां विशेषेति । पूर्वाधि
भूमगुणोपासने अधिकारिणां विशेषसमर्थनादनन्तरसङ्गतिरिति भावः । किमित्य
भूमत्वं किमधिकारिणामेकप्रकारेणैव प्रतीयते उत तारतम्येनेति चिन्ता । तदर्थं
नानात्वप्रतीतिः किं भ्रान्तिरुत प्रमेति । तदर्थं भूमत्वे नानात्वं नास्त्यु
भूमगुणोपासकानामेकप्रकारेणैव प्रतीयत इत्यङ्गीकार्यं विशेषस्याकल्पनोपपत्तेरि
विवरणानुसारेण पूर्वपक्षमाह– सर्वेषामित्यादिना । अधिकारिभेदेनेति । अनेन य
कारेष्विति न्यायविवरणोदाहृतस्मृतितात्पर्यमप्युक्तं भवति ॥

ननु प्रत्यक्षस्य सर्वप्रमाणोपजीवित्वेन सूत्रे ''प्रत्यक्षादिभेदात्'' इति वक्तव्य
''तन्मुख्यं ज्ञानशब्दयोः'' इत्युक्तरीत्या करणेषु शब्दस्य प्राधान्यात् सूत्रे तदादि

(भावबोधः)

तर्हि स्मृतावनुमानस्य शब्दानन्तरं तदनन्तरं च प्रत्यक्षस्य ग्रहणे किं निमित्तमित्यत आह तत्त्वर्णय इति ॥

ननु प्रमाणान्यप्यविद्यमानमर्थं दर्शयेयुरित्याशङ्कां परिहरति– न चेति । ननूक्तमत्र भूम विशेषसद्भावे केषाञ्चित् सम्यक्पूर्णानन्दः केषाञ्चित् किञ्चित्पूर्णानन्द इति मिथ्योपासनमित आह– अन्यानिषेधादिति ॥ ३८ ॥

## भावदीपः

ॐ नानाशब्दादिभेदात् ॐ ॥ ६० ॥ विशेषेति ॥ पूर्वं सामान्येनोक्तस्यात्र विशे विचारात्पूर्वसंगतिरपि सूचिता ॥ उक्तेति ॥ यावदधिकारमित्यादौ उक्तानंदादितारतम्येत्य ॥ उभयविधेति ॥ किंचित् घटादिवस्तु सर्वेषामेकप्रकारेणैव प्रतीयते किञ्चिच्च शास्त्रार्था वस्तु तारतम्येन प्रतीयत इति भावः । भूमगुणः उपासकानामेकप्रकारेणैव प्रती इत्यङ्गीकार्यम् । विशेषस्य कल्पनोपपत्तेरित्यन्यत्रोक्तं व्यनक्ति ॥ सर्वेषामिति ॥ तथ इति ॥ किञ्चित्पूर्णानन्दत्व इत्यर्थः । एष परम आनन्दः । अनिर्देश्यं परमं सुखम् । य वाचो निवर्तन्त इत्यादेरीशानन्दस्य निरतिशयपूर्णानन्दत्वेन तरतमभावापन्नपूर्ण स्याभावादिति भावः ॥ अनर्थेति ॥ न प्रतीके न हि स इत्यत्र तथा वक्ष्यमाणत्वा भावः ॥ अत इति ॥ भूमत्वे विशेषकल्पनायोगादित्यर्थः ॥ अतो भूमत्वमपि नानैवोपास इति भाष्यार्थं वक्तुमाह ॥ भूमत्वमिति ॥ अत इति भाष्यपदस्य स्मृत्युक्ता परामर्शिनोऽन्यमप्यर्थमाह ॥ शब्दादिभिरित्यादिना ॥ शब्दानुमानप्रत्यक्षैरित्यर्थः प्रदृश्यते। अत इत्युक्तस्मृत्यर्थं व्यनक्ति ॥ शब्दादीनां चेति ॥ स्मृतिशेषानुरोधे इत्यादिभाष्यं यतो भूमत्वमपि नानैवोपास्यते अतो नानोपासनात्फलतारतम्यमपि यु मित्यर्थतया प्रकारान्तरेण व्याचष्टे ॥ नानोपासनाच्चेति ॥ फलतारतम्यमिति ॥ एतच्च स पूर्णत्वेऽपि ''यथोदंचनकुंभादेः सरित्सागरयोरपि । अल्पेन महता वापि पूर्तिर्योग्य भवेत्'' ॥ ''एवं नरादिब्रह्मान्तजीवानां साधनैरपि । अनादिसिद्धैर्भक्त्याद्यैः पूर्तिर्योग्य भवेत्'' ॥ ''अल्पैः पूर्तिस्तथाल्पानां पूर्तियोग्यतया भवेदिति प्रथमबृहद्भाष्योक्त ध्येयम् । सूत्रे अक्षादिभेदादिति वाच्ये शब्दादीत्युक्तिक्रमे बीजमाह ॥ तत्वेति ॥ वे श्रुत्वा तदनुकूलतर्कैः प्रतिकूलतर्कान् परिहृत्य ध्यानानन्तरमपरोक्षतः प्रत्येतीति श्रवण

फलानां क्रमेण निर्देशात्तदनुकरणमेतत्तत्वनिर्णय इत्यादि । अर्थनियमोऽयमेवास्यार्थ इ नियम इत्यर्थः । ननूक्तमत्र भूमत्वे विशेषकल्पनायामेकैकस्मिन्नेवानन्दादिगुणे तत्तद्योग्यतर तमभावापन्नभूमत्वस्याभावेन तथोपासने मिथ्योपासनाप्रसङ्ग इतीति भावेन प्रागुक्तशङ्कामनू स्मृतौ तथोपासनेन फलस्य नानात्वमेवास्तीत्युक्तिलब्धसमाधिना निराह ॥ न चेति । वत्सरेति ॥ संवत्सरोऽनन्तः तन्मध्यपतितमासा अप्यनन्ताः । तथापि संवत्सरानन्त्यापेक्षय मासानन्त्यं तदपेक्षया वासराणामानन्त्यं ततोऽपि क्षणलवादीनामानन्त्यमधिकमिति सर्वानुभवसिद्धमिति । प्रकृतेऽपि भगवदानन्दाद्येकैकगुणेऽपि बहून्यानंत्यानि संत्येव । तथापि तत्तद्योग्यतानुरोधेन तानि तान्येवानंत्यानि तं तमधिकारिणं प्रतिभान्ति ध्यानकाले नान्यानि । यथानन्तकोटिसूर्यप्रकाशोऽपि हरिरधिकारिभेदेन सहस्रलक्षामितभास्करोपम इत्युच्यते तथेत्यर्थः । उक्तं च द्वितीयगीताभाष्यटीकायां सहस्रलक्षामितकान्तिकान्त-मित्येतद्व्याख्यावसरे द्रष्टृपुरुषयोग्यताभेदात्त्रिधोक्तिरिति । विवृतमेतद्वैशेषिकाधिकरणानु-व्याख्यानसुधयोरणुत्वाविश्रांत्युक्तिप्रकरणे । तच्च ब्रह्मपरं साक्षात्सर्वानंत्ययुतं सदेत्यन्तेन ग्रन्थेन । ननु तावन्मात्रोपासने कथं न मिथ्योपासनमित्यत आह ॥ अन्येति ॥ एतावदेवास्यानंत्यं नातोऽधिकमित्यनुपासनादित्यर्थः । तावत्त्वमेव नैव स्याद्देशोऽप्येतन्न नो मतमिति वैशेषिकनयानुभाष्योक्तेरिति भावः । अङ्गुष्ठमात्र इत्युपासनमपि व्यक्त्यपेक्षयैव । न तु वस्तुत इति हृद्यपेक्षयेत्यत्र व्यक्तम् । अत्र केनचिदर्वाचीनेनोक्तदूषणालग्नताप्रकारः कण्टकोद्धारे व्यक्तः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ अत इति ॥ शब्दादिभेदादित्यर्थः । तदर्थः प्राग्विवृत शब्दादिभिरित्यादिना । नानेति सौत्रप्रतिज्ञायां भावप्रधानत्वं भूम्न इत्यनुवृत्तिं चोपेत्यार्थमाह ॥ भूमत्वेति ॥ उपासनाप्रकरणाद्दृष्टावित्युक्तम् ॥ ६० ॥

## वाक्यार्थमुक्तावली

ॐ नानाशब्दादिभेदात् ॐ ३-३-६० ॥ अत्रानन्तरसङ्गतिः स्पष्टा । प्रकृत इति । आनन्दादिविशेषतयोपास्यतया प्रकृतो भूमगुणः किमधिकारिणामेकप्रकारेण प्रतीयते, उत तारतम्येनेति चिन्ता । तदर्थं भूमत्वे विशेषकल्पना न सम्भवत्युत सम्भवतीति । उभयविधेति । अनर्घ्यरत्नादिकं हि परीक्षकदृष्ट्यनुसारेण तारतम्येन प्रतीयते । स्तम्भो हि सर्वान् प्रत्येकप्रकारेणेत्युभयविधवस्तुदर्शनमित्यर्थः । शब्दादिभेदादित्यंशव्यावर्त्यमकल्पने-
त्यक्तत्यायां ...

(वाक्यार्थमुक्तावली)

सूत्रे भूमत्वमित्यनुवर्तते । उपास्यत इति शेषः । सर्वं वाक्यं सावधारणमिति नानैव
लभ्यत इति भावेन प्रवृत्तं भूमत्वमपि नानैवोपास्यत इति भाष्यं व्याचष्टे । भूमत्वमिति
तद्धेतुत्वेनानूनतेत्युक्तसिद्धान्तन्यायप्रदर्शकं शब्दादिभेदादित्यंशं प्रमाणेन व्याकुर्वञ्छ
इत्यादिभाष्यं व्याचष्टे । शब्दादिभिरिति । एतेन शब्दादीनां प्रमाणानां भेदादि
कारिभेदमपेक्ष्य भेदादनेकधा एकार्थप्रतीतिजनकत्वात् प्रतीतेः प्रमाणजन्यत्वेन मिथ्योपासन
भावात् भूमत्वमुपासने नानाप्रकारेणैव प्रतीयते इत्यर्थ उक्तो भवति । ''शब्दोऽनु
तथैवाक्ष'' इति क्रमनियामकमाह । तत्वनिर्णय इति । ननु निरवधिकपूर्णत्वरूपभूमत्वस्यै
प्रकारत्वात् प्रमाणान्यपि विद्यमानमर्थं कथं दर्शयेयुरित्यत आह । न चेति । यथा वत्सरा
मासानां चानन्त्येऽप्येकैकवत्सरस्य द्वादशमासात्मकत्वेन वत्सरानन्त्यात् मासान
विशेषोऽस्ति । एवमानन्दादौ स्वस्वाधिकारानुसारेणोपस्थिते पूर्णत्वेऽपि विशेषो विद्यत
भावः । ननु स्वस्वाधिकारानुसारेणोपस्थिते पूर्णत्वस्य मासानन्त्यापेक्षया वत्सरानन्त्यस्ये
सम्यक्पूर्णत्वेन केषाञ्चिन्मिथ्योपासनाप्रसङ्ग इत्यत आह । अन्येति ।

## तत्त्वसुबोधिनी

ॐ नानाशब्दादिभेदात् ॐ । अधिकारिणां विशेषेति । पूर्वाधिकरणोक्तभूमगुणोपा
अधिकारिणां विशेषसमर्थनान्दनन्तरसंगतिरिति भावः । उक्तानुपपत्तेरिति । उक्तात
तम्यानुपपत्तेरित्यर्थः । कुतो न इत्यत आह । तथात्वेति । ननु प्रत्यक्षस्य सर्वप्रमाणो
जीवित्वेन सूत्रे प्रत्यक्षादिभेदादिति वक्तव्यम् । यदि तन्मुख्यमित्युक्तरीत्या करणेषु शब्द
प्रधान्यात् सूत्रे तदादित्वेन ग्रहणम् । तर्हि स्मृतावनुमानस्य शब्दानन्तरं तदनन्तरं
प्रत्यक्षस्य ग्रहणे किं निमित्तमित्यत आह । तत्वनिर्णय इति । ननु प्रमाणान्यप्यविद्यमान
दर्शयेयुः इत्याशङ्क्य परिहरति । नचेति । विशेषवदतीतवत्सराणामानन्त्येऽपि अन्ये
अवान्तरविशेषवदित्यर्थः । नन्वत्र भूमत्वे विशेषसद्भावे केषांचित् किंचित्पूर्णानन्द
मिथ्योपासनप्रसंग इत्यत आह । नान्यनिषेधकत्वादिति ॥ ३८ ॥

## वाक्यार्थविवरणम्

विशेषः तारतम्यम् । अन्यथा भूमोपासने अधिकारविशेषाभावे ॥ उक्तेति
उपासकतारतम्येत्यर्थः ॥ उभयविधेति ॥ दूरस्थं वस्तु दूरवर्तिभिस्तारतम्येन प्रतीयते

(वाक्यार्थविवरणम्)

शब्दादीनां चेति ॥ नानोपासनाच्चेति ॥ पूर्णत्वस्य तरतमभावेनोपासनादित्यर्थः । तत्त्व निर्णय श्रवणरूपशब्दफलम् । वेदार्थनियमो मननरूपानुमितिफलम् । अपरोक्षज्ञानं ध्यानरूपप्रत्यक्षफलमिति ध्येयम् ॥ शब्दादिक्रमः ॥ ''शब्दोऽनुमा तथैवाक्ष'' इति क्रमः विशेषः तारतम्यम् । विशेषवत् तारतम्यवत् ॥ अत्रापीति ॥ पूर्णत्वेऽपि तारतम्यो पत्तेरित्यर्थः । ''समुद्रः पूर्णः, घटः पूर्णः'' इत्युक्ते पूर्णत्वेऽपि तारतम्यप्रतीतिदर्शनादि त्यपि द्रष्टव्यम् । ॥ अन्येति ॥ अल्पपूर्णत्वं स्वयोग्यतानुसारेण यैरुपास्यते तैरल्पपूर्ण त्वमेवास्ति हरेर्नाधिकं पूर्णत्वमस्तीति यद्युपास्येत तर्ह्येव अन्यथोपासनं स्यात् । चैवमुच्यते। अन्यनिषेधेन तैरुपासनाया अकरणात् । निरवधिकपूर्णे च हरौ किञ्चित्पूर्ण त्वादेरपि सत्त्वात् । न हि निरवधिकपूर्णे समुद्रे घटनिष्ठपूर्णतासदृशं पूर्णत्वं नास्तीति शक्य वक्तुम् । तथात्वे निरवधिकपूर्णत्वस्यैवाप्राप्तेरिति ॥ तथोक्तं 'महागुणस्य चाल्पोऽपि गुण स्यादिति चेद्भवेत् । तावत्त्वमेव नैव स्यादि'तीति सम्प्रदायविदः ॥ भूमत्वदृष्टौ भूमत्वोपासने ॥ विशेषः तारतम्यम् । तारतम्यं तदुपासकानामिति शेषः ॥

## वाक्यार्थमञ्जरी

उक्तेति यावदधिकारमित्युक्तफलतारतम्यमित्यर्थः ॥ भूमत्व इति ॥ न हि विभून देशतः पूर्णत्वे विशेषोऽस्तीति भावः । सत्यपि विशेषेऽनुपपत्तिमाह ॥ नहीति ॥ मिथ्येति । भगवदानन्दे किं चित्पूर्णत्वाभावादिति भावः ॥ ॐ नानाशब्दादिभेदात् ॐ ॥ भूमत्वं नाना तारतम्येनैव प्रतीयते कुतः शब्दादिप्रमाणानां भेदात् । तारतम्येन ज्ञानजनकत्वस्वा- भाव्यादित्यर्थः । ननु प्रत्यक्षस्य सर्वप्रमाणोपजीव्यत्वेन प्राधान्यात्सूत्रे प्रत्यक्षादीति वक्तव्यम्। यदि ''तन्मुख्यं ज्ञानशब्दयो''रित्युक्तरीत्याकरणेषु शब्दस्य प्राधान्यात्तदादित्वेन ग्रहणं तर्हि स्मृतौ शब्दानन्तरं प्रत्यक्षमनुक्त्वानुमानग्रहणे किं निमित्तमित्यत आह । तत्त्वनिर्णय इति ॥ ननु प्रमाणान्यप्यविद्यमानार्थं कथं दर्शयेयुरित्याशङ्क्य परिहरति ॥ न चेति ॥ अतीतेति ॥ वर्षापेक्षया वासराणां बहुत्वादिति भावः ॥ अत्रापीति ॥ घटकूपादीनां जलपूर्णत्वे विशेषदर्शनादिति भावः ।

## ३९. विकल्पाधिकरणम्

॥ ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ ६१ ॥

स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भव विशिष्टफलापेक्षया ।

'मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।
नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये ॥
उपास्यते यथायोगं न वा फलविभेदत' इति (च) ब्रह्मतर्के ॥ ६१ ॥

॥ इति विकल्पाधिकरणम् ॥ ३९ ॥

### तत्त्वप्रदीपिका

विकल्पो विशिष्टफलत्वात् ॥ स्वयोग्यरूपं यथोक्तकालमुपास्य पश्चात्सामान्यस्य वैष्णवत्वे समानतया वर्तमानस्य कस्यचिद्रूपस्योपासनं विकल्पेन भवति कर्तव्यं नवेति । न स्वयो यथोक्तकालमनुपास्य ।

''मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः ।
वेत्ति तस्योक्तिमार्गेण कुर्वतः स्याद्धि दर्शनमि''ति ह्यनुव्याख्याने ।

नाप्यवैष्णवस्य वैष्णवे कृतेन विरोधः । विशिष्टफलापेक्षया हि क्रियते । यद्यपि न केव मुक्तिफलापेक्षया तथाऽपि मुक्तिद्वारभूता दुरिताज्ञानान्यथाज्ञानकामादिनिवृत्तिरुत्तममेव फल पेक्ष्यते । नृसिंहादिकं नृसिंहकृष्णादिकम् । वक्ष्यति च–

''अनादिजन्मसम्बद्धं निर्भेत्तुं पापपञ्जरम् ।
यावत्या सेवया शक्यं तावत्कार्यं न संशय'' इति ॥ नवा क्रियते, अन्यफलापेक्षत्वात् ॥

### तत्त्वप्रकाशिका

अत्र हरिदर्शनोपयोगिबिम्बोपासनस्याकर्तव्यतानिरासादस्ति शास्त्रादिसंगतिः । अन्य तापनीयादिश्रुतिवैयर्थ्यप्रसङ्गात्समर्थनीयमेतत् । तत्प्रकृतोपासनं विषयः । मुमुक्षुणा स्वबिम्बाति रिक्तरूपविषयं कर्तव्यं न वेति सन्देहः । बिम्बोपासनोक्तेरनवधारणाया उभयथाप्युपपत्ति

वा । नाद्यः । तदभावात् । अन्यथोक्तं व्याहन्येत । न द्वितीयः । तस्य मोक्षार्थत्वाभावाद कारिणो मुमुक्षुत्वात्प्रत्युत बिम्बोपासनविघ्नाय चेति । अतो मुमुक्षुणा न तदुपासनं कार्यमि तद्विद्यावैयर्थ्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ विकल्प इति ॥ स्वमोक्षसाधनातिरिक्त नरसिंहाद्युपासनं कर्तव्यं न वा । न तु न कर्तव्यमेव । तस्य मोक्षार्थोपासनानन्तरभावित दुरितादिनिवृत्तिलक्षणमोक्षोपयोगिफलसाधनत्वेन चोक्तदोषाभावात् । किं तु विकल्पस्तु य विशिष्टफलापेक्षास्ति तेन कर्तव्यम् । यस्य तु नास्ति तेन नेति । स्वयोग्योपासनयैव तीव्र दुरितादिनिवृत्त्युपपत्तेरिति भावः । अत्रैव स्मृतिमाह ॥ मुक्त्यर्थमिति ॥ नृसिंहादिकमन्यच्चे सामानाधिकरण्यम् । अतोऽन्योपासनस्यापि कर्तव्यत्वान्न विद्यावैयर्थ्यमिति सिद्धम् ॥ ६१ ॥

## गुर्वर्थदीपिका

तापनीयविद्यापदेन नृसिंहतापनीयोपनिषद्गृह्यते । तदभावादित्यस्य बिम्बोपासनेनै मोक्षसिद्धेर्बिम्बातिरिक्तोपासनस्य मोक्षहेतुत्वाभावादित्यर्थः । अतो मुमुक्षुणा न तदुपास कार्यमित्यत्र तस्यामेवोपनिषदि तदुपासनस्यापमृत्युपरिहारादिमोक्षेतरफलकत्वोक्तेरि भावः । तस्य मोक्षार्थोपासानन्तरभावित्वेनेत्यत्र समग्रोपासनानन्तरमपरोक्षज्ञानोत्पत्तिनियमे तन्मध्ये प्रतिबन्धकदुरितादेरसम्भवात् । ज्ञानोत्तरकालमप्रारब्धसकलदुरितानां ज्ञानेनै विनाशेन सुतरामसम्भवाच्च । उपासनापरिपाकात्प्रागेव दिने दिने क्रियमाणोपास्तौ मध्ये मध्ये दुरितवशाद्वा विघ्नकर्तृकल्यादिबलेन वा मनोविक्षेपेणोपासनविच्छेदे सति क्रियमाणो-पासनं कुरुत इत्यत एकदैवाणुना मनसा उपासनद्वयानङ्गीकारान्नावान्तरोपासनं नित्योपा-सनविघ्नकारि नाप्यनुपयोगीति भावः ॥

## भावबोधः

ओं विकल्पो विशिष्टफलत्वात् ओं ॥ ६१ ॥ बिम्बोपासनस्याकर्तव्यतानिरासादिति । "नैवा भूमा फलमेषां विधत्त" इत्युक्तरीत्या भूमत्वस्यानुपासने फलानुदयेन संभृत्याद्युपा-सनस्येव भूमत्वोपासनस्याकर्तव्यता न युक्तेति पूर्वाधिकरणद्वयोक्तन्यायेनैवात्रापि दर्शनप्रति-बन्धकनिरासकनृसिंहाद्युपासनस्याकृतौ दर्शनादिफलानुदयेन तदुपासनस्याकर्तव्यतानिरासाद-नन्तरसङ्गतिरिति भावः । [illegible]

भवत्युत न भवतीति । शुद्धसाधनवैरूप्यान्मोक्षसाधनत्वेनोपदिष्टं विना विष्णावेवोपासनान्तरस्याकर्तव्यतेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– न कर्तव्यमित्यादिना । उक्तं व्याहन्येतेति । ''न सामान्यादप्युपलब्धे:'' इत्यत्राबिम्बदर्शनस्य मोक्षसाधत्वं नास्तीत्युक्तमित्यर्थ: । सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवतीति भाष्यं व्याचष्टे– स्वमोक्षसाधनेति । स्वयोग्योपासनानन्तरमिति भाष्यं व्याचष्टे– तस्येति । अनेन प्रत्युत ''बिम्बोपासन विघ्नाय च'' इति दोषोद्धार: कृत: । अविघ्नतासाधनत्वादिति न्यायविवरणं व्याचष्टे– दुरितादीति । अनेन ''तदभावात्'' इति दोषो निरस्त: । विशिष्टफलापेक्षयेति भाष्यं व्याचष्टे– विकल्पश्चेति ॥ ३९ ॥

## भावदीप:

ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ अत्र संगतित्रयोपपादनाय हरीति दर्शनोपयोगीति उपासनस्येति चोक्ति: । पूर्वत्र सर्वसाधारणगुणोपास्तौ विशेष उक्तोऽत्र तु रूपोपास्तौ विशेष उच्यत इति पूर्वसंगतिसूचनाय बिंबेत्युक्ति: ॥ अकर्तव्यतेति ॥ नियमेनेति योज्यम् । विकल्पेन कर्तव्यतासमर्थनादित्यर्थ: । उपासनान्तरस्याकर्तव्यतेति न्यायविवरणानुरोधादेवमुक्ति: । प्रागुक्तेर्विरोधाभावादाह ॥ तापनीयेति ॥ नृसिंहतापनीयहयग्रीवादिविद्यावैयर्थ्येत्यर्थ: । आध्यानाय प्रयोजनाभावादित्युक्तन्यायेन सर्वस्य ध्यानार्थत्वादिति भाव: । न च प्रागुक्तप्रमेये विरोधाभावाद्व्यर्था चिन्तेति शङ्क्यम् । तापनीयाद्युक्तस्यानुपास्यत्वमिव वाक्यान्तरोक्तगुणान्तरस्यापि तथात्वसंभवेनाध्यानायेत्यत्र गुणान्तरोपसंहारसमर्थनमयुक्तं स्यादिति तात्पर्यात् । कर्तव्यं न वेत्यनन्तरं न कर्तव्यमेव वेति पूर्वपक्षकोटिरप्यध्याहार्या । तेन न पूर्वपक्षाद्यननुगुण: सन्देह इति ज्ञेयम् ॥ बिंबेति ॥ तद्विजिज्ञासस्व स विजिज्ञासितव्य: आत्मन्येवात्मानं पश्येदित्यादिविधेरुभयथापि अन्यस्य नियमेनाकर्तव्यत्वे विकल्पेन कर्तव्यत्वे चेत्यर्थ: । शुद्धमोक्षसाधनवैरूप्यात् मोक्षसाधनत्वेनोपदिष्टं विना विष्णावेवोपासनान्तरस्याकर्तव्यतेत्यन्यत्रोक्तपूर्वपक्षप्रतिज्ञां तावदाह ॥ नेति ॥ मुमुक्षुणा स्वबिम्बातिरिक्तरूपविषयमुपासनमित्यनुकर्ष: । न कर्तव्यमेवेत्यर्थ: । विनेत्यन्तं वाक्यं विकल्पमुखेन व्याचष्टे ॥ किमिति ॥ वैरूप्यादित्यन्तस्यार्थ: । तदभावान्मोक्षार्थत्वाभावादिति ॥ उक्तमिति ॥ न सामान्यादपीत्युक्तमित्यर्थ: । विनेत्यन्तस्य तात्पर्योक्तिरधिकारिणोऽममक्षत्वादिति । विष्णोरेवेत्येवकारभावमाह ॥ पत्यतेति ॥ यदा

(भावदीपः)

वैरूप्यादित्यस्य प्रतिकूलत्वादित्यर्थान्तरमुपेत्याह ॥ प्रत्युतेति ॥ अत इति मोक्षसाधनवैरूप्यादित्यर्थः ॥ सामान्यस्यापीत्यादिभाष्यार्थमाह ॥ स्वमोक्षेति ॥ सूत्रे सामान्यादित्यतः सामान्यस्येत्यनुवर्तत इति भावः । विकल्पशब्दार्थः कर्तव्यं न वेति स्वयोग्योपासनानन्तरमिति विशिष्टफलेति च भाष्यं न द्वितीय इत्यादिनोक्तशङ्कानिवर्तक हेतुत्वेन व्याचष्टे ॥ तस्येति ॥ अनेन प्रत्युतेत्युक्तदोषनिरासः ।

अविघ्नत्वसाधनत्वादित्यन्यत्रोक्त्यनुरोधेन विशिष्टफलं व्यनक्ति ॥ दुरितादीति ज्ञानादिप्रतिबन्धकदुरदृष्टं दुरितम् । अज्ञानकामक्रोधादिरादिपदार्थः । अनेन मुमुक्षुत्वा त्युक्तदोषनिरासः । साक्षान्मोक्षार्थत्वाभावेऽपि मोक्षोपयोगि यत्फलं ज्ञानादि तत्प्रतिब निवृत्तिद्वारा तत्साधनत्वादित्यर्थः । विकल्पः किं पूर्वविकल्प इत्युक्तगुरुविकल्पा वदव्यवस्थित उत न वा प्रकरणभेदादित्युक्तोपसंहारविकल्पवद्व्यवस्थित इत्यतो विशि भाष्यं विकल्पो भवतीत्यनेनान्विततया व्यवस्थितविकल्पोपपादकत्वेन व्याचष्टे ॥ विक स्त्विति ॥ षोडशिग्रहणाग्रहणवदिति भावः । ननु दुरितादिनिवृत्तेः सर्वापेक्षितत्वा नास्ति तेनेत्युक्तिः कथमित्यत आह ॥ स्वयोग्येति ॥ सर्वस्यापेक्षायां सत्या केषाञ्चिदधिकारिणां स्वबिंबातिरिक्तनृसिंहाद्युपासनेन विना मोक्षहेतुस्वयोग्यबिंबोपासन पुनःपुनरनुष्ठिततया नान्तरीयकदुरितनिवृत्तेरपि संभवादित्यर्थः । यस्य नास्तीत्युक्ति नृसिंहाद्युपासनजन्यदुरितादिनिवृत्तिरूपफलापेक्षा यस्य नास्तीत्यभिप्रायेति भावः ॥ अ ॥ स्वयोग्योपासनमेव मोक्षाय, नृसिंहाद्युपासनं तु तदुपयोगिदुरितादिनिवृत्तये विकल्पेने क्तार्थ इत्यर्थः । नृसिंहादिकं नृसिंहकृष्णहयग्रीवादिविष्णुरूपमन्यच्चावैष्णवं च यत्किञ्चि भ्रमनिरासायाह ॥ इति सामानाधिकरण्यमिति ॥ नृसिंहादीत्यादिपदेनैव विष्णुरूपान्तर ग्रहणमिव देवतान्तररूपग्रहणेऽप्यविरोधो मोक्षोपयोगिफलार्थत्वादित्यप्याहुः । तथा वक्ष्यति ''अनादिजन्मसंबद्धं निर्भेत्तुं पापपञ्जरम् । यावत्या सेवया शक्यं तावत्कार्य संशय'' इति ऐहिकमित्यत्र भाष्ये ॥ अत इति ॥ मोक्षोपयोगिदुरितादिनिवृत्तिस फलत्वादित्यर्थः ॥ न विद्येति ॥ ततश्चाध्यानायेत्युक्तं युक्तमिति भावः ॥६१॥ अ०३

## वाक्यार्थमुक्तावली

ॐ विकल्पो विशिष्टफलवत्वात् ॐ ३-३-६१ ॥ पूर्वमानन्दाद्युपासनस्य फलवत

रूपोपासनं विषय इत्यर्थः । विषयमेव व्यञ्जयन्सन्देहमाह । मुमुक्षुणेति । स्वबिम्बातिरि
विषयमुपासनं मुमुक्षुणा न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं किं तदुपा
मोक्षहेतुबिम्बोपासनप्रतिबन्धकमुत तन्निवर्तकमिति । अत्र बिम्बपदमुपलक्षणम्
स्वयोग्यरूपमात्रं द्रष्टव्यम्। यद्वा व्याप्तदर्शिप्रभृतिभिः स्वयोग्यरूपस्यैव हृदि प्राज्ञसंज्ञि
बिम्बाभेदेनोपास्यत्वात् बिम्बपदेनैव तद्ग्रहः । अनवधारण इति । बिम्बमेवोपास
मित्यवधारणाभावस्येत्यर्थः । विशिष्टफलत्वादिति सूत्रखण्डनिवर्त्यं शुद्धवैरूप्यमित्युक्तन्
विशदयन् पूर्वपक्षयति । तथा हीति । तदभावादिति । मोक्षार्थत्वाभावादित्यर्थः । ए
शुद्धसंज्ञितमोक्षवैरूप्यात् वैमुख्यात् तदर्थत्वाभावादिति न्यायार्थ उक्तो भवति । उक्तमिति
न सामान्यादप्युपलब्धेरित्युक्तमित्यर्थः । न द्वितीयः । शुद्धस्य मोक्षाधिकारिणो मुमुक्षुत
फलान्तरविमुखत्वान्न फलान्तरार्थं तदुपासनम् । प्रत्युत शुद्धमोक्षसाधनीभूतबिम्बोपास
विरोधित्वात् तद्विघ्नाय च तद्भवतीति न कर्तव्यमित्यर्थः ।

सूत्रे सामान्योपासनस्येति शेषः । विकल्पो विविधः कल्पः कर्तव्यो न वेति न तु
कार्यमेवेति नियम इति भावेन प्रवृत्तं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवती
भाष्यं व्याचष्टे । स्वमोक्षेति । सामान्यस्यापीत्यस्य मोचकतया यत्स्वसाधारणं
तदतिरिक्तस्येत्यर्थ उक्तो भवति । यद्यपि नरसिंहादिकं केषाञ्चिद्योग्यरूपमेव तथ
तदतिरिक्ताधिकारिणां तत्सामान्यमिति ज्ञेयम् । स्वयोग्योपासनानन्तरमिति भाष्यं व्याच
तस्येति । तस्य मोक्षार्थोपासनानन्तरभावित्वेनोक्तदोषाभावादित्यन्वयः । अनेन प्रत
बिम्बोपासनविघ्नाय चेत्युक्तदोषः परिहृतो बोध्यः । एतेनाविघ्नतेत्युक्तन्यायः नृसिंहा
पासनस्य योग्यरूपोपासनविघ्नत्वाभाव इति विवृतो भवति । पूर्वपक्षिणा तदभावादिति
नृसिंहाद्युपासनस्य मोक्षयोगित्वाभाव उक्तः । तद्दोषपरिहारायाविघ्नतेत्युक्तन्यायप्रदर्श
विशिष्टफलत्वादित्यंशं व्याकुर्वद्विशिष्टफलापेक्षयेति भाष्यं व्याचष्टे । दुरितादीति
आदिपदेनाज्ञानमिथ्याज्ञानकामादिर्गृह्यते । एतेन विशिष्टफलापेक्षयेत्यस्य ज्ञानमोक्षविघ्नरू
दुरितादिनिवृत्तिरूपं यद्विशिष्टं मोक्षोपयोगितयोत्तमं फलं तद्धत्वात्कस्यचिदुपासनं कर्त
मित्यर्थ उक्तो भवति । अविघ्नतेति न्यायस्य विघ्नविरोधितेत्यप्यर्थ उक्तो भवति । ननु य
तापनीयादिश्रुतिविहितत्वाद्दोषद्वयाभावाच्च नृसिंहकृष्णाद्युपासनस्य कर्तव्यता तर्हि तस्यावश
मपेक्षणीयत्वे विकल्पः कथमिति शङ्कते । किन्त्विति । तदुत्तरत्वेन विकल्पेन भव
विशिष्टफलापेक्षयेति भाष्यं प्रकारान्तरेण व्याचष्टे । विकल्पश्चेति । यस्य नृसिंहाद्युपासन

दुरितादिनिवृत्तिरूपविशिष्टफलापेक्षास्ति तेन कर्तव्यम् । यस्य तु नृसिंहाद्युपास
दुरितादिनिवृत्तिर्नेष्टा तस्य तन्न कर्तव्यमित्यर्थः । तर्हि तद्दुरितादिनिवर्तकं किमित्यत आह
स्वयोग्ययेति । फलविभेदत इति भाष्यस्यायमर्थः । दुरितादिनिवृत्तिरूपफलाकाङ्क्षाभाव
भावभेदत इत्यर्थः ।

## तत्त्वसुबोधिनी

ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ नैव भूमा फलमित्युक्तरीत्या भूमत्वस्यानुपास
फलानुदये संभृतिद्युपासनस्येव भूमत्वोपासनस्याकर्तव्यता न युक्तेति पूर्वाधिकरणद्वयोक्त
न्यायेनैवात्रापि दर्शनप्रतिबन्धकनिरासकनरसिंहाद्युपासनस्याकृतौ दर्शनादिफलानुदय
तदुपासनस्याकर्तव्यतानिरासादानन्तरसंगतिरिति भावः । उक्तं व्याहन्येतेति ।
सामान्यादप्युपलब्धेरित्यत्र बिम्बदर्शनस्य मोक्षसाधनत्वं नास्तीत्युक्तमित्यर्थः । सामान्य
स्यापीति भाष्यं व्याख्याति । स्वमोक्षेति । स्वयोग्योपासनानन्तरमित्येतद्व्याचष्टे । तस्येति
अनेन प्रत्युत बिम्बोपासनविघ्नायचेति दोषोद्धारः कृतः । तदभावादित्युक्तदोषं निरस्यति
दुरितादिति । तर्हि किमित्यत आह किं तु विकल्पश्चेति । तमेव प्रकटयति । यस्येति
विशिष्टफलानपेक्षस्य दुरितादिनिवृत्तिः कथमित्यत आह । स्वयोग्योपासनयेति ।

## वाक्यार्थविवरणम्

अबिम्बोपासनस्य ॥ बिम्बरूपभिन्ननृसिंहादिभगवद्रूपोपासनस्य ॥ तापनीयादीति ।
तापनीयादिश्रुतीनां नृसिंहाद्युपासनाप्रतिपादकत्वादिति भावः ॥ बिम्बोपासनोक्तेः ।
सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादित्युक्तेरित्यर्थः ॥ अनवधारणाया इति ॥ यदि
मुक्तिर्योग्यात्मदर्शनादेवेति बिम्बोपासनोक्तिः सावधारणा स्यात्तदैव नोभयथाप्युपपत्तिः
स्यात् । न चैवम् । तदुक्तेर्निरवधारणत्वात् । अतोऽबिम्बोपासनकर्तव्यतानिषेधकत्वा-
भावाद्बिम्बोपासनोक्तिः सावकाशेत्युभयथाप्युपपत्तिरिति भावः ॥ तदभावादिति ॥
तदुपासनेन मोक्षाभावादित्यर्थः ॥ उक्तमिति ॥ न सामान्यादित्यत्र सामान्यदर्शनाल्लोका
इति स्वबिम्बातिरिक्तरूपविषयोपासनस्योक्त...

(वाक्यार्थविवरणम्)

मोक्षेतरफलानिच्छुत्वात् फलान्तरार्थं तेनाधिकारिणा एतदुपासनं न कार्यमिति भावः ॥ उक्तदोषेति ॥ परम्परया यथाकथञ्चिन्मोक्षोपयोगिफलकत्वेन तदभावादित्युक्तदोषाभावादित्यर्थः ॥ विशिष्टफलेति ॥ दुरितादिनिवृत्तिलक्षणमोक्षोपयोगिफलेत्यर्थः । ननु यस्य नास्ति तेन नेत्युक्तमयुक्तं, प्राप्तदुरितपरिहारोपायाभावादित्यत आह ॥ स्वयोग्येति ॥ स्वबिम्बेत्यर्थः । स्मृतौ न वेति । दुरितारिनिवृत्तये नोपास्यते । कुतः । फलविभेदतः दुरितनिवृत्तिलक्षणभिन्नफलस्य सत्त्वात् । तस्य चाधिकारिण एतदुपासनया दुरितपरिहारेच्छाभावात् । तीव्रबिम्बोपासनयैव तदुपपत्तेरित्यर्थः । दुरितादिनिवृत्तये नृसिंहादिकं, तदन्यत् बिम्बरूपं च दुरितादिनिवृत्तये उपास्यत इत्यन्यथाप्रतीतेराह ॥ नृसिंहादिकमन्यच्चेति ॥ सामानाधिकरण्यमिति ॥ तथा च बिम्बरूपादन्यत् यत् नृसिंहादिकं तत् इत्यर्थो द्रष्टव्यः ॥ विद्येति ॥ तापनीयादिश्रुतिरूपा नृसिंहाद्युपासनाभिधायकविद्येत्यर्थः ।

## वाक्यार्थमञ्जरी

अबिंबोपासनस्येति ॥ बिम्बातिरिक्तरूपोपासनस्येत्यर्थः ॥ तापनीयेति ॥ तस्यान्यरूपोपास्तिपादकत्वादिति भावः ॥ अन्यथेति ॥ अबिम्बोपासनस्य मोक्षहेतुत्वे न सामान्यादप्युपलब्धेर्मृत्युरित्यत्रोक्तबिम्बातिरिक्तदर्शनस्य मोक्षसाधनत्वं नास्तीत्येतद्व्याहन्येतेत्यर्थः ॥ मुमुक्षुत्वादिति ॥ तथाच मोक्षेतरफले विरक्तस्य न फलान्तरापेक्षया तत्करणमिति भावः ॥ विघ्नायेति ॥ अबिम्बोपासनं भवतीति शेषः ॥

ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ अबिम्बोपासनस्य विकल्पो विविधकल्पोऽनियम इति यावत् । कुतः विशिष्टफलत्वात् विलक्षणफलकत्वादित्यर्थः ॥ उक्तदोषद्वयेति ॥ उक्तहेतुद्वयेन क्रमेण विघ्नकारित्वममुमुक्ष्वतत्वयोर्निरासादिति भावः । नृसिंहादितोन्यदिति भ्रमं निवारयति ॥ नृसिंहादिकमिति ॥ तथा च योग्योपासनादन्यनृसिंहादिकमित्यन्वय इति भावः ॥ ३९ ॥

## ४०. काम्याधिकरणम्

**॥ ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ ६२ ॥**

अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ।
तुष्ट्यर्थमीश्वरस्यैव नैवोपासा विदुष्यती’ति बृहत्तन्त्रे ॥ ६२ ॥

॥ इति काम्याधिकरणम् ॥ ४० ॥

## तत्त्वप्रदीपिका

काम्यास्त्वित्यादि सूत्रम् । यस्य यस्य यो धनैश्वर्यादौ कामो भवति तस्य तस्य हि तदर्थमुपासनम् । स चोपासकस्तादृशान्गुणानुपसंहरेत्, न मुक्त्यर्थानेव । नवा मुमुक्षूणां काम्योपासनम् । अकामत्वात्तेषां येन मुक्त्यर्थमुपासनं विच्छिद्यते । अतोऽत्यन्तायामापद्येव तदिति गम्यते । तदाऽपि नान्यकामनयैतदुपासनम् । तदपि ह्याह– ‘‘तुष्ट्यर्थमीश्वरस्यैव नचोपासा- विदुष्यती’’ति । ‘‘सकामेभ्योऽमितगुणा याऽकामैस्तु कृता क्रिये’’ति चान्यत्राऽह ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनस्यैवोपासनस्यावश्यकत्वसमर्थनादस्ति शास्त्रादिसंगतिः । काम्योपासनस्याप्यावश्यकत्वे प्रथमपादानुपपत्तिप्रसङ्गात्समर्थनीयम् । प्रकृतोपासनमेव विषयः । कामसाधनभगवद्रूपगुणविषयं तावत्कर्तव्यमेव । अन्यथा तद्विद्यावैयर्थ्यात् । तत्किमावश्यकं वैकल्पिकं वेति संन्देहः । द्विविधोपासनप्रतीतिः सन्देहबीजम् । आवश्यकमिति पूर्वः पक्षः । मोक्षोपयोगिफलत्वात् । अर्थादिकं हि तत्फलम् । तेन च ज्ञानसिद्धेः । अतः काम्योपासनस्यावश्यकत्वेन वैराग्यस्यानपेक्षितत्वाद्व्यर्थः प्रथमपाद इति । सिद्धान्तयत्सूत्रं पठति ॥ काम्यास्त्विति ॥ कामसाधनरूपे कामसाधनगुणाः । स्वस्वकामानुसारेणोपसंहर्तव्या न वेति विकल्प एव न तु नियतिः । विकल्पश्चामुमुक्षुभिः कार्यो मुमुक्षुभिर्नेति । मुमुक्षूणां कामाख्यहेत्वभावात् । मुमुक्षुष्वेव वा विकल्पः । फलार्थं न कार्यमीश्वरप्रसादार्थं कार्यमिति । कुतः । कामाख्यहेत्वभावात्प्रबलहेत्वभावाच्च । न ह्यर्थादिकं विना ज्ञानाभावो नापि तेन नियत्या भवतीति सूत्रार्थः । अत्रैव स्मृतिमाह ॥ यस्येति ॥ यस्य यस्य पुंसो यो यो वित्तादिकामोऽसावसौ तस्य तस्य तत्कामप्रदरूपस्योपासनं प्रकल्पयेत् । तादृशानां तत्तत्कामप्रदानां गुणानां तत्रोपसंहारं च प्रकल्पयेत्कुर्यादमुमुक्षुरित्यर्थः । अत उक्तरीत्या काम्योपासनस्य वैकल्पिकत्वात्सार्थक्यं वैराग्यपादस्येति सिद्धम् ॥ ६२ ॥

## भावबोधः

ओं काम्यासु यथाकामं समुच्चीयेरन्न वा पूर्वत्वभावात् ओं ॥ ६२ ॥ ब्रह्मज्ञानसा
पासनस्यैवावश्यकत्वसमर्थनादिति । काम्योपासनस्यावश्यकत्वनिरासे ब्रह्मज्ञानसाधनोपा
स्यावश्यकत्वं सिध्यतीति भावः । यदि मोक्षोपयोगिफलसाधनत्वेन नृसिंहाद्युपासनं
तर्हि तेनैव न्यायेन काम्योपासनमपि कार्यमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्र पूर्वपक्षो
नादनन्तरसङ्गतिरिति भावः । अत एवोक्तं मोक्षोपयोगिफलत्वादिति । कामेत्यादि ।
कामसाधनं भगवद्रूपगुणविषयमुपासनं किमावश्यकमुत वैकल्पिकमिति चिन्ता ।
तस्यावश्यमोक्षोपयोगिफलत्वमस्त्युत नास्तीति । तत्साध्यार्थादिकं विना मोक्षो न संभव
संभवतीति । कामसाधनानामपि गुणानामङ्गत्वादेवोपसंहर्तव्यतानियम इति न्यायविवरण
सारेण पूर्वपक्षमाह– आवश्यकमिति । कामसाधना गुणा इति । अनेन कामस्येमे का
संबन्धश्च साध्यसाधनरूप इत्युक्तं भवति । यथाकाममित्यस्यार्थः स्वस्वकामानुसारेणे
''समुच्चीयेरन्नवा'' इत्यस्यार्थ उपसंहर्तव्या न वेति विकल्प एवेति ॥

''तादृशानां गुणानां च समाहारं प्रकल्पयेत् ।
अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ॥''

इति स्मृत्यनुसारेण विषयव्यवस्थया विकल्पमेव व्यनक्ति– विकल्पश्चेति । कामाख्ये
अनेन मुमुक्षातः पूर्वो यः कामः तद्रूपहेत्वभावादिति हेतुवाक्यं ''अकामत्वान्मुमुक्षूणां''
स्मृत्यनुसारेण व्याख्यातं भवति ।

''तुष्ट्यर्थमीश्वरस्यैव न वोपासा विदुष्यति''

इति स्मृत्यनुसारेण प्रकारान्तरेण व्यवस्थाविकल्पं दर्शयति– मुमुक्षुष्वेवेति । उभयत्र
हेतुप्रतिपादकतया हेतुवाक्यमवतार्य व्याचष्टे– कृत इति । हेत्वभावेऽपि नृसिंहाद्युपास
फलान्तरार्थं क्रियमाणत्वेन व्यभिचार इत्यत आह– प्रबलेति । दुरितादिप्रतिबन्ध
लक्षणहेत्वभावादित्यर्थः । अनेन पूर्वस्य पूर्वाधिकरणोक्तस्य दुरितप्रतिबन्धकलक्षण
हेतोरभावादिति हेतुवाक्यं प्रकारान्तरेण व्याख्यातं भवति । मुमुक्षूणां कामाख्यहे
भावादित्यादिनैवानुपसंहारो विरोधाभावादिति न्यायविवरणांशोऽपि कामस्य दुरितादिप्र

नन्वर्थादेः ज्ञानहेतुत्वस्यैव काम्योपासने प्रबलहेतुत्वात् कथं प्रबलहेत्वभाव इत्याशङ्कानिरासाय प्रवृत्तं काम्यानामनियताङ्गत्वाद्वेति न्यायविवरणं व्याचष्टे– न हीति । स्मृतौ यस्य यस्य तस्य तस्येति यत्तच्छब्दयोः संबन्ध इति प्रतीतिं वारयन् तां यथावद्व्याचष्टे । यस्य यस्येत्यादिना । अमुमुक्षुरिति । ''न वा तेषामुपासनं'' इत्युत्तरवाक्यानुरोधेनामुमुक्षुरित्यध्याहारः ॥ ४० ॥

## भावदीपः

॥ ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ ब्रह्मज्ञानसाधनस्यैवेति ॥ अन्यस्यापि मुक्त्युपयोगितयाऽऽवश्यकत्वशङ्कायां तन्निरासेनेति भावः । एतेन मुक्त्यर्थमात्मयोग्यं हि कार्यमेवेति स्मृत्या पूर्वत्र ज्ञानसाधनमेवावश्यकमन्यत्तु नेत्युक्तस्येह समर्थनाद्वा पूर्वसिद्धान्तन्यायेन पूर्वपक्षोत्थानाद्वा पूर्वसङ्गतिरप्यस्य सूचिता ॥ प्रथमेति ॥ वैराग्यपादेत्यर्थः । अत्र न्यायविवरणे काम्यसाधनानामपि गुणानामङ्गत्वादेवोपसंहर्तव्यतानियम इत्युक्तम् । तदयुक्तम् । उपसंहार्यत्वस्यैवासिद्धौ तन्नियमोक्तेरनवसरदुःस्थत्वादित्यतः आध्यानायेति पूर्वोक्तदिशा तत्तद्विद्यावैयर्थ्यानुपपत्त्यैव सिद्धमिति काम्येत्यादेरर्थं वदन्नेवाह ॥ कामेति ॥ तद्विद्येति ॥ अथातो निर्भुजप्रवादाः अथातो निर्भुजवक्ता इत्यादिनोक्तवराहवामननृसिंहादिविद्या इत्यर्थः । तथा यच्छन्दसामृषभ इत्यादिविद्येत्यर्थः ॥ द्विविधेति ॥ बिम्बाबिम्बोपासनयोः पूर्वोक्तदिशाऽवश्यकत्व वैकल्पिकत्वदृष्टेरिति भावः । अङ्गत्वादेवोपसंहर्तव्यतानियम इत्यन्यत्रोक्तप्रतिज्ञाहेतू विवृण्वन्नाह ॥ अवश्यकमिति ॥ मोक्षोपयोगित्वं व्यनक्ति ॥ अर्थेति ॥ तेन च ज्ञानेति । प्रवचनाद्यनुकूलशिष्यादिसम्पादनद्वारा आमायन्तु ब्रह्मचारिणः स्वाहेत्यादेः कर्मकृतिद्वारा वा विविदिषन्ति यज्ञेनेत्यादेरिति भावः ॥ अत इति ॥ मोक्षोपयोगित्वादित्यर्थः ॥ छ ॥ स्मृत्यनुरोधेन सूत्रार्थं व्यनक्ति ॥ कामेति ॥ यथाकाममित्यस्यार्थः स्वस्वेति । समुच्चीयेरन्नेवेत्यस्यार्थः उपसंहर्तव्या न वेति । भावमाह ॥ विकल्प एव न तु नियतिरिति ॥ न वा तेषामिति स्मृत्यनुरोधेन सौत्रवाशब्दोऽधिकारिभेदेन व्यवस्थितविकल्पार्थ इत्याह ॥ विकल्पश्चेति ॥ मुमुक्षुभिर्नेति ॥ कुत इत्यतोऽकामत्वादिति स्मृत्यनुरोधेन सौत्रहेत्वर्थं व्यनक्ति ॥ कामेति ॥ तुष्ट्यर्थमिति स्मृतिशेषानुरोधेन यथाकामं भगवदिच्छाविशेषरूपप्रसादमनुरुध्य समुच्चीयेरन् यथाकामं चित्तादिकाममनुसृत्य न वेति सूत्रखण्डस्यार्थान्तरमाह ॥ मुमुक्षुष्वेवेति ॥ कुत इति

(भावदीपः)

॥ फलार्थं मुमुक्षुभिर्न कार्यमिति कुत इत्यर्थः । अकामत्वादिति स्मृत्यनुरोधेनानुपसंहारे विरोधाभावादिति न्यायविवरणानुरोधेन च सौत्रहेतुं द्वेधा व्याचष्टे ॥ कामेति ॥ प्रबलेति च ॥ एतेन पूर्वसूत्रोक्तविशिष्टफलत्वरूपहेत्वभावादित्यक्षरार्थ उक्तो ध्येयः । अस्त्वर्थादिकमेव प्रबलहेतुरित्यत आह ॥ न हीति ॥ यदृच्छालाभसन्तोषादिमतैकाकिनापि तत्संभवादिति भावः । कामानामनियतांगत्वाच्चेत्यन्यत्रोक्तमाह ॥ नापीति ॥ अत्रैवेति ॥ उक्तसूत्रार्थ एवेत्यर्थः । गुणानां चेति चशब्दानुरोधेन तस्य तस्येत्यस्य रूपपरत्वात्प्रकल्पयेदित्यत्र कर्त्राकाङ्क्षापूरणाय यस्य यस्येत्यस्य प्रतिसम्बन्धिशब्दावाह ॥ असावसाविति ॥। तत्तत्कामी पुमानित्यर्थः ॥ अत इति ॥ आवश्यकत्वे पूर्वहेत्वभावादित्यर्थः ॥ ६२ ॥ अ० ४० ॥

## वाक्यार्थमुक्तावली

ॐ काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॐ ३-३-६२ ॥ ब्रह्मज्ञानसाधनस्यैवेति । काम्योपासनस्यावश्यकत्वनिरासे ब्रह्मज्ञानसाधनोपासनस्यावश्यकत्वं सिद्ध्यतीत्यर्थः । यदि मोक्षोपयोगिफलसाधनत्वेन नृसिंहाद्युपासनं कार्यं तर्हि तेनैव न्यायेन काम्योपासनमपि कार्यमिति पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वपक्षोत्थानादनन्तरसङ्गतिः । प्रकृतोपासनमिति । सर्ववेदान्तप्रत्ययमिति कामसाधनभगवद्विद्यायाः प्रकृतत्वात्तत्र कर्तव्यत-योक्तं कामसाधनोपासनं विषय इत्यर्थः । तत्कामावश्यकं वैकल्पिकं वेति संदेह इत्यन्वयः । ननु कर्तव्यमकर्तव्यं वेति कुतो न सन्देह इत्यत उक्तं । कामसाधनेति । अत्र कामसाधनभगवद्रूपगुणविषयमुपासनमावश्यकमुत वैकल्पिकमिति चिन्ता । तदर्थं तत्फलस्य मोक्षोपयोगित्वं नियतमुत नेति । अत्र पूर्वहेत्वभावादिति सूत्रखण्डव्यावर्त्यमङ्गित्वमित्युक्त-पूर्वपक्षन्यायं दर्शयति । अर्थादिकं हीति । ''वसुपूर्णकरं रत्नं पर्वतस्थं विभावयन् । वसुसिद्धिमवाप्नोती'' त्यादेरिति भावः। तेन चेति । ''तुष्टोऽर्थेन गुरुर्यस्मात् कैवल्यं दातुमप्यलं'' इत्युक्तेरिति भावः ।

सूत्रे तुशब्दः नृसिंहाद्युपासनाद्विशेषद्योतकः । इतिशब्दोऽध्याहार्यः । विकल्प इत्यनुवर्तते । तेनावधारणार्थस्य तोरन्वय इति भावेन सूत्रार्थमाह । कामसाधनेति । अनेन

विकल्पश्च यथाकामं विषयकामं मोक्षकामं चानतिक्रम्य भवति ।विषयलम्पटैकार्थामुमुक्षुभिर्नेति व्यवस्थयेति सूत्रखण्डार्थ उक्तो भवति । मुमुक्षुभिर्नेत्यत्र पूर्वहेत्वभावादिति लिङ्गम् । तस्यार्थो मुमुक्षूणामिति । एतेन मुमुक्षातः पूर्वो यो वित्तादिविषयकामः तदभावान्मुमुक्षूणामित्यर्थ उक्तो भवति । एवं मुमुक्ष्वमुमुक्षुसाधारणचेतनेषु पुरुषभेदेन विकल्पमुक्त्वा मुमुक्षुकोटावेव फलभेदेन विकल्पपरत्वेन व्याचष्टे । मुमुक्षुष्वेवेति । एतेन काम्याः गुणाः यथाकाममीश्वरप्रसादमनतिक्रम्य तदर्थं मुमुक्षुभिः समुच्चीयेरन् । तैरेव तदन्यफलकामार्थं वा समुच्चीयेरन्नित्यर्थ उक्तो भवति । पूर्वहेत्वभावादित्यस्यार्थः कामाख्येति । तदुपपादनं पूर्ववत् । अर्थान्तरमाह । प्रबलेति । विशिष्टफलवत्वाख्यपूर्वाधिकरणोक्तप्रबलहेत्वभावादित्यर्थः । प्रबलहेत्वभावमुपपादयन्न विरोध इत्युक्तन्यायं च व्यनक्ति । न हीति । मोक्षोपयोगिफलसाधनत्वं हि विशिष्टफलत्वं । अर्थरूपस्य काम्योपासनफलस्य मोक्षोपयोगफलत्वं च तत्साधनज्ञानहेतुत्वादिति वक्तव्यम् । न चार्थस्य ज्ञानहेतुत्वं व्यतिरेकतोऽन्वयतश्च व्यभिचारात् । तथा चार्थादिहेतूपासनाभावेऽप्यविरोधात् न तस्यावश्यकत्वमिति भावः । स्मृतौ यस्य तस्येति यत्तच्छब्दैरेकविषयत्वं वारयन्नर्थमाह । यस्य यस्येति ।

## तत्त्वसुबोधिनी

ॐ काम्यास्तु यथाकामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् ॐ ॥ ब्रह्मज्ञानसाधनेति काम्योपासनस्यावश्यकत्वनिरासे ब्रह्मज्ञानसाधनोपायस्यैवावश्यकत्वं सिध्यतीति भावः । यदि मोक्षोपयोगिफलसाधनत्वेन नरसिंहाद्युपासनं कार्यं तर्हि तेनैव न्यायेन काम्योपासममपि कार्यमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्रपूर्वपक्षोत्थानादनन्तरसंगतिरिति भावः । अन्यथा वैयर्थ्यादिति । काम्योपासनस्यानावश्यकत्वे काम्यविद्यावैयर्थ्यं स्यादित्यर्थः । कामसाधनगुणा इति । अनेन कामस्य साध्याः काम्याः । संबन्धश्च साध्यसाधनभाव इत्युक्तं भवति । यथाकाममित्यर्थः । स्वकामानुसारेणेति ॥ समुच्चीयेरन्नवा इत्यस्यार्थ उपसंहर्तव्या नवेति विकल्प एवेति । विकल्पमेव व्यनक्ति विकल्पश्चेति । तादृशानां गुणानां च समाहारं प्रकल्पयेत् । अकामत्वान्मुमुक्षूणां नवा तेषामुपासनमिति स्मृत्यनुसारादिति भावः ।

इति । हेत्वभावेऽपि नरसिंहाद्युपासनस्य फलान्तरार्थं क्रियमाणत्वेन व्यभिचार इत्यत प्रबलेति । दुरितादिप्रतिबन्धकलक्षणप्रबलहेतोरभावादित्यर्थः । अनेन पूर्वस्य करणोक्तस्य दुरितनिबन्धकलक्षणस्य हेतोरभावादिति हेतुवाक्यं प्रकारान्तरेण व्याख ननु अर्थादिः ज्ञानहेतुत्वस्यैव काम्योपासने प्रबलहेतुत्वात् कथं प्रबलहेत्वभाव इत्यत नहीति । स्मृतौ यस्य तस्येति यत्तच्छब्दयोः संबन्ध इति प्रतीतिं वारयितुं यथावद यस्य यस्येत्यादिना । अमुमुक्षुरिति । नवा तेषामुपासनमित्युक्तवाक्यानुरोधेन रित्यध्याहारः ॥ ४० ॥

## वाक्यार्थविवरणम्

कामेत्यादि ॥ काम्यपरः कामशब्दः काम्यत इति व्युत्पत्त्या । एवं च का वस्वादि तत्प्राप्तिसाधनभूतो यः श्रीकरादिभगवद्रूपनिष्ठो गुणः शङ्खप्रसूनाख्यनि कत्ववसुतर्पकत्वादिरूपस्तद्विषयं तदुपसंहारपूर्वकमुपासनं ध्यानं कर्तव्यमेव । "अ चन्द्रावपि चक्रशङ्खौ शङ्खप्रसूनाख्यनिधी दधानः । चिन्त्यः कराभ्यां वसु तर्प स्वाङ्कस्थलक्ष्मीगरुडांससंस्थः ॥" इति विष्णूदिते तन्त्रसारे तथा विहितत्वादित तद्विद्येति ॥ कामसाधनभगवद्रूपगुणविषयोपासनस्य कर्तव्यत्वप्रतिपादकविद्येत्य वैकल्पिकम् ॥ अनावश्यकमित्यर्थः । ॥ द्विविधोपासनेति ॥ बिम्बोपासनमावश तदितरोपासनं वैकल्पिकमिति द्विविधसाधनमित्यर्थः ॥ फलत्वात् ॥ मोक्षोपयो दिफलत्वात् । कथं तदुपासनफलस्यार्थादेर्मोक्षोपयोगित्वमित्यत आह । ॥ अर्थादि ॥ तेन अर्थादिना ॥ ज्ञानसिद्धेरिति ॥ यथोक्तम् ॥ मानुषोऽर्थोऽपि विद्यायाः सुनियोजितः । तुष्टोऽर्थे न गुरुर्यस्मात् कैवल्यं दातुमप्यलं" इति । तथा मोक्षो ज्ञानोपयोग्यर्थफलकत्वेन मोक्षोपयोगिफलकत्वमस्तीति भावः ॥ प्रथमपाद इ एतदध्यायस्य प्रथमपादे वैराग्यपाद इत्यर्थः ॥ कामाख्येति ॥ ईश्वरप्र फलविषयककामाख्येत्यर्थः । तेन अर्थेन । भवति ज्ञानमिति शेषः ॥

## वाक्यार्थमञ्जरी

(वाक्यार्थमञ्जरी)

ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ काम्याः धनादिसाधने शगुणास्तु यथाकामं वित्तादीच्छानुसारेण समुच्चीयेरन्नुपसंहार्याः मुमुक्षुभिर्न वा कुत पूर्वहेत्वभावात् मोक्षेच्छातः पूर्वविद्यमानो यो हेतुः वित्तादिकामाख्यः तेषां तदभावादित्यर्थः ननु कामाख्यहेत्वभावेऽपि नृसिंहाद्युपासनस्य फलान्तरार्थं क्रियमाणत्वेन व्यभिचार इत्यत आह ॥ प्रबलेति ॥ दुरितादिप्रतिबन्धकविलक्षणप्रबलहेत्वभावादित्यर्थः ॥ नन्वर्थदिर्ज्ञान-हेतुत्वस्यैव काम्योपासने प्रबलहेतुत्वात्कथं प्रबलहेत्वभाव इत्यत आह ॥ न हीति ॥ तथ चान्वयव्यतिरेकव्यभिचारान्न तस्य ज्ञानहेतुत्वमिति भावः । स्मृतौ यस्य यस्य तस्य तस्येति यत्तच्छब्दसंबन्धप्रतीतिं निवारयन् तां यथावद्व्याचष्टे ॥ यस्य यस्येत्यादिना ॥ मुमुक्षूणां न वेत्युत्तरवाक्यानुरोधेनामुमुक्षुभिरित्यध्याहारः ॥ ४० ॥

## ४१. अङ्गाधिकरणम्

**॥ ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ ६३ ॥**

**अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वं 'चक्षोः सूर्यो अजायते' (ऋ. सं. १०-९०-१३) त्यादि तथा भावना कर्तव्या ॥ ६३ ॥**

## तत्त्वप्रदीपिका

अङ्गदेवतानामुभयविधमुपासनं, परिवारत्वेनाङ्गस्थत्वेन चेति । तत्र प्रथमं तावदुत्तरोत्तरं सन्निकर्षाधिक्येनेति न्याय्यं दर्शितं च गुरुभिरेवान्यत्र । अङ्गस्थत्वेनोपासने कुत्र कस्य भावनेत्या-कांक्षायामाह– अङ्गेषु यथाऽऽश्रयभावः । यस्य यस्य यथा यथा परमेश्वराङ्गाश्रयत्वमुच्यते ''चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायते''त्यादि तस्य तस्य देवस्य तथा तथा भावना कर्तव्या ॥

## तत्त्वप्रकाशिका

अत्र भगवत्साक्षात्कारसाधनाङ्गदेवतोपासनस्य कर्तव्यतासमर्थनादस्ति शास्त्रादिसंगतिः । अन्यथा तद्विद्यावैयर्थ्यात्तत्समर्थनीयम् । प्रकृतं ब्रह्मादिदेवतोपासनं विषयः । भगवदङ्गाश्रितत्वेन मुमुक्षुणा कर्तव्यं न वेति सन्देहः । आश्रितत्वेन श्रुत्युक्तेरुभयथा संभवः सन्देहबीजम् । न

(तत्त्वप्रकाशिका)

**चोदनाद्यविशेषादित्युक्तव्याघातात् । अतो निरधिकारित्वादङ्गाश्रितत्वेन देवतोपासनं न कार्यमिति तद्विद्यावैयर्थ्यमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ अङ्गेष्विति ॥ सूर्यादिदेवानां 'चक्षोः सूर्यो अजायत' इत्यादिना यथा भगवदङ्गाश्रयत्वमुक्तं तथोपासनं कार्यमेव । अन्यथा तदुक्तिवैयर्थ्यप्रसङ्गादिति भावः । यत्र जन्म तत्रैव स्थितिरित्यदोषः । 'तदाश्रिताश्च ते सर्वे' । इति वचनात् ॥ ६३ ॥**

## गुर्वर्थदीपिका

अङ्गदेवतोपासनस्येत्यत्र चक्षुरादिभगवदङ्गस्थितदेवतोपासनस्येत्यर्थः । ''समाहारा'' दिति सूत्रे सूर्याश्रयचक्षुष्ट्वादीनां समाहारस्यैव कर्तव्यत्वमुक्तम् । श्रुतौ च ''तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेते''ति सामान्यत एव फलमुक्तम् । अतः सर्वैरपि कर्तव्यत्वशङ्का । तत्परिहारायोत्तराधिकरणम् । श्रुत्यनुसारी सूत्रकारोऽपि नाश्रुतमसूत्रयत् । एवं च पूर्वाधिकरणोक्तसूर्यादिदेवाश्रयचक्षुष्ट्वादिभगवद्गुणोपसंहरणं ''परमं स्थानं व्रजेते'' त्युक्ते ब्रह्मण एव । सूर्यादीनां तु सूर्याश्रयचक्षुष्मान् दिग्देवताश्रयश्रोत्रवानित्येवोपासनम् । अन्यथा मोक्षे फलसाङ्कर्यप्रसङ्गात् । ब्रह्मणस्तु तत्तदङ्गाश्रितदेवान्तस्थत्वेन तत्र स्थानप्राप्तिरप्यस्तीति सूचनाय परमं स्थानमिति सामान्येनोक्तम् । कासुचिद्भाष्यसम्पुटिकासु समाहारादित्येव पाठोऽस्ति । अतः सूत्रभाष्ययोः समाहारपदं श्रुतिसूचकमित्युक्तम् ।

## भावबोधः

ओं अङ्गेषु यथाऽऽश्रयभावः ओं ॥ ६३ ॥ अङ्गदेवतोपासनस्येति । यद्यपीदं ''अङ्गावबद्धा'' इत्यनन्तरमेव कर्तव्यं तथापि तत्र सर्वाधिकारिसाधारणस्य भगवदुपसर्जनतयान्यदेवतोपासनसहितस्य भगवदुपासनस्य कर्तव्यत्वसमर्थनम् । अत्र पुनर्ब्रह्माद्यङ्गदेवतानां तत्तदुत्पादकभगवदङ्गाश्रितत्वेन प्रकारेणोपासनस्य देवैरेव कर्तव्यत्वसमर्थनमिति वैलक्षण्यज्ञापनार्थं भूमाद्यधिकरणचतुष्टयस्योक्तरीत्या पूर्वपूर्वसङ्गतत्वप्राप्तेस्तदधिकरणचतुष्टयेन व्यवधानं कृतमिति ज्ञेयम् । भगवदङ्गाश्रितत्वेनेति । अत्र ब्रह्माद्यङ्गदेवतोपासनं भगवदङ्गाश्रितत्वेन न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं तदुपासनस्य कर्तव्यत्वावेदकं विध्यादिप्रमाणं व्यर्थमुत सार्थकमिति । तदर्थं तदुपासनं निरधिकारिकमुत साधिकारिकमिति । तदर्थमधिकारिविशेषकल्पकं नास्त्युत अस्तीति । देवानामिति । तत्रैव विशेषवचनाभावात् । 'ब्रह्मा शिरसि

पूर्वपक्षमुपपादयति– तथा हीति । उक्तव्याघातादिति । ''आनन्दादयः प्रधा
इत्युक्तव्याघातादित्यर्थः । इदं च देवादीनामेवेत्यनेन सूचितमिति ज्ञातव्यम् । ''समाहा
इति सूत्रविवर्तनीयमाह– न चानुक्तावपीति ॥

ननु ''चक्षोः सूर्योऽजायत'' इत्यादिश्रुतौ सूर्यादीनां भगवच्चक्षुरादिजन्यत्वमेवोच्य
तु चक्षुराद्याश्रयत्वम् । तत्कथं ''चक्षोः सूर्योऽजायत'' इत्यादिपरमेश्वराङ्गाश्रयत्वमुक्त
आह– यत्रेति ।

## भावदीपः

॥ ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ ६३ ॥ कर्तव्यत्वेति ॥ निरधिकारिकत्वनि
कर्तव्यत्वशङ्कानिरासेनेति भावः । द्विविधं ह्यङ्गदेवतोपासनम् । विष्णोः परिवा
नाङ्गाश्रितत्वेन चेति । तत्राद्यं सर्वाधिकारिकमङ्गावबद्धा इत्यत्रोक्तम् । द्वितीयं तु
काम्योपासनं मुमुक्षुणा न कार्यमित्युक्तौ तर्हि तत्प्रसङ्गादङ्गाश्रितत्वेनाङ्गदेवतोपासन
मुमुक्षुणा न कार्यमिति शङ्कनाद्वा यथाकामं समुच्चीयेरन्नित्युक्तन्यायेन प्राप्यफलानुरोधेना
कारिकल्पनोपपत्त्योपासनकर्तव्यत्वसम्भवाद्वाऽत्र समर्थ्यत इति भावः ॥ अन्यथेति
अङ्गाश्रितत्वेनाङ्गदेवानामुपासनाऽसमर्थने चक्षोः सूर्यो अजायतेत्यादिविद्यावैयर्थ्यादित्यर्थः
आध्यानायेति न्यायादिति भावः ॥ प्रकृतमिति ॥ अङ्गावबद्धा इत्यत्र प्रकृतमित्यर्थः
श्रुत्युक्तेरिति ॥ चक्षोः सूर्यो अजायतेत्याद्युक्तेरित्यर्थः । यतो जन्म तत्रैव स्थिति
जन्मश्रुतेरेवाश्रितत्वश्रुतित्वात् । यद्वा ब्रह्मा शिरसि, ललाटे रुद्र, इत्यादि श्रुत्युक्तेत्यर्थः
काम्याकाम्यगुणोक्तेरिति भावः । ''ब्रह्मा शिरसि ललाटे रुद्र'' इत्याद
नावश्योपास्यता । देवादीनामेवेत्यन्यत्रोक्तप्रतिज्ञार्थमाह ॥ न तथेति ॥ देवादीनामेवे
तत्सर्वेषां वा देवानामेव वेत्यर्थकमुपेत्य विकल्पयति ॥ किमिति ॥ स्वयं हेतुमाह ॥ उक्त
॥ आनन्दादयः प्रधानस्येत्युक्तव्याघातादित्यर्थः ॥ देवानामिति ॥ तत्रैव विशेषाभावा
त्यन्यत्रोक्तमेव हेतुं तत्रैवेत्यस्यार्थं वदन्नेवाह ॥ ब्रह्मेति ॥ हेतोरप्रयोजकत्वं निराह ॥
चेति ॥ समाहारसूत्रव्यावर्त्यहेतुमाह । कल्पकेति ॥ अस्याप्यप्रयोजकत्वं निराह ॥ अन्यथे
॥ सर्ववेदान्तनये उपासनाविधिसमीपे काण्वाद्यधिकारिविशेषाश्रवणेन विशेषाधिकारि
त्वनिराकरणं यत्कृतं तद्व्याहन्येतेत्यर्थः ॥ अत इति ॥ सर्वाधिकारिक
प्रागुक्तव्याघाताद्देवाधिकारिकत्वे कल्पकाभावादित्यर्थः ॥ छ ॥ अङ्गेत्यादिभाष्यं व्याचष्टे
सूर्येति ॥ अङ्गावबद्धा इत्यतोऽगानामिति मण्डूकप्लुत्त्याऽनुवर्तत इति भावः । भा

(भावदीपः)

इत्यादीत्यविभक्तिकमित्युपेत्योक्तम् । इत्यादिनेति ।। काम्यपदेन प्रकृतो भगव
सूत्रेऽङ्गेष्वित्यत्रान्वेतीति भावेनोक्तम् । भगवदङ्गेति । ननु चक्षोः सूर्य इति
देवानामङ्गाज्जन्मैवोच्यते न तु तदाश्रितत्वमित्यतोऽर्थात्तत्प्राप्तमित्याह ।। यत्र जन्मेति ।।
जन्म तत्रैव स्थितिरित्युक्तार्थे आदित्यादिमतय इत्यत्र चतुर्थाद्यपादे भाष्योक्तस्मृतिमाह
तदाश्रिताश्चेति ।। ''स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिंत्यं सदैव तु । तेषां तत्र प्रवेशो
मुक्तिरित्युच्यते बुधैरिति'' पूर्वशेषः ।। ६३ ।।

## वाक्यार्थमुक्तावली

ॐ अङ्गेषु यथाऽऽश्रयभावःॐ ३-३-६३ ।। प्रकृतमिति । ब्रह्मादिदेवानामङ्गाव
इत्यत्र परिवारत्वेनोपासनस्येष्टत्वाद्ब्रह्माद्युपासनं प्रकृतमिति भावः। यद्यपीदमङ्गाव
इत्यनन्तरमेव कर्तव्यं तथापि विकल्पो विशिष्टफलत्वादित्यत्र फलापेक्षायाः सत्वान्नृसिं
द्युपासनं मुमुक्षुभिः कार्यम् । काम्यास्त्वित्यत्र तु तदाभावात् काम्योपासनं न कार्यमित्
तन्न्यायेनात्रापि । समाहारसूत्रे स्थानं ''मुमुक्षुः परमं व्रजेत,'' ''ध्यायेदङ्गेष्वङ्गदेवता
''परस्य विशिष्टा हि गुणा मुक्तौ देवानां भवन्तीति फलविशेषेणैव मुमुक्षु
देवानामधिकारः । न वेति सूत्रे तदभावान्न वान्येषामिति व्यवस्थितविकल्पा
धानदनन्तरसङ्गतिः । भगवदङ्गेति । अत्र देवादीनां भगवदङ्गाश्रितत्वेनोपासनं मुमुक्षुण
कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थमुपासकानां मुमुक्षूणां देवतदन्यतरत्वात् तयोरन्य
स्याधिकारकल्पकं नास्त्युतास्तीति । उक्तव्याघातादिति । आनन्दादयः प्रधानस्येत्यु
चतुर्गुणनियतिव्याघातादित्यर्थः । यद्वा अङ्गावबद्धाधिकरणे पुरुषाणां विशेषाद्वेत्यनेनो
स्योत्तमाधिकारिभिरेव विशेषोपसंहारः कार्य इत्यस्य व्याघातादित्यर्थः । समाहारस
निरस्यमविशेषदृष्टिरित्युक्तन्यायं दर्शयन् द्वितीयं प्रतिक्षिपति । न द्वितीय इत्यादिन
अन्यथेति । कल्पकाभावेऽप्यधिकारिविशेष कल्पनेऽध्ययनविध्यादावप्यधिकारिविशेषक
नसम्भवाच्चोदनाद्यविशेषादित्युक्तव्याघातादित्यर्थः ।

सूत्रेऽङ्गेष्वित्यावर्तते । आद्यं षष्ठ्यन्तं विपरिणम्यते । यथेति वीप्सायां द्विरावर्तनीयम
अनतिक्रमे च यथाशब्द उक्त इति शेषः। आश्रयस्य भावः आश्रयभावः । आश्रितत्वमि
यावत् । आश्रियन्त इत्याश्रिताः । तथा चाश्रितत्वेन भावना चाश्रयभावः । तथा
सूर्याद्यङ्गदेवानामङ्गेषु भगवदङ्गेषु यथा यथाश्रयभाव आश्रितत्वमुक्तं तथा ते

तथोपासनं कार्यमिति सूत्रार्थं मनसि निधाय व्याचष्टे । सूर्यादीति । ननु चक्षुराद्यङ्गाश्रित कथं जन्माभिधायकश्रुतिः प्रमाणमित्यत आह । यत्र जन्मेति ।

## तत्त्वसुबोधिनी

ॐ अङ्गेषु यथाश्रयभावः ॐ ॥ अङ्गदेवतोपासनस्येति । यद्यपि इदं अङ्गावब इत्यनंतरमेव कर्तव्यं तथापि तत्र सर्वाधिकारिसाधारणस्य भगवदुपसर्जनतयाऽन्यदेव तोपासनासहितस्य भगवदुपासनस्य कर्तव्यतासमर्थनम् । इहतु ब्रह्माद्यंगदेवतानां तत्तदुपपाद कभगवदंगाश्रितत्वेन प्रकारान्तरेणोपासनस्य देवैः कर्तव्यत्वसमर्थनमिति वैलक्षण्यज्ञाप नार्थम् । भूमाद्यधिकरणचतुष्टयस्योक्तरीत्या पूर्वपूर्वसंमतत्वेन प्राप्तेः तद्विचार्य अवसरप्राप्त मिदानीं विचार्यत इति अनन्तरसंगतिरिति भावः । उक्तव्याघातादिति ॥ आनन्दाद प्रधानस्येत्युक्तव्याघातादित्यर्थः । अन्यथेति । कल्पकाभावेपि कल्पन इत्यर्थः चोदनादिति । तत्र चोदनारूपकल्पकविशेषाभावे कल्पना कर्तव्येत्युक्तत्वेन व्याघात स्यादित्यर्थः । ननु चक्षोः सूर्यो अजायतेत्यादिश्रुतौ सूर्यादीनां भगवच्चक्षुरादिजन्य त्वमेवोच्यते । नतु तदाश्रितत्वम् । तत्कथं चक्षोः सूर्योऽजायत इत्यादिपरमेश्वरांगा श्रयत्वमुक्तमित्युच्यत इत्यत आह । यत्रेति । ननु नियमग्राहकप्रमाणाभावान्न नियमसिद्धि रित्यत आह । तदाश्रिताश्चेति ।

## वाक्यार्थविवरणम्

उभयथेति ॥ तथोपासनाकर्तव्यत्वाभिप्रायकत्वेन तदभावाभिप्रायकत्वेन चेत्यर्थः उक्तव्याघातादिति ॥ ''आनन्दादयः प्रधानस्य'' इत्यनेनानन्दादीनामेवोपास्यत्वोवि व्याघातादित्यर्थः ॥ तत्प्रकरणेषु ॥ अङ्गदेवतोपासनाप्रतिपादकप्रकरणेष्वित्यर्थः । ननु यथ विश्वजिता यजेतेत्यत्राप्यनुक्तोऽप्याधिकारी स्वर्गकामः कल्प्यते तद्वदत्रापि किं स्यादित्याशङ्क्य तत्र विश्वजिद्यागस्य ज्योतिष्टोमाङ्गत्वावगमात् प्रधानफलफलकत्व प्रधानाधिकार्यधिकारिमत्त्वादेरेव तदङ्गशब्दार्तत्वात् श्रुताङ्गाङ्गिभावान्यथानुपपत्त्यैव विश्वजि अश्रुतोऽपि प्रधानाधिकार्येव अधिकारितया कल्प्यते । एवं च तत्राङ्गत्वादिरूपकल्पकवद तदभावान्नाधिकारिविशेषः कल्पयितुं शक्यत इत्यत आह ॥ न चानुक्तावपीति ॥ अन्यथ

(वाक्यार्थविवरणम्)

॥ कल्पकाभावेऽपि अधिकारिविशेषकल्पने । ॥ चोदनादीति ॥ सर्वशास्त्रोक्तं सर्वैज्ञ व्यमित्यत्र हेतुतया चोदनाद्यविशेष उक्तः । आत्मेत्येवेति उपासीतेति विधीनां 'अत्र ह इत्यादितदुक्तयुक्तीनां च सर्वाधिकारिसाधारणान्विनाधिकारिविशेषकल्पनायोगादित्युक्तम तदेवं सति व्याहन्येत । अश्रुतस्याधिकारिविशेषस्य तत्रापि कल्पयितुं शक्यत्वेन स सर्वशाखापरिज्ञानं न स्यादित्यर्थः । ॥ अङ्गाश्रितत्वमुक्तमिति ॥ तथा चाङ्गेषु भगवद देवानां यथा आश्रयभावः आश्रयत्वं परमेश्वराङ्गं आश्रयो येषां ते तथा । भावस्तत्त्वम् । अङ्गाश्रितत्वमिति यावत् । यथा चक्षुरादिभगवदङ्गाश्रितत्वमस्ति तथा भ उपासना कर्तव्येति शेष इति सूत्रार्थः । ननु 'चक्षोः सूर्योऽजायत' इति श्रुतौ सूर्या चक्षुरादिजन्यत्वमेवोच्यते । न तु तेषां तदाश्रितत्वमित्यत आह ॥ यत्रेति यस्मादङ्गादित्यर्थः ॥ तदाश्रिताश्चेति ॥ ''स्वोत्पत्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव इति पूर्ववाक्यमप्यत्र ग्राह्यम् ॥

## वाक्यार्थमञ्जरी

तद्विद्या चक्षोः सूर्योऽजायतेत्यादिका ॥ उक्तव्याघातादिति ॥ आनन्दादयः प्रधान सर्वैश्चतुर्गुणमात्रस्योपास्यत्वोक्त्या तद्विरोधादित्यर्थः ॥ चोदनाद्यविशेषादिति ॥ स्वाध्यायोऽध्येतव्य इत्यत्राधिकारिविशेषकल्पकाभावेनैव विशेषाधिकारिकत्वाभावस्योक्त दिति भावः ॥

ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ अङ्गेषु भगवदवयवेषु सूर्यादीनामाश्रय आश्रयत्वं यथोक्तं तथोपासनं कार्यमित्यर्थः । ननु चक्षोःसूर्यो अजायतेति श्रुतौ सूय भगवच्चक्षुरादिजन्यत्वमेवोच्यते न तु चक्षुराद्याश्रयत्वं, अतः कथं चक्षो अजायतेत्यादिना परमेश्वरांगाश्रयत्वमुक्तमित्यत आह ॥ यत्रेति ॥

## सूत्रभाष्यम्

**॥ ॐ शिष्टेश्च ॐ ॥ ६४ ॥**

**'यस्मिन्यस्मिन्यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैवे'ति पौ**

**[illegible] ॥ ६४ ॥**

यथा ज्ञानानन्दादीनां गुणानां सर्वेषामुपसंहारोऽनुशिष्टः, नात्र तथाऽङ्गदेवानामित्यत
शिष्टेश्च ॥

## तत्त्वप्रकाशिका

न केवलमङ्गाश्रितत्वेनोक्त्यन्यथानुपपत्त्या तथोपासनस्य कर्तव्यता किं तु श्रुतौ
विधानाच्चेत्यर्थप्रतिपादकं सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ शिष्टेश्चेति ॥ शिष्टिः शिक्षावि
यावत् ॥ ६४ ॥

## भावदीपः

॥ ॐ शिष्टेश्च ॐ ॥ ६४ ॥ सौत्रचशब्दार्थं वदन्नेवावतारयति ॥ न केवलमि
भाष्ये श्रुतेरिति पञ्चम्याः तथा भावना कर्तव्येत्यन्वयमुपेत्योक्तम् । तथोपासनस्य कर्त
किन्तु श्रुतौ तथा विधानाच्चेति । श्रुतेश्चेति चशब्दाध्याहार इति भावः ॥ ६४ ॥

## वाक्यार्थमुक्तावली

ॐ शिष्टेश्च ॐ ३-३-६४ ॥ अङ्गदेवानामङ्गेष्वाश्रितत्वेन भावः कर्तव्य इत्यनुव

## वाक्यार्थविवरणम्

तथेति ॥ अङ्गाश्रितत्वेनोपासनेत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ शिष्टेश्च ॐ ॥ यस्मिन्निति श्रुतावंगदेवतोपासनाकर्तव्यस्य शिष्टेः वि
तत्कार्यमित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ समाहारात् ॐ ॥ ६५ ॥**

**'अङ्गैः पराद्ये हि देवा विसृष्टास्तत्तद्गुणान्परमे संहरेत ।**
**तांश्चापि तत्रैव विचिन्त्य देवान्स्थानं मुमुक्षुः परमं व्रजेत'**

**इति काषायणश्रुतौ समाहारवचनाच्च ॥ ६५ ॥**

## तत्त्वप्रदीपिका

समाहारात् ॥ न केवलमङ्गेषु तत्तद्देवताभावनया पूर्यते । तत्तदङ्गदेवगुणसमाहारश्च तत्तव
कर्तव्यः । यथा चक्षुर्मनआदिषु सूर्यसोमादिगुणमहाप्रकाशाह्लादकरत्वादय इति ॥

## तत्त्वप्रकाशिका

नाङ्गाश्रितत्वेन देवतोपासनं युक्तं निरधिकारित्वात् । तद्विधानादेर्वैयर्थ्यस्यैवौचित्यादि
शङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ समाहारादिति ॥ युक्तमेवाङ्गाश्रितत्वेन देवतोपासनं
देवानामधिकारित्वात् । न च तदनुक्तिदोषः । तथोपासनस्य हि परमस्थानप्राप्तिः फलं श्रूयते ।
देवतानामेव योग्यमिति फलपर्यालोचनया मधुविद्यायामिव देवानामधिकारित्वकल्पनोपपत्ते
भावः । तथा च श्रुतिः । 'ध्यायेदङ्गेष्वङ्गदेवताः परस्य विशिष्टा हि गुणा मुक्तौ देवानां भव
इति । अत्र सूत्रभाष्ययोः समाहारपदं श्रुतिसूचकमूष्मेतिवत् ॥ ६५ ॥

## गुर्वर्थदीपिका

ऊष्मेतिवदित्यस्य यथोष्मेति पदग्रहणम् । ऊष्मेतिपदोपेतस्योपलक्षकं तद्वदित्यर्थ
एतच्चतुर्थाध्याये वक्ष्यते ।

## भावबोधः

मधुविद्यायामिवेति । ''असौ वा आदित्यो'' इत्यादिमधुविद्यायां ''वसूनामे
भूत्वा'' ''रुद्राणामेको भूत्वा'' इत्याद्युक्तफलपर्यालोचनया वस्वादिपदयोग्यानां तदर्थि
वाधिकारकल्पनादित्यर्थः । अत्र न्यायविवरणोदाहृतां श्रुतिमाह– तथा चेति ॥

नन्वत्र फलविशेषस्यैवाधिकारिविशेषकल्पकत्वेन विवक्षितत्वात् फलश्रुति
सूत्रभाष्ययोर्वक्तव्यं, तत्कथं ''समाहारात्'' समाहारवचनाच्चेत्युक्तमित्यत आह– अत्रे
अस्यैव च ''उपपत्तेरुष्मा'' इति सूत्रे यथोष्मेत्यस्या ''उष्मावच्चानुष्मावच्च''
श्रुतिसूचकत्वं तथेत्यर्थः ।

## भावदीपः

॥ ॐ समाहारात् ॐ ॥ ६५ ॥ शङ्कते ॥ नाङ्गेति ॥ विध्यादिबलादेवाधिका

देवतानामेव योग्यमिति । तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यत इति स्मृतेरिति भ
मध्वित्यादिच्छान्दोग्ये तृतीये असौ वा आदित्यो देवमध्वित्युक्तमधुविद्यायां प्रथमा
पासनस्य वस्वादिपदप्राप्तिफलकत्वोक्त्या वस्वादय एवाधिकारिणः कल्प्यंते तथेत्
फलविशेषेण देवरूपाधिकारिविशेषकल्पनमित्यत्र स्पष्टां न्यायविवरणस्थां श्रुतिमाह ।
चेति ॥ भाष्येऽगैरित्यादिपूर्वार्धार्थस्तु न केवलमङ्गेषु तत्तद्देवताभावनया
तत्तदङ्गदेवगुणसमाहारश्च तत्तदङ्गेषु कार्यः । यथा चक्षुर्मनआदिषु सूर्यसोमा
महाप्रकाशत्वाह्लादकत्वादय इति तत्वप्रदीपे व्यक्त इति नोक्तः । नन्वत्र
समाहारादित्युक्त्याङ्गदेवतागुणोपसंहारतात्पर्यमेवावगम्यते । न तूक्तरूपं तात्पर्यम् । त
सूत्रं तथैवावतार्य व्याख्येयं न तु निरधिकारिकत्वशङ्काव्यावर्तकतयेत्यतः सूत्रादौ समा
गुणोपसंहारमात्रपरं न भवति । तथात्वे उत्तरार्धवैयर्थ्यात् किन्तु समाहारार्थकश्रुतिपरम्
च तत्रोक्तगुणोपसंहारे पूर्वोक्तरीत्या अधिकारिविशेषे चोभयत्र सूत्रकारादेः तात्प
भावेनाह ॥ अत्र सूत्रभाष्ययोरिति ॥ यथा चतुर्थस्य द्वितीयपादेऽस्यैव चोपपत्तेरूष्मे
ऊष्मेतिशब्द ऊष्मावच्चानूष्मावच्चेति श्रुतिसूचकस्तथेत्यर्थः ॥ ६५ ॥

## वाक्यार्थमुक्तावली

ॐ समाहारात् ॐ ३-३-६५ ॥ इत्याशङ्कां परिहरदिति । वैशेष्यमि
न्यायप्रदर्शनेनेति पूरणीम् । परमस्थानप्राप्तिरिति । स्वोत्पत्त्यङ्गसायुज्यप्राप्तिरित्य
मधुविद्यादाविवेति । तत्र वसूनामेवैको भूत्वा रुद्राणामेवैको भूत्वा इत्याद्युक्तव
फलप्राप्तिपर्यालोचनया वस्वादिपदयोग्यानामेवाधिकारित्वकल्पनादित्यर्थः । ननु सूत्रे
च परमस्थानप्राप्तिफलश्रुतेरिति वक्तव्यं तत्कथं समाहारवचनाच्चेत्युक्तमित्यत अ
अत्रेति। अस्यैव चोपपत्तेरुष्मेति सूत्रे यथोष्मेत्यस्योष्मावच्चानूष्मावच्चेति श्रुतिस
तथेत्यर्थः । तथा च समाहारादित्यस्याङ्गदेवतागुणवत्वेन भगवदङ्गानां तदाश्रि
देवानामुपासकस्य परमस्थानप्राप्तिलक्षणफलप्रतिपादकसंहरेतेति समाहारशब्दघटितश्रु
मानत्वेनाङ्गदेवैरङ्गाश्रितत्वेन भावना कर्तव्येति सूत्रार्थः ।

## तत्त्वसुबोधिनी

मधुविद्यायामिवेति असौ वा आदित्यो देवमधु इत्यादिमधुविद्यायां वसूनामेवैको
इत्याद्युक्तपर्यालोचनया वस्वादिपदयोग्यानां तदर्थिनामेवाधिकारकल्पनादित्यर्थः ।

(तत्त्वसुबोधिनी)

फलविशेषस्यैवाधिकारिविशेषकल्पकत्वेन विवक्षितत्वम् । फलश्रुतेरित्येव सूत्रता वक्तव्यम्। तत्कथं समाहारात् समाहारवचनाच्चेत्युक्तमित्यत आह । अत्रेति । अस चोपपत्तेरुष्मेति सूत्रे यथा ऊष्मत्वस्योष्मावच्चेति श्रुतिसूचकत्वं तथेत्यर्थः ।

## वाक्यार्थविवरणम्

ननु यस्मिन् यस्मिन्निति विधानान्यथानुपपत्त्यैवाधिकारी कल्प्यतामित्यत आह तद्विधानेति ।। वैय्यर्थ्यस्यैवेति ।। निरधिकारित्वमेवाङ्गीकृत्येति शेषः । परमस्थानप्राप्ति भगवत्सायुज्यमित्यर्थः । भाष्ये ।। परात् ।। भगवतः सकाशात् । तदीयचक्षुराद्यङ्गैः ये देवाः सूर्याद्याः विसृष्टाः । ''तत्तद्गुणान्'' सूर्यादिजनकचक्षुष्त्वादिरूपान् गुणान् । पर ''संहरेत'' उपसंहारं कुर्यात् । तांश्चापि ।। देवान् सूर्यादीन् ।। तत्र ।। त ''विचिन्त्य'' चक्षुराद्यङ्गाश्रितत्वेन विचिन्त्य । मुमुक्षुः परमं स्थानं व्रजेतेति श्रुत्यर्थ नन्वत्र परमस्थानरूपफलान्यथानुपपत्त्या देवानामधिकारित्वेन कल्पने श्रुतौ मुमुक्षुरि युक्तम्। तेषामेकान्तभक्तत्वेन तेषां च 'सर्वमन्यत्तदर्थकम्' इत्युक्तत्वेन मोक्षेच्छुत्वाभाव अतो देवेतर एवाधिकारित्वेन कल्पनीया इति चेन्न । मुमुक्षरित्यस्य भगवत्प्रा तिरिक्तकामनाशून्य इत्येवार्थं कल्पयित्वा देवा एवाधिकारितया कल्पनीया नान्ये । एव टीकाकारैस्तथा च श्रुतिरिति देवानामेवात्र अधिकारप्रतिपादिका स्पष्टा श्रुतिरुदा ज्ञेयम् ।। समाहारपदं श्रुतिसूचकमिति ।। तथा च सूत्रे समाहारात् समाहारपदोपेत तत्पूर्वकोपासनप्रतिपादकश्रुतेरित्यर्थः । श्रुतौ समाहाराचेति भाष्ये समाहार श्रुतिसूचकत्वेन काषायणश्रुतिसद्भावादिति यावत् । सूत्रं योजयति ।। भगवद्गुणनामुपा उपास्यत्वविषय इति ।।

## वाक्यार्थमञ्जरी

ॐ समाहाराच्च ॐ ।। अङ्गैःपराद्ये इति श्रुतौ तादृशगुणानां समा उपसंहारफलवचनाद्देवाधिकारिकत्वनिश्चय इत्यर्थः ।। मधुविद्यायामेवेति ।। असौ आदित्यो देवमध्वित्यादिमधुविद्यायां वसूनामेवैकोभूत्वेत्याद्युक्तफलपर्यालोचनया वस्वा योग्यानां तदर्थितामेव अधिकारित्वकल्पनवदित्यर्थः ।। ध्यायेदिति ।। परस्यांगेष्वं

नन्वत्र फलविशेषस्यैवाधिकारिविशेषकल्पकत्वेन विवक्षितत्वात्फलश्रुतेरित्येव सूत्र
र्वक्तव्यम् । तत्कथं समाहारग्रहणमित्यत आह ॥ अत्रेति ॥ अस्यैव चोपपत्तेरूष
यथोष्मेत्यस्योष्मपदोपेतश्रुतिसूचकत्वं तथेत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ ६६ ॥**

**'साधारण्यात्सर्वगुणाः परस्य समाहार्यास्तत्त्वदृशो मुमुक्षोरि'ति माण्ड**
**॥ ६६ ॥ यथाश्रयभावाधिकरणम् (पा. अङ्गाधिकरणम्) ॥ ४१ ॥**

## तत्त्वप्रदीपिका

गुणसाधारण्यश्रुतेश्च ॥ योऽयमधिकारी चतुरादिगुणोपासकः भगवदङ्गेष्वङ्गदेवता
तत्तदङ्गदेवगुणांश्च तत्तदङ्गेषूपसंहरति तस्यैतैर्गुणैरन्येषामपि साधारण्यात्सर्वगुणा उपसंहार्य
॥ इति यथाश्रयभावाधिकरणम् ॥

## तत्त्वप्रकाशिका

हेत्वन्तरेणैतदुपासनस्य कर्तव्यतां प्रतिपादयत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति ॥
कर्तव्यमेवैतदुपासनं सूर्याद्याश्रयचक्षुष्ट्वादीनां भगवद्गुणत्वात् । उपास्यत्वे च भ
साधारण्यस्य सर्वेषामुपास्यत्वस्य श्रुतत्वादिति भावः । अतो देवानामङ्गाश्रि
स्यत्वात्सार्थक्यमेव तद्विद्यानामिति सिद्धम् ॥ ६६ ॥

## गुर्वर्थदीपिका

उपास्यत्वे च भगवद्गुणानामित्यत्रोपास्यत्वेन विहितभगवद्गुणानामित्यर्थः । स
स्येत्यस्यैव विवरणं सर्वेषामुपास्यत्वस्येति । सर्वेषां योग्यानां सर्वेषामित्यर्थः ॥

## भावबोधः

श्रुत्यनुसारेण सूत्रार्थमाह– उपास्यत्वेति । ''साधारण्यस्य'' इति सौ
सर्वेषामुपास्येति व्याख्यातम् ॥

(भावबोधः)

अत्राद्ये सूत्रे– तत्तद्देवतानां तत्तदङ्गाश्रितत्वप्रतिपादकविद्यावैयर्थ्यानुपपत्त्यभिप्रा
तथोपासनस्य कर्तव्यतोक्तिः । द्वितीये– तत्रैव विधिरूपप्रमाणोक्तिः । तृतीये– त
निरधिकारिकत्वशङ्कापरिहारः । चतुर्थे– तदुपासनस्यावश्यकर्तव्यत्वे सूर्यादयो भगव
क्षुराद्याश्रितत्वेनोपास्याः सूर्याद्याश्रयचक्षुरादीनां भगवद्गुणत्वादित्यनुमानरूपप्रमाणोक्ति
सूत्रक्रमः ॥ ४१ ॥

## भावदीपः

॥ ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ ६६ ॥ हेत्वंतरेणेति ॥ ज्ञानानन्दादि
गुणसाधारणत्वहेतुनेत्यर्थः । अत्रापि तथा भावना कर्तव्येत्यनुवृत्तिमुपेत्य भाष्यं व्याचष्टे
कर्तव्यमेवेति ॥ पर्यवसितार्थमाह ॥ सर्वेषामिति ॥ भगवद्गुणानामित्यनुषङ्गः । श्र
समाहार्या इत्यत्र यथोक्तेति पूरणीयम् ॥ अत इति ॥ अङ्गाश्रितत्वेनोक्त
न्यथानुपपत्तिरूपार्थापत्तेः श्रुतौ तथोपासनस्य विधानात्साधिकारिकत्वादुपा
ज्ञानानन्दादिगुणांतरसाधारण्यश्रवणाच्चेत्युक्तहेतुचतुष्टयादित्यर्थः ॥ तद्विद्यानामिति ॥ च
सूर्य इत्यादिविद्यानामित्यर्थः ॥ ६६ ॥ अ० ४१ ॥

## वाक्यार्थमुक्तावली

ॐ गुणसाधारण्यश्रुतेश्च ॐ ३-३-६६ ॥ गुणानां भगवद्गुणानां साधारण्येनैते उपा
एते नोपास्या इति विभागं विहायोपास्यत्वश्रुतेश्च भगवदङ्गाश्रितत्वेन कर्तव्यमेवोपासनं
भावेन सूत्रार्थमाह । कर्तव्यमेवेति । उपास्यत्वेन भगवद्गुणानां साधारण्यस्येत्य
विवरणम्। सर्वेषामुपास्यत्वस्येति । विभागं विहाय सर्वेषां गुणानामुपास्यत्वस्येत्यर्थ
अत्राङ्गाश्रितत्वेन देवतोपासनं तदाश्रयत्वेन तद्गुणबिम्बभूतगुणाश्रयत्वेन च परमात्मोपासन
समनियतमित्युभयोरपि विषयत्वात्समाहारात् गुणसाधारण्यश्रुतेश्च दर्शनाच्चेति कथमु
इति विरोधो न शङ्कनीयः। अत्राद्येऽङ्गाश्रित्वेन देवतोपासनस्य कर्तव्यत्वे आध्यान
त्युक्तन्यायेन चक्षोस्सूर्यो अजायतेत्यादिविद्यास्वङ्गाश्रितत्वोक्त्यन्यथानुपपत्तेः प्रम
त्वोक्तिः। द्वितीये ततोऽपि प्रबलविधिरूपप्रमाणोक्तिः । तृतीये निरधिकारिक

श्रुत्यनुसारेण सूत्रार्थमाह । उपास्यत्वेचेति । साधारण्येति सौत्रपदमनूद्य सर्वेषामु
त्वस्येति व्याख्यातम् । अत्राद्ये सूत्रे देवतोपासनस्य कर्तव्यत्वोक्तिः । अ
यथाश्रयभावः यथाभगवदंगाश्रयत्वं तथोपासना इति सूत्रार्थः । द्वितीये निरधि
त्वपरिहारः । तृतीयेऽनुमानरूपप्रमाणोक्तिः । चतुर्थे श्रुतिरूपप्रमाणोक्तिरिति सूत्रक्रमः

## वाक्यार्थमञ्जरी

ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ भगवद्गुणानां साधारण्यस्योपास्यत्वेन स
सर्वगुणानामुपास्यत्वस्येति यावत् । श्रुतेः साधारण्यादित्यत्र श्रवणादित्यर्थः ॥ ४१

## ४२. नवाधिकरणम्

**॥ ॐ न वाऽतत्सहभावश्रुतेः ॐ ॥ ६७ ॥**

**न वाऽङ्गदेवतोपसंहारः कार्यः । उपसंहारस्य सहाश्रवणात् ॥ ६७ ॥**

## तत्त्वप्रदीपिका

नवाऽतत्सहभावश्रुतेः ॥ नवाऽङ्गदेवतानां तद्गुणानां वाऽङ्गेषूपसंहारः । केषां? अवरे
''चक्षोः सूर्यो अजायते''त्यादावुपसंहार्यत्वस्य सहाश्रवणात् । शिष्टैश्चाङ्गदेवताविषयत्वोपपत्ते
च तावताऽऽदित्यादिमतय इति पुनरुक्तिः स्यात् । तत्रत्वन्याशक्तावप्यवश्यकरणाय तदुक्तेः

## तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनस्याङ्गाश्रितत्वेन देवतोपासनस्य कर्तव्यतासमर्थनादस्ति शास्त्रादिसं
अन्यथोक्तस्यानुपपत्तेस्तत्समर्थनीयम् । प्रकृतं देवानां भगवदङ्गाश्रयत्वेनोपासनं विषयः । क
वेति सन्देहः । उभयविधोपासनप्रतीतिः सन्देहबीजम् । न कर्तव्यमिति पूर्वः पक्षः । तथोप
सर्वशाखास्वनुक्तत्वात् । कर्तव्यत्वे क्रियात्वादग्निष्टोमादिवत्सर्वशाखागतोपासनेन स
प्रसङ्गात् । अतोऽस्योपासनस्याकर्तव्यत्वादुक्तमयुक्तमिति । गूढाभिसंधिना सूत्रमुपन्यस्य व्य
न वेति ॥ भगवदङ्गेष्वङ्गदेवतोपसंहार उपसंहृत्योपासनं न कर्तव्यमिति यदुक्तं तत्सत्
तथोपासनस्य सर्वशाखागतोपासनेन सहाश्रवणादित्यर्थः । अयमभिसंधिः । सर्व

(तत्त्वप्रकाशिका)

**तथोपासनस्याश्रवणादकर्तव्यत्वं भवत्येव । सर्वैः कर्तव्यतानभ्युपगमात् । न च केनाप्यकर्तव्य क्वचिदुक्तत्वात् । अन्यथोक्तिवैयर्थ्यप्रसङ्गात् । अतः क्वचिदुक्तत्वात्सर्वत्रानुक्तत्व कर्तव्यमेतन्नान्यैरिति ॥ ६७ ॥**

## भावबोधः

ओं न वाऽतत्सहभावश्रुतेः ओं ॥ ६७ ॥ प्रकृतमिति । अनेनानन्तरसङ्गतिरप भवति । कर्तव्यमिति । अत्र देवानां भगवदङ्गाश्रयत्वेनोपासनं किं न कर्तव्यमुत कर्तव्य चिन्ता । तदर्थं तदुपासनस्य सर्वशाखास्वनुक्तिः किं सर्वैरकर्तव्यत्वं विनाऽनुपपन्नोत कै कर्तव्यत्वेनैवोपपन्ना । तदर्थं कैश्चिदेव कर्तव्यत्वे प्रमाणं नास्त्युतास्तीति । क्रियात पासनाया उपसंहारस्याग्निष्टोमादिवत् प्रतिशाखं वक्तव्येति न्यायविवरणानुसारेण पूर्वपक्ष पादयति– तथोपासनस्येत्यादिना ॥

ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं न वेत्यकर्तव्यताप्रतिपादकसूत्रेण सि इत्यत उक्तम्– गूढाभिसन्धिनेति । उत्तमाधिकारिव्यतिरिक्तैरिति अधिकारिवि निर्देशाभावादभिसन्धेः गूढत्वमिति ज्ञातव्यम् । सूत्रे "अङ्गेषु यथाश्रयभाव" इत् नुवृत्तिः । "अतत्सहभावश्रुते"रित्यत्र तत्सहभावाश्रुतेरिति नञो व्यत्यासेनान्वय इत्य प्रवृत्तं न वेत्यादिभाष्यं व्याचष्टे । भगवदित्यादिना । उपासनाविशेषाणामधिकारिविशे चागमेनावगमादिति न्यायविवरणानुसारेणाभिसन्धिमुद्घाटयति– अयमभिसन्धिरित्यादि

## भावदीपः

॥ ॐ न वा तत्सहभावश्रुतेः ॐ ॥ ६७ ॥ समर्थनादिति ॥ सर्वशाखास्वनु प्राप्ताकर्तव्यत्वशंकानिरासेनेति भावः । तेन पूर्वेणापौनरुक्त्यम् । पूर्वोक्तप्रमेय नात्पूर्वसंगतिश्चेति ध्येयम् ॥ उभयविधेति ॥ काम्याकाम्योपासनयोरकर्तव्यत्वकर्त दर्शनादिति भावः । न वेत्यादिभाष्योक्तप्रतिज्ञाहेतू एव पूर्वपक्षतयाऽह ॥ न कर्तव्यि छ ॥ हेतोरप्रयोजकत्वनिरासकतया क्रियात्वादुपासनक्रियाया अग्निष्टोमादिवत्प्र वक्तव्यतेत्यन्यत्रोक्तं योजयति ॥ कर्तव्यत्व इति ॥ हेतूच्छित्तिरेव विपक्षे बाधिकेति भ अत इति ॥ सर्वशाखास्वनुक्तत्वादित्यर्थः ॥ छ ॥ पूर्वपक्षस्यैव सिद्धांते अनुवादप्र ॥ गूढाभिसंधिनेति ॥ अधिकार्यनुक्तेर्गूढेत्युक्तम् । श्रुत्यनुरोधेनोपसंहारपदं व्याकुर्व

## वाक्यार्थमुक्तावली

ॐ न वा तत्सहभावश्रुतेः ॐ ३-३-६७ ॥ अत्रानन्तरसङ्गतिः स्फुटा । प्रकृतमि
अत्र देवानां भगवदङ्गाश्रितत्वेनोपासनं कर्तव्यमुत न कर्तव्यमिति चिन्ता । तदर्थं त
सनस्य सर्वशाखास्वनुक्तिः किं सर्वैः कर्तव्यत्वं विनानुपपन्नोत कैश्चित्कर्तव्य
न्यथोपपन्नेति । अतत्सहभावेनेति सूत्रखण्डसूचितं क्रियेत्युक्तन्यायं विशदय
तथोऽपासनस्येति । अग्निष्टोमवदिति । यथाग्निष्टोमं प्रतिशाखोक्तकर्मणा स
तथेत्यर्थः। ननु कैरप्यकर्तव्यत्वे शिष्टेरित्याद्युक्तविधिविरोधः । निरधिकारिक
नवधेयत्वादिति चेन्न । तद्विधानादेर्वैय्यर्थ्यस्यैवोचितत्वादिति पूर्वाधिकरणटीक
वोक्तत्वात्। तत्वप्रदीपे तु शिष्टेश्चेत्युक्तविधेरङ्गदेवताविषयत्वात् तद्गुणानां तदङ्गेषूप
सर्वैः कर्तव्यत्वविषयत्वाभावादित्युक्तम् । ननूपासनं न कर्तव्यमिति पूर्वपक्षिते व
वेत्यकर्तव्यता प्रतिपादकसूत्रेण सिद्धान्त इत्यत आह । उत्तमाधिकारिव्यतिरिक्तै
विशेषनिर्देशाभावादभिसन्धेर्गूढत्वमिति ज्ञेयम् । उत्तमाधिकारिभिरुपसंहारः
एवेत्यवचनेनैवं गूढत्वकरणं परोक्तासहभावस्यान्यथासिद्धिव्युत्पादनायेति बोध्यम् । सू
यथाश्रयभाव इत्यनुवर्तते । अतत्सहभावश्रुतेरित्यत्र तत्सहभावाश्रुतेरिति नञो व्यत्यासे
इत्यभिप्रेत्य प्रवृत्तं न चेत्यादिभाष्यं व्याचष्टे । भगवदित्यादिना । अधिका
व्यवस्थितविकल्पाभिधायकवाशब्दमनुसृत्याभिसन्धिमुद्घाटयति ।

## तत्त्वसुबोधिनी

ॐ नवाऽतत्सहभावश्रुतेः ॐ । प्रकृतमिति । अनेनानन्तरसंगतिरुक्ता भ
अन्यथेति । उक्तस्य समर्थनाभावे उक्तस्यांगाश्रितत्वेन देवतोपासनस्या
स्यादित्यर्थः। ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं नवेत्यकर्तव्यताप्रतिपाद
सिद्धान्त इत्यत उक्तं गूढाभिसंधिरिति । उत्तमाधिकारिव्यतिरिक्तैः इत्यधिका
निर्देशाभावादभिसन्धेः गूढत्वमिति ज्ञातव्यम् । सूत्रे अङ्गेषु यथाश्रयभाव इत्यस्यानु
अतत्सहभावश्रुतेरित्यत्र तदभावश्रुतेरिति तञो व्यत्यासेनान्वय इत्यभिप्रेत्य
नवेत्यादिभाष्यं व्याचष्टे । भगवदङ्गेष्विति । उपासनाविशेषाणां अधिकारिविशेषाण
नावगमादित्यभिसंधिमुद्घाटयति । अयमभिसंधिरिति ।

## वाक्यार्थविवरणम्

उक्तस्येति ॥ अङ्गदेवतोपासनस्य कर्तव्यत्वमङ्गीकृत्योक्तस्य तद्विधानां सार्थक्यस्ये ॥ क्रियात्वादिति ॥ उपासनस्यापि मानसक्रियात्वादित्यर्थः ॥ उपासनेनेति भगवद्गुणोपासनेन ॥ सहभावप्रसङ्गात् ॥ सहोक्तिप्रसङ्गादित्यर्थः । यथा यासु शा भगवद्गुणोपासनं कर्तव्यतयोच्यते तासु सर्वत्राप्यग्निष्टोमादिक्रियाणामपि कर्तव्यतोच्यत सहभावोऽस्ति । न तथाऽत्रेति भावः ॥

इति तृतीय उपासनापदः समाप्तः ॥

## वाक्यार्थमञ्जरी

ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं न वेत्यकर्तव्यताप्रतिपादकसूत्रेण सि इत्यत उक्तम् ॥ गूढाभिसंधिनेति ॥ उत्तमाधिकारिव्यतिरिक्तैरित्यधिकारि विशेषनि भावादभिसंधेर्गूढत्वमिति ज्ञातव्यम् ॥ ॐ न वा तत्सहभावश्रुतेः ॐ ॥ अङ्गाश्रितदेवो न वा कार्यं कुतः अतत्सहभावश्रुतेः । तेन सर्वशाखागतोपासनेन सहभावस्य सहत्व श्रुतेरश्रवणादित्यर्थः । आशयमुद्घाटयति ॥ अयमभिसन्धिरिति ॥

## सूत्रभाष्यम्

**॥ ॐ दर्शनाच्च ॐ ॥ ६८ ॥**

**'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।**
**नान्यत्किञ्चित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते'**

**इति कमठश्रुतौ ॥ ६८ ॥**

**॥ इति नवाधिकरणम् ॥ ४२ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**

**श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य**

दर्शनाच्च ॥ ''सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यादि''त्यादिश्रु
देवगणानामपि केषाञ्चिदङ्गेष्वङ्गदेवतोपसंहारस्तद्गुणानां चाङ्गेषु सर्वगुणानां चोत्तरोत्तरम् ॥

इति सहाश्रवणाधिकरणम् ।

इति तत्त्वदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ।

## तत्त्वप्रकाशिका

एतमेवार्थं श्रुत्या समर्थयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ दर्शनाच्चेति ॥ अतो देव
भगवदङ्गाश्रितत्वेनोपासनं युक्तमित्युक्तमुपपन्नमिति सिद्धम् ॥ ६८ ॥

इति तृतीयः पादः ।

## भावबोधः

तां श्रुतिमिति । ''उपासना यजनं चेति साम्यं तत्तद्विशेषान् संहरेत् सर्वतश्च । 
कर्तॄणां तत्फलानां विशेषाद्व्यर्था हि शाखा अन्यथैवं च सार्था'' इति न्यायविवरणोदा
श्रुतिरपि ग्राह्या । अत्र प्रथमे अङ्गदेवतोपासनाभावे हेतूक्तिः । द्वितीये– तदुपोद्बल
श्रुत्युक्तिरिति । अत्र पादे आद्यमधिकरणं ध्यानाङ्गशास्त्राभ्यासरूपोपासनाप्रतिपादक
पेटिका । उत्तरमधिकरणत्रिकं सार्वत्रिकगुणोपसंहारप्रतिपादकत्वेनैका पेटिका । तत्रा
सर्वगुणोपसंहारानुपसंहारसमर्थनम् । द्वितीये– तयोरेव पुरुषभेदेन कर्तव्यत्वसमर्थनम्
तदुत्तरद्वादशाधिकरणानि प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं मुक्तिविषयत्वे
पेटिका । तत्राद्ये– मुक्तौ उपासनानुवृत्तिसमर्थनम् । द्वितीये तृतीये च बहुगुणोपसंहा
कर्तव्यत्वसमर्थनम् । मुक्तानां कर्मणि नियमाभावसमर्थनम् । तदुत्तरमधिकरण
प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं गुरुप्रसादरूपोपासनेति कर्तव्यताप्र
पादकत्वेनैका पेटिका । तत्राद्ये तस्यावश्यकत्वसमर्थनम् । द्वितीये–
बलीयस्त्वसमर्थनम्। तदुत्तरमेकमधिकरणमेका पेटिका । तदुत्तरमधिकरणद्वयमुपास
जन्यापरोक्षज्ञानस्य मोक्षसाधनत्वप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– ज्ञानस्यैव मोक्षसा
त्वप्रतिपादनम् । द्वितीये– तत्र प्रमाणान्तरबाधकोद्धारः । तदुत्तरमधिकरणमेकमे
पेटिका। तदुत्तरमधिकरणद्वयमपरोक्षज्ञानविषयकत्वेनैका पेटिका । तत्राद्ये–

(भावबोधः)

तारतम्यस्य, द्वितीये– बिम्बविषयत्वस्य च समर्थनम् । तदुत्तरमधिकरणत्रयं प्रत्येकमेकैक
पेटिका । तदुत्तरमधिकरणद्वयं भूमगुणोपासनाविषयत्वेनैका पेटिका । तत्राद्ये– भूम
पासनस्य सर्वसाधारण्यसमर्थनम् । द्वितीये– भूमगुणोपासनाधिकारिणां विशेषसमर्थ
तदुत्तरमधिकरणद्वयमबिम्बोपासनविषयत्वेनैका पेटिका । तत्राद्ये हरिदर्शनोपयो
यावश्यकस्य तस्याकर्तव्यतानिरासः । द्वितीये अनावश्यकस्य तस्य विकल्पोक्ति
तदुत्तरमधिकरणद्वयमङ्गदेवतोपासनविषयत्वेनैका पेटिका । तत्राद्ये– योग्यानां कर्तव्य
पादनम् । द्वितीये अयोग्यानां तन्निषेध इति ॥ इति नवाधिकरणम् ॥ ४२ ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थ
पूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे तृतीयाध्यायस्य तृतीयः पादः ॥

## भावदीपः

॥ ॐ दर्शनाच्च ॐ ॥ ६८ ॥ एतमेवेति ॥ अयमभिसंधिरित्यादिनोक्तमेवार्थमि
॥ अत इति ॥ सर्वशाखास्वनुक्तस्यान्यथोपपन्नत्वादित्यर्थः । उक्तमुपपन
फलोक्तिः ॥ ६८ ॥ अ० ४२ ॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेंद्रयतिकृते
तृतीयाध्यायस्य तृतीयः पादः ॥

## वाक्यार्थमुक्तावली

ॐ दर्शनाच्च ॐ ३-३-६८ ॥ एतमेवार्थं श्रुत्वेति । आगम इत्युक्तन्यायं प्र
श्रुत्या समर्थयदिति पूरणीयम् । दर्शनश्रुतेश्चाङ्गदेवतोपसंहारो देवैः कार्यः । इतरैन
सूत्रार्थः ।

अत्राद्ये युक्तिः । द्वितीये श्रुतिरिति सूत्रक्रमः ।

पेटिका तु भावबोधे द्रष्टव्या । विस्तरभयान्नेहोच्यते ।

इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना
श्रीश्रीनिवासेन रचितायां श्रीमत्तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां

अत्र प्रथमे अङ्गदेवतोपासनाभावे हेतूक्तिः । द्वितीये तदुपलम्भकश्रु
सूत्रक्रमः ॥

इति तत्वप्रकाशिकाटीकायां तत्वसुबोधिन्यां
तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥

## वाक्यार्थमञ्जरी

ॐ दर्शनाच्च ॐ ॥ सत्यो ज्ञान इति श्रुतौ देवैस्तथोपासनं कार्यं न
दर्शनाच्चैवमित्यर्थः ॥ ४२ ॥

इति श्रीमत्तत्वप्रकाशिकावाक्यार्थतत्त्वमंजर्यां श्रीनिवासविरचितायां
तृतीयाध्यायस्य तृतीयः पादः ॥

# अथ तृतीयाध्यायस्य चतुर्थः पादः

## १. पुरुषार्थाधिकरणम्

ज्ञानसामर्थ्यमस्मिन्पाद उच्यते —

।। ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ।। १ ।।

यद्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात्सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते 'यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् तं तं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' (मु.उ.३-१-१०) इति शब्दात्।

### तत्त्वप्रदीपिका

ज्ञानसामर्थ्यमस्मिन्पाद उच्यते । अयमर्थः । उक्तोपासनासमुन्नाहपरिपाकसमुत्पन्नस्य दर्शनस्य महिमाऽस्मिन्नारभ्यमाणे चतुर्थे पादेऽनुवर्ण्यते । पुरुषार्थोऽतः शब्दादिति बादरायण यस्य विष्णोर्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात् । तस्य प्रसादात्सञ्जाताद्दर्शनात्सर्वपुरुषार्थप्र रुच्यते–''यं यं लोकं मनसा संविभाती''त्यादौ । सा च तस्माद्विष्णोर्दृष्टादिति भावः । न चैत नसामर्थ्यं न भवति । विषयमपेक्ष्य विवक्षितत्वात् विचक्षणसमाजाधिराजेन । बादरायण इति रतानामधिकतयाऽऽश्रयत्वेन भगवत्तमो वेदेश्वर उच्यते । संविभाति मनुते । भा ज्ञान इति धातो

### तत्त्वप्रकाशिका

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । एतत्पादार्थं दर्श ।। ज्ञानेति ।। भगवदपरोक्षज्ञानार्थमुपासनोक्ता तज्ज्ञानं तया भवति इति चोक्तम् । तस्य ज्ञा सामर्थ्यमत्रोच्यत इत्यर्थः । अत्रादौ ब्रह्मप्राप्तिसाधनज्ञानस्य सर्वपुरुषार्थसाधनत्वमहिम्नो वर्णना शास्त्रादिसंगतिः । अन्यथा न तत्रातिशयेन प्रवृत्तिः स्यादिति तद्वर्णनीयम् । उपासनसाध्यतया ज्ञानमत्र विषयः । किं 'मोक्षमात्रसाधनमुत फलान्तरस्यापि साधनम्' इति सन्देह निरवधारणमुक्तिसाधनत्वोक्तेरुभयथा संभवः सन्देहबीजम् । ज्ञानं मोक्षमात्रसाधनमिति पक्षः । ज्ञानिनां मोक्षेतरपुरुषार्थेषु विरक्तत्वेन तदिच्छाया एवाभावात् । 'परीक्ष्य लोकान्कर्मचि ब्राह्मणो निर्वेदमायात्' 'प्रजहाति यदा कामान्' इत्यादेः । इच्छाभावेऽपि तत्प्राप्तौ पुरुषार्थत्वम स्यात् । अतो ज्ञानस्य मोक्षमात्रसाधनत्वान्न तत्सर्वथाऽऽपाद्यमिति । सिद्धान्तयत्सूत्रमुप

इत्यर्थः । संविभाति इच्छति । जयते प्राप्नोति । न च श्रुत्यादिना ज्ञानिनां मोक्षेतरपुरुपार्थेच्छाभावान्न ज्ञानात्सर्वपुरुपार्थप्राप्तिरिति युक्तम् । श्रुत्यादेः प्रायेण ज्ञानिनामन्येच्छाभावपरत्वात् । अस्माभिस्तु श्रुत्यवलम्बेन यस्य सौभरिकर्दमादिवद्भवतीच्छा तस्य ज्ञानादेव सर्वपुरुपार्थप्राप्तिर्भवतीत्यभ्युपगमात् ॥ १ ॥

## गुर्वर्थदीपिका

उपासनाफलीभूतापरोक्षज्ञाने मोक्षसाधनत्वस्य मन्दाधिकारिणामपि रुच्युत्पादनाय प्रसङ्गसङ्गत्या प्राक् निरूपितत्वादिदानीं तु तस्यैव ज्ञानस्य मोक्षेतरपुरुषार्थसाधनत्वमप्यस्तीति ज्ञानमाहात्म्यप्रतिपादनाय ''पुरुषार्थोऽतः शब्दा''दिति सूत्रम् । एतदेवाभिप्रेत्य ज्ञानसामर्थ्यमस्मिन्पाद उच्यत इति भाष्यं च । निरवधारणमुक्तिसाधनत्वोक्तेरित्यत्र ज्ञानं मुक्तेरेव साधनमित्यवधारणरहितसाधनत्वोक्तेरित्यर्थः । यद्यपि विद्यैवेत्युक्तज्ञानमेव अत इति परामृष्टुं शक्यते तथापि पूर्वोत्तरपादयोस्सङ्गतिसूचनाय यस्य दर्शनस्यार्थ इत्युक्तम् । इच्छाभावादित्यत्रेच्छाभावप्रतिपादनादित्यर्थः । तस्य ज्ञानादेवेत्यत्र ज्ञानोत्तरकालं प्रारब्धकर्मणैव भोगो भविष्यति किं ज्ञानेनेति चेन्न क्रमिककालपरिपाकानां कर्मणां क्रमिकदेहप्रापकत्वेऽपि युगपत्कायव्यूहसम्पादनं ज्ञानमहिम्नैव न कर्मणा । ज्ञानेन प्रारब्धकर्मणामप्युपमर्दस्य वक्ष्यमाणत्वाच्च । अतस्सुष्ठूक्तं ''पुरुषार्थोऽतश्शब्दा''दिति ज्ञेयम् ।

## भावबोधः

ओं पुरुषार्थोऽतः शब्दादिति बादरायणः ओं ॥ १ ॥ ''अस्मिन्'' इति भाष्ये ''इदं'' शब्दप्रयोगः पूर्वपादेनास्य पादस्य सङ्गतिप्रदर्शनार्थ इत्यभिप्रेत्याह– भगवदपरोक्षेति । उक्तं ''विद्यैव तु निर्धारणादित्यत्र'' इत्यर्थः । सामर्थ्यमिति । स्वर्गाद्यशेषपुरुषार्थसाधनत्वादिरूपमित्यर्थः । सर्वपुरुषार्थसाधनत्वमहिम्न इति । पूर्वाधिकरणे ''दर्शनाच्च'' इत्यनेनोक्तश्रुतिरूपप्रमाणमेवात्रापि ज्ञानस्याशेषपुरुषार्थसाधनत्वे ''शब्दात्'' इत्यनेनोच्यत इत्यनन्तरसङ्गतिरिति भावः । किमित्यादि । अत्र ज्ञानं किं मोक्षमात्रसाधनमुत स्वर्गादिफलान्तरस्यापि साधनमिति चिन्ता । तदर्थं ज्ञानिनां मोक्षेतरपुरुषार्थेच्छा नास्त्युत अस्तीति। तदर्थं ''परीक्ष्य लोकान्,'' ''प्रजहाति यदा कामान्'' इत्यादिवाक्यं किं निरवकाशमुत सावकाशमिति । ज्ञानस्याशेषपुरुषार्थसाधनत्वेऽपि किं ज्ञानकर्मणोः परस्परशेषशेषिभावो न संभवत्युत संभवतीति । तदर्थं तदुभयप्रतिपादकप्रमाणानां किं समानविषयत्वेन विरोध उत भिन्नविषयत्वेनविरोध इति । निरवधारणेति । ''विद्यैव तु निर्धारणात्'' इत्यत्र ज्ञानस्यैव मुक्तिसाधनत्वोक्त्यापि [illegible]

(भावबोध:)

भाव: । ज्ञानिन: औदार्यान्मोक्षादन्यफलेच्छाया एवासंभवात्तदुक्ति: प्रशंसामात्रमिति न
विवरणं मनसि निधायाह– ज्ञानिनामिति । सूत्रे ''अत:'' इत्यस्य पूर्वप्रकृतपराम
त्वोपपादनाय प्रवृत्तं यद्दर्शनार्थमिति भाष्यं व्याचष्टे– यस्येति । सूत्रे ''सर्व'' शब्दाश्र
कथं भाष्ये सर्वपुरुषार्थेत्युक्तमित्यत: पुरुषार्थशब्दसामर्थ्यादेव तल्लब्धमित्यभिप्रेत्
पुरुषैरिति । प्रायशो न संभवत्येव कस्यचित् सौभर्यादिवद्भवति चेज्ज्ञानेनैवाशेषमी
भवतीति व्यवस्थोपपत्तेरिति न्यायविवरणं मनसि निधायाह– श्रुत्यादे: प्रायेणेति ।

## भावदीप:

॥ ॐ पुरुषार्थोऽतश्शब्दादिति बादरायण: ॐ ॥ १ ॥ कतिचिन्नयैरुच्यत
भ्रमनिरासायाह ॥ एतत्पादार्थमिति ॥ एतत्प्रदर्शनं च ''वैराग्यतो भक्तिदार्ढ्यं तेनो
यदा भवेत् । आपरोक्ष्यं भवेद्विष्णोरि''त्यनुभाष्योक्तदिशा पूर्वपादेनास्य पा
संगत्युक्त्यर्थमिति भावेन संगतिपरतया भाष्यं व्याचष्टे ॥ भगवदिति ॥ उक्तेति
तन्निर्धारणार्थनियम इत्यादौ तथा निर्णयादिति भाव: ॥ उक्तमिति ॥ तत्रैवेत्यर्थ
यद्वोपासनयैव ज्ञानं न तु कर्मत इत्येतत् साधनं ज्ञानसंपत्तौ प्रधानमिति जिज्ञासासूत्र
प्रकाशश्च कर्मण्यभ्यासादित्यत्र चेत्यर्थ: । एतच्च तया ज्ञानं जायते न तु कर्मत इत्येत
क्त्वा सामर्थ्योक्तिरयुक्तेति शंकाव्युदासाय ॥ सामर्थ्यमिति ॥ सर्वपुमर्थहेतुत्वपापा
करत्वयोग्यजनमात्रलभ्यत्वसन्निधिमात्रेण फलसंपादकत्वादिसामर्थ्यमित्यर्थ: । अस्मिन्नित
आद्याधिकरण इति सामर्थ्यमित्यस्य सर्वपुरुषार्थहेतुत्वरूपमहिमेत्यर्थमुपेत्यांतर्भावसंग
सूचकत्वमभ्युपेत्याह ॥ अत्रादाविति ॥ ब्रह्मेति शास्त्रे साधनेत्यध्याये ज्ञानस्य महिम्न
पादेऽन्तर्भाव उपपादितो ज्ञेय: । एवमग्रेऽपि प्रतिनयं बोध्यम् ॥ निरवधारणेति ॥ न
पंथा इति दृष्ट्वैव तमित्यवधारणेऽपि तं विद्वानमृत एव भवतीति । दृष्ट्वैव तं मुच्यत एव
फलांतरं प्राप्नोतीत्येवंरूपावधारणं विनोक्तिरित्यर्थ: । ज्ञानिन: औदार्यान्मोक्षाद
फलेच्छाया एवासंभवादित्यन्यत्रोक्तहेतुमाह ॥ ज्ञानिनामिति ॥ असिद्धिनिरासाय औद
शब्दार्थतया विरक्तत्वेनेत्युपपादकोक्ति: । कथं ज्ञानिनो विरक्तत्वमित्यतो वैराग
ज्ञानपूर्वभावित्वादिति भावेन तत्र श्रुतिस्मृती आह ॥ परीक्ष्येति ॥ श्रुत्यर्थो जिज्ञास
व्यक्त: । सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्ट: स्थितप्रज्ञस्तदोच्यत इति द्वि
गीतोक्तेरित्यर्थ: । हेतोरप्रयोजकत्वं निराह ॥ इच्छेति ॥ अत इति ॥ ज्ञानिन: फलांत
निच्छुत्वादनिष्टस्य चापुरुषार्थत्वादित्यर्थ: । तस्माद्दर्शनादित्यंतभाष्यं सौत्रात:शब्दारूढं
यदिषयदर्शनार्थमिति धीनिरासाय भाष्यं व्याचष्टे ॥ यस्येति ॥

(भावदीपः)

अस्माभिस्त्वित्यादिनाऽग्रे व्यक्तः । यद्यपि संविभाति मनुते भा ज्ञान इ
तत्वप्रदीपोक्तिस्तथापि धातूनामनेकार्थत्वात्प्रकृतोपयोगायाह ॥ संविभाति
प्रागुक्तशंकामनूद्य तन्निवर्तकतया प्रायशो न संभवत्येवेत्यन्यत्रोक्तं योजयि
श्रुत्यादिनेति ॥ परीक्ष्येति श्रुत्यादिना इच्छाभावावगमादित्यर्थः । कस्यचित्
संभवतीति चेत् ज्ञानेनैवाशेषमभीप्सितं भवतीत्यन्यत्रोक्तं सौत्रपुरुषार्थपदभावं प्र
व्यनक्ति ॥ अस्माभिस्त्विति ॥ सौभरिकर्दमेति ॥ व्यक्तमेतन्नवमस्कंधे ।
विप्रः कन्यामेकामयाचतेत्यादिना । तथा तृतीयस्कंधे । प्रियायाः प्रियम
योगमास्थित इत्यादिना ॥ १ ॥

## वाक्यार्थमुक्तावली

ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ३-४-१ ॥ एतत्पादार्थमि
स्यैकार्थत्वात्पादभेदः किंनिबन्धनः इत्यतः साधनेऽप्यवान्तरभेदादिति भावेनेि
तज्ज्ञानं तया भवतीति चोक्तमिति । तन्निर्धारणार्थनियम इत्यादावु
सर्वपुरुषार्थेति । अपवर्गस्येव स्वर्गाद्यशेषपुरुषार्थस्यापि साधनत्वमहिम्न
देवानामेवाङ्गाश्रितत्वेन तदङ्गे उपसंहारेऽधिकार इति कथनप्रसङ्गात्
तादृशोपासनाजन्यापरोक्षज्ञानेन सकलपुरुषार्थावाप्तिः । कर्मणा तु तत्फलेऽति
बादरायणीयमतस्य दर्शनाच्चेत्यत्रोक्तश्रुतिरूपप्रमाणेनैवात्र पुरुषार्थोऽतः शब्दा
देशात्तु बादरायणस्यैवं दर्शनादित्यनेनोपन्यासादनन्तरसङ्गतिः । अन्यथा न
च जिज्ञासासूत्रे ज्ञानाय विचारविधानमयुक्तमिति भावः । एवमुत्तरत्रापि ।
ज्ञानं किं मोक्षमात्रसाधनमुत फलान्तरस्यापि साधनमिति चिन्ता । त
मोक्षेतरपुरुषार्थेच्छा नास्त्युतास्तीति । निरवधारणेति । विद्यैव तु निर्धारणा
मुक्तिसाधनत्वोक्तावपि मुक्तिमात्रसाधनत्वस्यानुक्तत्वादिति भावः ।
कामयते यांश्च कामानिति प्रदर्शकेन शब्दादि''ति सूत्रखण्डेन व्यवच्छेद्यमौदा
वैराग्यमित्यर्थत्वेन प्रदर्शयति । ज्ञानिनामिति । यद्यपि परीक्ष्य लोक
जिज्ञासुविषया तथापि कैमुत्येन ज्ञानिनामन्यकामाभावे प्रमाणं भवत्येवे

(वाक्यार्थमुक्तावली)

स्वर्गादीत्यनुक्त्वा पुरुषैरर्थ्यत्वरूपावच्छेदकोक्त्यैव तल्लब्धमित्याह । पुरुषैरिति ।
त्यनेन सूचितं व्यवस्थितिरित्युक्तन्यायं दर्शयन् ब्राह्मणो निर्वेदमायात् । प्रजह
कामानित्यादेः गतिमाह । श्रुत्यादेरिति ।

## तत्त्वसुबोधिनी

ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ ॥ अस्मिन्निति भाष्ये इदं श
पूर्वयोगः पूर्वपदेनास्य संगतिप्रदर्शनार्थ इत्यभिप्रेत्याह । भगवदपरोक्षेति । उक्तं
निर्धारणादित्यत्रेत्यर्थः । सर्वपुरुषार्थत्वसाधनत्वमहिम्न इति । अत्र पूर्वाधिकरणे द
नेनोक्तश्रुतिरूपप्रमाणमेवात्रापि ज्ञानस्याशेषपुरुषार्थसाधनत्वे शब्दादित्यनेनोच्यते इ
संगतिरिति भावः ॥ ननु इच्छाभावेऽपि ज्ञानेनास्तु मुक्तिः ततः पुरुषार्थः तस्यैव
नित्यत आह । इच्छाभावेऽपि इति । पुरुषेच्छाद्युपपादनस्यैव पुरुषार्थत्वात् इति भा
अत इत्यस्य पूर्वप्रकृतपरामर्शोपपादनाय प्रवृत्तं यद्दर्शनार्थमिति भाष्यं व्याचष्टे ।
सूत्रे सर्वशब्दाश्रवाणात् कथं भाष्ये सर्वपुरुषार्थेत्युक्तमित्यतः पुरुषार्थशब्दसामर्थ्यादि
इत्याह । पुरुषैरिति । संविभाति इच्छतीति । संविभाति मनुते भा ज्ञान इति
वर्णकान्तरमुक्तमिति ध्येयम् । श्रुत्यादिनेति । परीक्ष्य लोकान्, प्रजहाति यदा
श्रुतिस्मृतिभ्यामित्यर्थः ।

## वाक्यार्थविवरणम्

श्रीरस्तु ॥ पुरुषार्थत्वमेवेति ॥ पुरुषैरर्थ्यस्यैव पुरुषार्थत्वादिति भावः ॥ स
स्वर्गमात्रसाधनात्कर्मणः सकाशादाधिक्येनेत्यर्थः ॥ श्रुत्यादिनेति 'परीक्ष्य
इत्यादिश्रुत्यादिनेत्यर्थः । ॥ इच्छाभावादिति ॥ इच्छाभावावगमादित्यर्थः ॥

## वाक्यार्थमञ्जरी

श्रीवेदव्यासाय नमः ॥ उक्तमिति ॥ विद्यैव तु निर्धारणादित्यत्रेत्यर्थः ॥ स
॥ स्वर्गापवर्गाद्यशेषपुरुषार्थसाधनत्वादिरूपमित्यर्थः । तथा च कारणनिरू
कार्यनिरूपणादनन्तरसंगतिरिति भावः ॥ निरवधारणेति ॥ विद्यैव तु निर्धा

(वाक्यार्थमञ्जारी)

ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ ॥ पुरुषार्थः पुरुषैरर्थ्यः अपेक्ष्यः सर्वो अतः ज्ञानादेव भवति कुतः शब्दात् यं यं लोकमिति श्रुतेरिति बादरायणाचार्यो म इत्यर्थः ॥ सौभरीति ॥ तेन युगपत्पंचाशद्देहग्रहणेन तावत्संख्याकस्त्रीभिः क्रीडनादिति ॥ कर्दमेति ॥

## सूत्रभाष्यम्

॥ ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ॥ २ ॥

अस्त्येव मोक्षसाधनत्वं ज्ञानस्य । स्वर्गादिषु तत्साधनकर्मशेषत्वेन । ' धनाद्देहतो वै गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चिदि'ति वदति जैमिनिः

## तत्त्वप्रदीपिका

शेषत्वादित्यादि सूत्रम् । अस्त्येव मोक्षसाधनत्वं ज्ञानस्यान्यसमुच्चितस्य । स्वर्गादिसाध तत्साधनकर्मशेषत्वेन । तत्र प्राधान्यं कर्मणः । एवं सर्वपुरुषार्थसाधनत्ववादो यथा '' धनादि''त्यादिश्रुतौ धनादिषु कर्मशेषत्वेन स्वर्गादिसाधनत्ववादस्तद्वदिति जैमिनिर्मन्यते । नन सूत्रयोजना सम्यग्भाति । अस्त्येव मोक्षसाधनत्वं ज्ञानस्येति । मोक्षसाधनत्वमपि कर्मशेषत्वे सध्रीचीना । विभाजकाभावात् । उत्तरसूत्रगतिश्च तादृशी दृश्यते । एवं च बहुश्रुत्यनुग्र जैमिनिमतानुयायिनश्च कर्माङ्गत्वेन ब्रह्मज्ञानस्य पुरुषार्थसाधनत्वमाहुर्न केवलस्य, ब्रह्मवाव कर्मवाक्यैनैकवाक्यतां ब्रुवन्तः । उच्यते । न तावत्सूत्रगतिनिरूपणाय मोक्षे ज्ञानस्य कर्मशे मवगन्तुं शक्यते । भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति, विद्यैव तु निर्धारणात्, दर्श श्रुत्यादिबलीयस्त्वाच्च न बाध इत्यादिसूत्रविरोधात्तद्दर्शितश्रुतिविरोधाच्च । न च सूत्राणां श्रु चान्योन्यविरोधेनार्थः प्रत्येतव्यः । न चात्र श्रुतिर्दृश्यते । न च कर्मशेषत्वे ज्ञानस्य जिज्ञासारम्भः सार्थः स्यात् । न च वाच्यं अस्त्वनारम्भणीयत्वं तन्मतसमाश्रयादिति । जैमि आरम्भणीयत्वात् । अन्यथा स्वमतस्यैव स्वाचार्योक्तिविरोधेन शिष्टापरिग्रहप्रसङ्गात् । ''वि षन्ति यज्ञेने''ति च श्रुतिः ॥

यत्तु कैश्चिद्विक्रियते कर्तृत्वेनाऽत्मनः कर्मशेषत्वात्तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद्विषय

कर्मशेषत्वं ब्रूयात् । उक्तं हि समाकर्षाधिकरणेऽन्यार्थमिति सूत्रे परमगुरुभगवन्मतैकदेशमा
जगति शब्दव्यवहारस्य गतिं ब्रुवता जैमिनिना परमात्मज्ञानार्थं कर्मदेवादिकं जगद्वदति वेदर
रिति । जीवात्मनोऽन्यस्य परमेश्वरस्य देवानां च विग्रहिणां नाभ्युपगतिः प्रथमकाण्ड इति न
ईश्वरादिदेवतानभ्युपगमे उद्देश्याभावात्तत्तदुद्देशेन यागासम्भवात्, तद्विधेरानर्थक्यप्रसङ्गात् । अभ
च जैमिनिर्देवतास्वरूपादिकम् । तत्प्राधान्यं हि सप्रमाणकं नवमाध्याये सूत्रयामास 'देवत
प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्,' 'स्मृतेरुपचारादन्यार्थदर्शनाच्च,' 'आर्थापत्त्याच्चे'ति

ननु पूर्वपक्षसूत्राण्येतानि । तथा हि– देवताविग्रहादिवादिनां पक्षं सविस्तरमन
त्यैतैर्निरस्यति चोत्तरत्र– "अपि वाशब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुति"रि
मैवम् । बहुप्रमाणोपन्यासाद्देवताप्राधान्यपक्षेऽपि वेत्यन्यपक्षेऽरुचिसूचनाच्च देवताप्राधान्यपक्ष
प्रेयानिति गम्यते । अन्योऽपि पक्षो दर्शितः कर्मैकभक्तप्राकृतजनच्छन्दानुवृत्त्या । तत्रापि प्रा
ब्रुवता न देवताविग्रहाद्यभावोऽभिप्रेतः । विद्यमानस्य हि देवतादेः स्रुगाज्यवल्लयादिवद्गुणत्व
यथाश्रुतं सम्भवेत् । "गुणत्वे देवताश्रुति"रिति हि तत्र चाऽह । न च विग्रहादिकं तत्प्रमा
चोपन्यस्तानि प्रत्याचख्यौ । सर्वं प्रत्याचख्यावुत्तरभाष्य इति चेत्, उत्सूत्रं प्रत्याख्यानप्रयत्नेऽपि
न महर्षिः प्रमाणसिद्धं स्वसिद्धान्तं परित्यजति । यदिह फलं ददाति तत्प्रयोजक
प्रत्याख्यानप्रयत्नोऽपि ह्याह । देवतार्थता यागस्य गम्यते । फलार्थताऽपि तु न प्रतिषिध्यते । फ
पुरुषार्थः । पुरुषार्थाय च नः प्रवृत्तिरिति चाऽह ॥

यजिर्देवतापूजा, सा पूज्यमानप्रधाना लोके लक्ष्यत इति च न लोकवदिह भवति । पूज्य
पूजाप्रधानकं यद्धि फलवत्तन्नः प्रयोजकम् । तस्माद्यज्ञकर्म प्रधानमिति चेन्न । तत्पूजात्म
कर्मणस्तदधीनमेव फलवत्त्वं, देवतैव हि फलदा, अतस्तज्ज्ञानपूर्विकैव तत्पूजा युक्ता । "
देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट् करिष्यन् यां ह्यन्यमना वाच वदत्यसुर्या वै
वागदेवजुष्टा, आहुतिभिरेव देवताः प्रीणाति तस्मै प्रीता इषमूर्जं नियच्छन्ती"ति हि श्रुतयः ।
इज्जनेन स विशा स जन्मना" "पुण्येन पुण्यं लोकं नयति" "एष ह्येव साधुकर्म कारय
"जगृम्मा ते दक्षिणमिन्द्र हस्तमि"त्यादि च । तदन्यार्थवचनं देवताविग्रहभोजनप्रसादे
फलदानाद्यवगमयितुं नालमिति चेत् । अपूर्वार्थो विधिः क्रियाकर्तव्यतां कथमवगमयेत् । यदि
वा कथं पय आदिकं । स्युत्यादिरूपतयाऽविधिपरत्वादयथार्थत्वमर्थवादादीनमिति चेन्न । प्रम
विरोधेऽपि वचनानां दशदाडिमादिवाक्यवदयथार्थत्वाङ्गीकारे यज्ञकर्मणः फलवत्त्वश्रुतिः
विश्वसनीया स्यात् । नच ते वदन्ति शतवत्सहस्रवदित्यादेरयथात्वम् । तादृशानामभिमानि
ताविषयत्वं ह्यसीषधाम । विग्रहादिवचनानां विद्यमानवादत्वेऽपि न विरुद्धं स्तुतित्वम् ।
तुविग्रीवादिपदानां तत्तदर्थवचने वाक्यभेदः । "अरुणयैकहायन्या पिङ्गाक्ष्या गवा क्रीणा
त्यादिवदेकवाक्यतोपपत्तेः । देवताद्यभाववादिनश्चास्येन्द्राग्न्यादिस्वरूपवादी वेदो वाच्यरहितत

(तत्त्वप्रदीपिका)

नास्माभिर्देवतास्वरूपं प्रतिषिध्यते विग्रहाद्येवेति चेन्न । स्वरूपेऽपि स्वोक्तन्यायेनैव प्रम
भावस्याभिप्रेतत्वात् । इन्द्रो नाम कश्चिदस्तीत्यत्र च श्रुतिरेव हि प्रमाणम् । तथा च तत्र
श्रूयमाणाः कथमप्रमाणकाः स्युः । अतो देवतादिनिरासप्रयासो व्यर्थः । न शोभते च वैदिकान
जैमिनिस्तु धर्ममीमांसको न तत्प्रत्याचख्यावित्याख्यातम् । देवतामीमांसा तु भगवतैवाऽ
णीयेति न स्वयमारेभे । नानादरात् । तस्मात्परमात्मज्ञानार्थं कर्मदेवतादिकं वदति वेद
जैमिनिवादो युक्तः । तत्र पुनः प्रकारविशेषाः शिष्यान्तरचिन्तिताः ॥

ननु कौशीतकिब्राह्मणगतबालाक्यजातशत्रुसंवादसमन्वयप्रतिपादनेन तत्र जीवप्राधान्यं नि
परमात्मज्ञापनार्थं ''एष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते'' इत्यादिको जीवपरामर्श इति वदति जैमिनि
केचिदन्यार्थमित्यादिसूत्रं योजयन्ति । मैवम् । जीवस्य परमात्मनोऽन्यत्वाभ्युपगमे स्वसिद्धा
विरोधात् । न स्वसिद्धान्तोऽयं जैमिनेरेवेति चेन्न । अप्रत्युक्तत्वात् । एवं च नेष्टसिद्धिः । उ
आश्मरथ्यौडुलोमिपक्षयोर्भेदस्पर्शित्वमुपन्यस्य भेदलेशस्याप्यविषह्यत्वेनाभेदविषयत्वेनोपन्यस्
काशकृत्स्नमतमेव हि स्वाभिमतमिति परिजल्पितम् । अन्यत्वेन भ्रान्त्या प्रतीतस्य सम्यग्ज्ञाप
जीवपरामर्श इति चेद्ब्रूयात्स स्वयं ब्रह्मात्मदर्शी कस्येदं व्याचक्षीत । स्वप्रस्थवदन्यं ददर्शेति चे
प्रबुद्धस्य तदभावात् । अप्रबुद्धत्वेन तद्वचनं पुमर्थेच्छवो गृह्णीयुः । प्रपञ्चितं चैतत्प्रागेव प्रथमाध्य
समन्वयादन्यद्वक्तुमयुक्तमित्युक्तमिति चेत्सत्यम् । अत एव सामान्यतः प्रतिज्ञातं समन्वयं प्रतिवे
प्रतिपदादिकं च प्रतिपाद्य अन्ततो निगमयाञ्चक्रे ''एतेन सर्वे व्याख्याता'' इति सर्वशब्दसमन्
मिति ब्रूमः ॥

न च वाच्यं एतेन सांख्यनिराकरणोक्तन्यायेनावशिष्टा अप्यण्वादिकारणवादिनस्सर्वे
निराकृता व्याख्याता इति सूत्रयोजनेति । समन्वयसम्बन्धादृते केवलसांख्यनिराकरणस्यैव
मञ्जसत्वात् । प्रधानस्य वैदिकत्वं निराक्रियत इति चेन्न । महदादिविकारवतः परतन्
प्रधानस्यामुख्यार्थतया वैदिकत्वाविरोधात् । स्वतन्त्रं तूपरिष्टात्प्रत्यादिष्टम् । अतः सर्वशब्
ब्रह्मणि प्रवृत्तिप्रतिपादने तैर्जगति व्यवहारस्य सर्वजनीनस्य गतिर्वक्तव्येति तदर्थं युक्तं समाकर्ष
कथनम् । अधिकारिभेदान्मतभेद इत्यवादि । न च वाक्यान्वयादित्यधिकरणान्तरकल्पना यु
विवेचकाभावात् । एकाधिकरणत्व उक्तसम्बन्धसम्भवाच्च । कर्मादिवाक्यानां शिष्यान्तरम
परमात्मसम्बन्धकथनस्य युक्तत्वात् । तत्पक्षे भगवतः स्वमताभावप्रसङ्गाच्च । काशकृत्स्नीयं म
स्वीक्रियत इति चेत्, काशकृत्स्नस्तावत्किं मन्यते? जीवेशैक्यमिति चेन्न । दत्तोत्तरत्वा
तद्यवस्थितिशब्दस्तद्वाचक इति ॥

(तत्त्वप्रदीपिका)

द्रष्टव्यत्वादिनोपदिश्यमानो जीवः परमात्मा वेत्याकांक्षायां प्रियसंसूचितेन जीवेनोपक्र
एवेत्याशंक्य वाक्यस्यावयवशः परमात्मन्येवान्वयात्स एव द्रष्टव्यत्वादिनोपदिश्यत इति प्र
सिद्धान्ते प्रियसंसूचितेन जीवेनोपक्रमस्य गतिरुच्यते– ''प्रतिज्ञासिद्धेरि''त्यादिसूत्रे । ''आ
विज्ञाते सर्वमिदं विज्ञातं भवति'' इदं सर्वं यदयमात्मे''ति प्रतिज्ञासिध्यर्थमभेदांशेनो
इत्याश्मरथ्यः । देहेन्द्रियाद्युपाधिबद्धस्य ज्ञानध्यानयोगेन तस्मादुत्क्रमिष्यतो ब्रह्मभावप्राप्ते
नोपक्रमः कृत इत्यौडुलोमिः । परस्यैव जीवरूपेणाप्यवस्थितेरभेदेनोपक्रम इति काशकृत्स्नो म
अधिकृतः पर एव जीव इति तन्मतं भवतीति तदनुसृतमाश्मरथ्येन । भेदांशस्याप्यभ्युपगत
द्वितीयपक्षस्य चावस्थापेक्षया भेदाभेदप्रणयित्वादिति ॥

अत्र ब्रमः । नात्र जीवेनोपक्रमोऽस्ति । येन तद्गतिरन्विष्येत । परमात्मन एव
प्रियत्वमुच्यते यतस्तत्प्रियत्वेनैवान्यस्य प्रियत्वं भवति । तथाच भागवते–

''प्राणबुद्धिमनःखात्मदेहापत्यधनादयः ।
यत्सम्पर्कात्प्रिया आसंस्ततः को न्वपरः प्रिय'' इति ।

तत्र ह्यात्मनोऽपि परमात्मार्थे प्रियत्वमुदितम् । आव्याकृतब्राह्मणे च ''आत्मेत्येवोपासीते
परमात्मानमुपास्यत्वेनोपदिश्य ''अनेन ह्येतत्सर्वं वेदे''त्यादिना तत्प्रसादात्सर्वज्ञत्वादिक
''तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादि''ति तस्य सर्वतः प्रेष्ठत्वं कथयति ॥

''स एष विष्णुर्भगवान् पुत्राद्वित्तात्तथाऽऽत्मनः ।
अन्यस्मादपि सर्वस्मात्प्रेष्ठ एव स्वभावतः ॥
आत्मनोऽपि प्रियत्वं तु तेनैव कृतमञ्जसा ।
आत्मनो निरयायैव कुर्यात्कर्माणि नित्यशः ॥
यतोऽतस्स्वात्मनश्चापि स्वाप्रियत्वमुदाहृतम् ।
स चेदप्रियकृद्विष्णुर्नाऽत्माऽपि प्रियतां व्रजेत् ॥
अस्मिन्प्रिये प्रियं सर्वं तस्मादेकः प्रियो हरिः ।
स चाऽत्मशब्देनोद्दिष्टो यस्मादात्तगुणः प्रभुरि''त्याध्यात्मे ॥

अतो जीवेनोपक्रमस्य गतिरुच्यत इत्येतद्दुरुक्तम् ॥

न च बहुभिस्सूत्रैस्तत्र तत्राभेदाशङ्कां निरस्य प्रतिपादितभेदस्य भगवतः शि
काशकृत्स्नस्याभेदाभिप्रायो भवति । तद्भावे च स्वसिद्धान्तं किं न पृथक् सूत्रयेत् ।
पूर्वपक्षपर्यवसानं निर्णयशास्त्रे शोभत इत्यास्तां विस्तरः । अतः स सन्देहो व्य
[illegible]

(तत्त्वप्रदीपिका)

मोक्षसाधने कर्मशेषत्वं ब्रूयुस्ते न जैमिनिमतमनुसरन्तीत्यवोचाम । अकुशला व्युत्पत्तावबोद्धारो विधिशेषाणामकर्तारः परमधर्माणामगन्तारः फलवितानानामित्यस्याः पदव्या दूरतो निरस्ता इति न किल पुरस्तात्प्रास्तविषय ॥

## तत्त्वप्रकाशिका

एतमर्थमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ शेषत्वादिति ॥ यदुक्तं मोक्षादिसमस्तपुरुषार्थसाधनं ज्ञानमिति तत्रास्तु ज्ञानस्य मोक्षसाधनत्वं न तु स्वर्गादिसाधनत्वम् । तत्साधनं तु कर्मैव । न चैवं यं यं लोकमिति ज्ञानस्य सर्वपुरुषार्थसाधनत्ववादविरोधः । ज्ञानस्यापि कर्मशेषत्वेन स्वर्गादि-साधनत्वाभ्युपगमात् । न च वाच्यं ज्ञानस्य कर्मशेषत्वाभ्युपगमेऽपि पुरुषार्थवादविरोधानतिवृत्तिः । पुरुषार्थवादे ज्ञानस्य प्राधान्यदर्शनात् । न हि शेषत्वे तथा प्रयोगो दृष्ट इति । स्वर्गसाधनकर्मशेषेऽपि धनादौ स्वर्गं धनादिति प्राधान्यप्रयोगदर्शनात् । तद्वदत्राप्युपपत्तेरिति जैमिनिराचार्यो मन्यत इति भावः । अत्र ज्ञानस्य कर्मशेषत्वं नाम कर्मणैव सिध्यत्स्वर्गस्याधिक्यापादकत्वम् ॥ २ ॥

## गुर्वर्थदीपिका

स्वर्गं धनादितीत्यस्य स्वर्गं धनादिति वाक्येनेत्यर्थः ।

## भावबोधः

प्राधान्यदर्शनादिति । ''ज्ञानादेव स्वर्गः'' इत्यादिनिर्देशबलादिति भावः ॥ ननु धनादेर्यज्ञादिकर्मजनकत्वेन भवतु तच्छेषत्वं, न ज्ञानस्य; अज्ञानिनामपि यज्ञादिदर्शनेन तस्य तदजनकत्वादित्यत आह– अत्र ज्ञानस्येति । स्वरूपोपकारकस्येव फलोपकारस्यापि प्रयाजादेः शेषत्वदर्शनादिति भावः ।

## भावदीपः

॥ ॐ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॐ ॥ एतमिति ॥ अस्माभि-स्त्वित्यादिनोक्तमर्थमित्यर्थः । आक्षिपदित्यापाततः । वस्तुतस्तु देवेतराधिकारिणां ज्ञानस्य मोक्षान्यपुमर्थसाधकत्वं कर्मशेषत्वेनेति प्रतिपादयत्सूत्रमित्यर्थो ज्ञेयः । सर्वान्प्रति साक्षादेव ज्ञानं सर्वपुमर्थहेतुरिति पूर्वसूत्रार्थं भ्रांतिमत्पुरुषाभिप्रायेणाक्षिपदित्युक्तम् । भाष्यं व्याचष्टे ॥

(भावदीपः)

वाच्यमिति ।। वक्ष्यमाणेति पदेनान्वयः ।। पुरुषार्थवादेति ।। यं यं लोकमिति पुरु
साधनत्ववादविरोधेत्यर्थः ।। प्राधान्यदर्शनादिति ।। यं यमिच्छति ज्ञानी तं तमाप्नो
साक्षाद्धेतुत्वप्रतीतेरिति भावः ।। तद्वदत्राप्युपपत्तेरिति ।। तदुक्तिः प्रशंसामात्र
न्यायविवरणोक्तरीत्या ज्ञानप्रशंसार्थत्वेन साक्षाद्धेतुत्वोक्त्युपपत्तेरित्यर्थः । ज्ञानस्य सा
देरिव कर्मस्वरूपानिष्पादकत्वात्कथं तच्छेषत्वमित्यतः तन्निष्पादकत्वाभावेऽपि प्रयाज
वदारादुपकारकत्वरूपं शेषत्वं भविष्यतीत्याह ।। कर्मशेषत्वं नामेति ।। यदेव विद्
श्रुतेरिति भावः ।। २ ।।

## वाक्यार्थमुक्तावली

ॐ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॐ ३-४-२ ।। अस्त्येव म
साधनत्वं ज्ञानस्येत्युपस्कार्यप्रदर्शकभाष्ये मोक्षसाधनत्वमेवास्तीत्येवकारान्वयं मत्वा तद्व
च्छेदार्थं दर्शयति । न त्विति । तत्साधनकर्मेत्यंशस्यार्थमाह । तत्साधनं त्विति ।
पुरुषार्थवादस्य गतिप्रदर्शनात् तत्संगमयितुं तद्व्यवच्छेद्यं विरोधमाशङ्क्य निषेधति
चेति। सूत्रेऽत इत्येतद्विपरिणम्यास्येत्यनुवर्तते । अस्य ज्ञानस्य पुरुषार्थवादः स्वर्ग
पुरुषार्थसाधनत्ववादः शेषत्वात् स्वर्गादिहेतुकर्मशेषत्वात् न साक्षादिति मत्वा प्रवृत्तं ज्ञ
स्वर्गादिसाधनत्वं तत्साधनकर्मशेषत्वेनैवेति भाष्यं व्याचष्टे । ज्ञानस्यापीति । प्राध
दर्शनादिति । ''विशुद्धसत्वः कामयते यांश्च कामान् तान् कामान् जयते तस्माद
ह्यर्चयेद्भूतिकाम'' इति ज्ञानस्यानन्यशेषतया पुरुषार्थसाधनत्वदर्शनात् । कामी यान्क
कामयते इति शेषीभूतकर्मप्राधान्यं प्रतीयेत । तस्मात् कर्मिणमर्चयेदित्यविधिः स्या
नत्वात्मज्ञमर्चयेदिति प्रयोग इति भावः । यथान्येष्वित्यत्र पुरुषार्थवाद इत्यनुवर्तत
व्याचष्टे । स्वर्गसाधनेति । स्वर्गसाधनकर्मशेषेऽपि दक्षिणादिरूपेण दीयमाने धनादौ
केवलदेहसाध्यात् नमस्कारपरिचर्यादेः गृहात् गृहस्थैरनुष्ठीयमानत्वात् ज्योतिष्टोमाद
कर्मसमानयोगक्षेमत्वे स्वर्गं धनादिति धनस्योक्त्या प्राधान्यप्रतीतेरिति भावः।

ननु ज्ञानस्य कर्मशेषत्वं नाम व्रीहिमोक्षणादीनां प्रधानात् पूर्वस्वरूपनिष
वुपयोगित्वेनाङ्गत्ववत् न कर्मस्वरूपोपकारकाङ्गत्वम् । अज्ञानिनामपि कर्मदर्शनात् ।
प्रयाजादिवत् फलसम्पादने सहकारितयाङ्गत्वम् । अज्ञानिकर्मणापि स्वर्गादिदर्शना
तदभावेऽपि फलोत्पत्तौ तस्य सहकारित्वानुपपत्तेः । दक्षिणादेरपूर्वनिष्पत्तावेवाङ्गत्वे दृष्ट
नानगण्याच्च । मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षत

(वाक्यार्थमुक्तावली)

सुखविशेषाधायकत्वं शेषत्वं विवक्षितम् । दृष्टान्तानानुगुण्यादित्यत आह । अत्र ज्ञानस्ये दार्ष्टान्तिक इत्यर्थः । शेषत्वमात्रे दृष्टान्त इति भावः । यद्वा यस्य यागस्य यावद् क्लृप्ता । तावत्याः स्वरूपोपकारकत्वेन कर्मशेषत्वेऽपि तदपेक्षया द्वित्रिगुणाधिक तत्फलेऽतिशयासाधकत्वं न सम्भवत्येवेति तदिह दृष्टान्तत्वेन विवक्षितमित्यदोषः।

## तत्त्वसुबोधिनी

विरोधानतिवृत्तिमेव दर्शयति । पुरुषार्थवाद इति प्राधान्यदर्शनादिति । ज्ञानादेव इत्यादीति भावः । ननु दोषत्वेऽप्यस्तु प्राधान्यप्रयोग इत्यत आह । नहीति । ननु ध यज्ञादिकर्मजनकत्वेन भवतु तच्छेषत्वम् । नज्ञानस्य । अज्ञानिनामपि यज्ञादिदर्शनेन तदजनकत्वादिति तत्राह । अत्र ज्ञानस्येति । स्वरूपोपकारकावघातादेरिव फलोप कस्यापि प्रयाजादेः शेषपत्वदर्शनादिति भावः ।

## वाक्यार्थविवरणम्

पुरुषार्थवादेति ॥ ज्ञानस्य प्राधान्येन सर्वपुरुषार्थसाधनत्वप्रतिपादक ''यं लोकमि''ति श्रुतिविरोधानतिवृत्तिश्रुतिविरोध एव स्यादित्यर्थः । तदुपपादयति पुरुषार्थवाद इति ॥

## वाक्यार्थमञ्जरी

ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ॥ पुरुषार्थवादः ज्ञाना शेषपुरुषार्थो भवतीत्युक्तिः शेषत्वात् ज्ञानस्य कर्मोपकारकत्वात् कथं यथान्येषु ध कर्मोपकारकत्वेन पुरुषार्थवादस्तथेति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ प्राधान्यदर्शन ॥ ज्ञानादेव स्वर्ग इति निर्देशबलादिति भावः । ननु धानाक्षेती विकर्मजनकत्वेन तच्छेषत्वं न ज्ञानस्याज्ञानिनामपि यज्ञादिदर्शनेन कर्मणस्तदजन्यत्वादित्यत आह ॥ ज्ञानस्येति ॥ स्वरूपोपकारकस्येव फलोपकारकस्यापि प्रयाजादेः शेषत्वदर्शनादिति भा

## सूत्रभाष्यम्

## तत्त्वप्रदीपिका

उत्तरसूत्रगतिरप्येतादृशी । तद्यथा ''यं यं लोकमि''ति स्पष्टार्थश्रुतेर्दृष्टान्तमात्रावष्टम्भा सङ्कोचकल्पः कष्ट इत्यत आह– आचारदर्शनात् ॥ अपरोक्षज्ञानिनामेव देवानां कर्माचरणं दृश ''यज्ञेन वै देवा ऊर्ध्वाः स्वर्गलोकमायन्'' ''प्रजापतिर्वा एतेनाग्रेऽयजत द्वादशाहेने''त्यादि अतो न ज्ञानेनैव सर्वं समाप्यते ॥

## तत्त्वप्रकाशिका

ननु ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वं किं न स्यात् श्रुतिबलात् । कुतः श्रुतेरर्था परिकल्पनेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ आचारेति ॥ देवास्तावज्ज्ञानिनः । 'नैव दे प्राप्ता ब्रह्मदर्शनवर्जिताः' । इति वचनात् । तेषां च कर्मानुष्ठानं दृश्यते 'यज्ञेन यज्ञमयजन्त दे इत्यादौ । तथा च ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वे कर्मानुष्ठानवैयर्थ्यं स्यात् । अतो न ज्ञा सर्वपुरुषार्थप्राप्तिरिति भावः ॥ ३ ॥

## भावदीपः

॥ ॐ आचारदर्शनात् ॐ ॥ ३ ॥ सूत्रे चशब्दस्य ज्ञानिनां च देवानामित्यर्थम् शंकानिवर्तकतया सूत्रमवतारयति ॥ नन्विति ॥ तत्वप्रदीपादौ क्वचिदाचारदर्शनादित्येव दृश्यते ॥ श्रुतीति ॥ यं यं लोकमिति श्रुतिबलादित्यर्थः ॥ अर्थांतरेति ॥ कर्मशे रूपेत्यर्थः । यथान्येष्वित्युक्तदृष्टांतमात्रं तु न कल्पकमिति भावः । भाष्यं व्याचष्टे ॥ इति ॥ वचनादिति ॥ द्वितीये गीतातात्पर्योक्तवचनात् । इत्यादावित्यादिपदेन यज्ञमतन्वत । यज्ञेन वै देवा ऊर्ध्वाः स्वर्गमायन्नित्यादिग्रहः । किं तत इत्यतो भावमा तथा चेति ॥ आचारदर्शनस्य वक्ष्यमाणदिशा कर्मशेषत्वरूपसाध्यासाधकतया साध्यांत ॥ अतो न ज्ञानादेवेति ॥ आचारदर्शनादित्यर्थः । आचारदर्शनमेव श्रुतेरर्थांतरकल्पक प्रागुक्तशंकानिवृत्तिरिति भावः ॥ ३ ॥

## वाक्यार्थमुक्तावली

ॐ आचारदर्शनात् ॐ ३-४-३ ॥ अत्र ज्ञानिनामपि देवादीनामिति शेषः। शेष पुरुषार्थवाद इतिवदिति भावेन प्रवृत्तं ज्ञानिनामपीति भाष्यं व्याचष्टे । देवा इत्यादि देवाः देवपदयोग्याः। पदप्राप्तेः पूर्वमेव ब्रह्मणां शतकालात्तु पूर्वमारब्धसञ्ज्ञया इत्युक्त प्राप्तापरोक्षाः । ब्रह्मदर्शनाभावे पदप्राप्तेरेव निषिद्धत्वात् । तेषां प्राप्तापरोक्षाणां देवत्वयो

(वाक्यार्थमुक्तावली)

देवत्वयोग्यग्रहणस्य देवताधिकरणविरोधः । कर्मणीति सूत्र एव स्पष्टत्वात् । यद्वा श्रुतेः प्राप्तदेवतापदविषयत्वेनार्थान्तरमङ्गीकृत्यैतट्टीकाप्रवृत्तिः । ननु तर्हि ये देवा यज्ञमयजन्त ते महिमानो देवाः नाकं मोक्षं तद्गतानन्दातिशयादिकं सचंते प्राप्नुवन्निति तदर्थोपपत्तेरिति भावः । भाष्ये देवादीनामित्यादिपदेन प्रजापादीनां ग्रहणम् । टीकायामित्यादिपदेन ''यज्ञेन वै देवा ऊर्ध्वं स्वर्गं लोकमायन् । प्रजापतिर्वा एतेनाग्रे यजत द्वादशाहेने''ति तत्वप्रदीपोदाहृता श्रुतिर्गृह्यते ।

## वाक्यार्थविवरणम्

सर्वपुरुषार्थावाप्तिरिति ।। मोक्षतदितरपुरुषार्थावाप्तिरित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ आचारदर्शनाच्च ॐ ।। यज्ञेनेति श्रुतौ देवानामाचारस्य कर्मानुष्ठानदर्शनाच्च ज्ञानस्य कर्मशेषत्वमित्यर्थः ।।

## सूत्रभाष्यम्

**।। ॐ तच्छ्रुतेः ॐ ।। ४ ।।**

**'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'**(छां.उ.१-१-१०)**ति शेषत्वश्रुतेः ।। ४ ।।**

## तत्त्वप्रदीपिका

तच्छ्रुतेः ।। ''यदेव विद्यया करोती''त्यादौ विदुषः कर्म वीर्यवत्तरमित्युक्तेः कर्मणः स्वकीयस्वर्गादिफलदाने विद्यायाः शेषत्वमीयते ।।

'महिम्ना सारभूतेन विष्णुनाऽज्ञो ज्ञ एव च । कुरुतः कर्म नाज्ञस्य मुक्तिर्ज्ञस्य भवेत्तु सा ।। स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतमि''ति तार्तीये ।। उपनिषादयतीति चोपनिषत्परमात्मविद्या ।।

## तत्त्वप्रकाशिका

नन्वेवमस्तु ज्ञानकर्मणोरुभयोरपि स्वर्गादिसाधनत्वं ज्ञानस्य कर्मशेपत्वं कुत इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। तदिति ।। न ज्ञानस्य कर्मशेषत्वाभावः । 'यदेव विद्यया' इति तदभिधायकश्रुतेरिति भावः । उपनिषदा स्वयोग्यया । वीर्यवत्तरमधिकफलसाधनम् ।। ४ ।।

## गुर्वर्थदीपिका

यदेव विद्ययेतीत्यत्र 'यदेव विद्यये'ति वाक्य इत्यर्थः । उपनिषदेत्यस्य उप तस्य समीपे उप उपपन्नतया च निषीदति तिष्ठति या सा उपनिषत्स्वयोग्यता तयेत्यर्थः ।

## भावदीपः

॥ ॐ तच्छ्रुतेः ॐ ॥ ४ ॥ नन्वेवमिति ॥ देवानामाचारदर्शने सतीत्यर्थः ॥ कर्मशे कुत इति ॥ ज्ञान्याचारस्य ज्ञानकर्मणोः समप्रधानत्वेऽप्युपपत्तेरिति भावः । सूत्रभ स्थहेतोः साध्यमाह ॥ न ज्ञानस्येति ॥ एतेनाद्यसूत्रस्थमतः इतिपदं षष्ठ्यंततया शेषत्व त्यत्रान्वितं सदिहापि ज्ञानस्य शेषत्वमिति साध्यार्पकतयान्वेतीति दर्शितम् । स्वयोग्य परिज्ञानं यत्तस्योपनिषत्स्मृतमित्याद्याध्यायछांदोग्यभाष्यानुरोधेनोपनिषदा विद्ययेत्यन्वय त्यार्थमाह ॥ स्वयोग्ययेति ॥ ४ ॥

## वाक्यार्थमुक्तावली

तदिति व्यस्तं समस्तं च पदम् । तस्य कर्मप्रतिज्ञाने शेषत्वश्रुतेः श्रवणात् । यद्वा शेषत्वश्रुतेः सत्वात् तच्छेषत्वमिति सूत्रार्थमाह । न ज्ञानस्येति ॥

## तत्त्वसुबोधिनी

स्वयोग्यं तु परिज्ञानं तस्योपनिषत्स्मृतमिति प्रमाणानुसारेण महोपनि विद्ययेत्यन्वयमुपेत्यार्थमाह ॥ स्वयोग्येति ।

## वाक्यार्थविवरणम्

उपनिषीदतीत्युपनिषदिति व्युत्पत्तिमभिप्रेत्य स्वयोग्ययेत्युक्तम् ।

## वाक्यार्थमञ्जरी

ॐ तच्छ्रुतेः ॐ ॥ तस्य कर्मप्रतिज्ञानशेषत्वस्य श्रुतेर्यदेवेति श्रवणा तच्छेषत्वमेवेत्यर्थः ॥

## सूत्रभाष्यम्

(सूत्रभाष्यम्)

'कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः ।
भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यदि'ति माठरश्रुतेश्च
संशब्दः प्राधान्यं दर्शयति ॥ ५ ॥

## तत्त्वप्रदीपिका

समन्वारम्भणात् ॥ नापरस्तत्र हेतुः– अपरो नात्र हेतुरित्यर्थो विष्णोरितरापेक्षया । पर
स्त्वत्र स्वतन्त्रहेतुरिति चार्थसद्भावात् । आरम्भणीयदेहस्यात्र कर्माधीनत्वं विवक्षितं न मो

## तत्त्वप्रकाशिका

ननु यथा ज्ञानस्य प्राधान्यं श्रुतमपि न स्वीक्रियते किं तु शेषत्वमेवैवं 'यदेव विद्यय
श्रुतमपि कर्मणः प्राधान्यं नाङ्गीकार्यम् । किं नाम ज्ञानशेषत्वं कर्मणः साम्यं वा
विशेषप्रमाणाभावादित्याशङ्कां परिहरत्सूत्रं पठित्वा तदभिमतश्रुतिमुदाहरति ॥ समिति
स्वर्गादिसाधने कर्मणः शेषत्वं साम्यं वा ज्ञानेनाऽपि तु प्राधान्येनारम्भकत्वम् । कुतः । क
कर्मण एव प्राधान्येन स्वर्गाद्यारम्भकत्वश्रुतेरिति भावः । नापरस्तत्र हेतुरिति । कर्मशे
हेतुर्भवति न प्राधान्येन हेतुरस्तीत्यर्थः । ननु कर्मणः स्वर्गाद्यारम्भकत्वमेव सूत्रितं न प्राधा
परस्यापि सिद्धमित्यत आह ॥ संशब्द इति ॥ ५ ॥

## भावदीपः

॥ ॐ समन्वारंभणात् ॐ ॥ ५ ॥ सौत्रसंशब्दव्यावर्त्यद्वयं दर्शयन्नवतारय
नन्विति ॥ श्रुतमपीति ॥ यं यमिति श्रुतावित्यर्थः । अन्वारंभणादित्येतद्व्यावर्त्यम
विशेषेति ॥ ज्ञानस्य शेषत्वमित्यनुवृत्तसाध्यस्यात्र विवक्षितार्थोक्तिपूर्वकं भाष्यं व्याचष्टे
स्वर्गादीति ॥ प्रकृतप्रमेयाविरोधकत्वेन श्रौतपदार्थमाह ॥ नापर इति ॥ ५ ॥

## वाक्यार्थमुक्तावली

ॐ समन्वारम्भणात् ॐ ३-४-५ ॥ साम्यं वेति । मदीयश्रुत्यनादरे ज्ञानस्य
न्यायसाम्ये च त्वदीयश्रुत्यनादरेण कर्मणो ज्ञानशेषत्वं स्यात् । श्रुत्यादरे चोभयोः
भवत । पक्षद्वये च न ज्ञानस्य शेषत्वमिति ...

## तत्त्वसुबोधिनी

ननु नापरस्तत्रहेतुरिति भाष्ये कर्मण एव देहस्वर्गादिसाधनत्वमुक्तं तदयुक्तं ज्ञानादि त्वोक्तिविरुद्धत्वादित्यतः तद्व्याचष्टे । कर्मशेषतयेति ।

## वाक्यार्थविवरणम्

आरम्भकत्वम् उत्पादकत्वम् ।। कर्मैवेतीति ।। अनेन सम्यक् प्राधान्येन क अन्वारम्भणात् अन्वारम्भकत्वश्रुतेः स्वर्गाद्यारम्भकत्वश्रुतेरिति सूत्रार्थ उक्तो भव ज्ञातव्यम् । भाष्ये 'कर्मैव देह'मिति श्रुतौ शुभशब्देन स्वर्गो ग्राह्यः ।

## वाक्यार्थमञ्जरी

ॐ समन्वारंभणात् ॐ ।। कर्मैव देहमिति श्रुतौ देहादेः सर्वस्य कर्मणैव सं प्राध अन्वारंभणादुत्पादनोक्तेः कर्मण एव प्राधान्यमित्यर्थः ।। सिद्धमिति ।। तेन क ज्ञानशेषतया पुरुषार्थहेतुत्वाङ्गीकारादिति भावः ।। फलाभावादिति ।। तथाच तत्रातिशयाधायकत्वमिति भावः ।।

## सूत्रभाष्यम्

**।। ॐ तद्वतो विधानात् ॐ ।। ६ ।।**

**'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेते'ति कमठ ज्ञानवतोऽपि विधानात् ।। ६ ।।**

## तत्त्वप्रदीपिका

इतश्च ज्ञानकर्मणोः शेषशेषित्वम् ।। तद्वतो विधानात् ।। सदा कुर्यान्नित्यत्वेनोदितानि ।

## तत्त्वप्रकाशिका

तथापि न ज्ञानस्य कर्मशेषत्वं युक्तं किं तु स्वयमेव पुरुषार्थहेतुः । कस्मात् । ज्ञानिकृतक फलाभावात् । फलाभावेऽप्याचारस्तु मुक्तवल्लीलयैवेत्याशङ्क्यां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। इति ।। न ज्ञानिनां कर्म लीलया मुक्तवत् । येन फलाभावः । ज्ञानी च कर्माणीति ज्ञा

## भावदीपः

॥ ॐ तद्वतो विधानात् ॐ ॥ ६ ॥ सौत्रविधानपदव्यावर्त्यं वदन्नवतारयति तथापीति ॥ कर्मणः प्राधान्येऽपीत्यर्थः ॥ स्वयमेवेति ॥ कर्मवत्प्रधानमेवेत्यर्थः आचारेत्यादिसूत्रद्वयोक्तहेतोः का गतिरिति भावेन पृच्छति ॥ कस्मादिति ॥ लीलयैवेति वीर्यवत्तरमित्युक्तिरपि ज्ञानप्रशंसामात्रपरमिति भावः । योग्यसाध्यमध्याहृत्य भाष्यं व्या ॥ न ज्ञानिनामिति ॥ ६ ॥

## वाक्यार्थमुक्तावली

ॐ तद्वतो विधानात् ॐ ३-४-६ ॥ ज्ञानिकृत कर्मण इति । ज्ञानिकर्मणः फलस हि तस्मिन् फलेऽतिशयाधायकत्वेन पूर्वभाविज्ञानस्य शेषत्वं स्यात् । न चैवम् । क देहमिति श्रुतिस्तु अज्ञानिकृतकर्मविषयमपि सम्भवतीति भावः । सूत्रे तद्वतः ज्ञानिकर्म फलारम्भकत्वमिति वर्तते । तथा च ज्ञानिकर्मणः फलारम्भकत्वमस्त्येव । लीलामात्र कुतः । तद्वतो ज्ञानवतोऽपि कर्मविधानादिति भावेन सूत्रार्थं स्पष्टयति । न ज्ञानिनामिति

## तत्त्वसुबोधिनी

विहितत्वे तैस्तु लीलात्वमुक्तं तदप्ययुक्तम् । ज्ञानादेः शेषत्वमित्यत आह । विहितेति अन्यथा ज्ञानावरणस्यापि लीलात्वं स्यादिति भावः ।

## वाक्यार्थमञ्जरी

ॐ तद्वतो विधानात् ॐ ॥ ज्ञानी चेति श्रुतौ तद्वतः ज्ञानवतः कर्मविधाना लीलात्वमित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ नियमाच्च ॐ ॥ ७ ॥**

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर' (ई. उ. २) इति ॥ ७ ॥**

(तत्त्वप्रदीपिका)

''अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ।
अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदे''ति नारदीये ॥

## तत्त्वप्रकाशिका

न केवलं विहितत्वाज्ज्ञानिनः कर्म न लीलामात्रमपि त्वकरणे प्रत्यवायश्रुतेश्चेत्यर्थप्रतिप सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ नियमाच्चेति ॥ एवं कर्मकरणे त्वयि कर्म न लिप् इतोऽन्यथाऽकरणे नरे ज्ञानिन्यपि त्वयि पापं कर्म न लिप्यत इति नास्तीत्यर्थः ॥ ७ ॥

## भावदीपः

॥ ॐ नियमाच्च ॐ ॥ ७ ॥ सूत्रे चशब्दादाह ॥ न केवलमिति ॥ नि शब्दार्थोऽकरणे प्रत्यवायेति । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवमितीशावा भाष्यदिशा नान्यथेत्यादेरर्थमाह ॥ इतोऽन्यथेति ॥ तस्यार्थोऽकरण इति । न लि इत्यस्यावृत्तिरिति भावः ॥ ७ ॥

## वाक्यार्थमुक्तावली

ॐ नियमाच्च ॐ ३-४--७ ॥ अकरणे प्रत्यवायेन श्रुत्या कर्मणो नियतत्वाच्चास कर्मणः फलारम्भकत्वं लीलामात्रत्वमिति सूत्रार्थः । एवमित्यनूद्यार्थमाह । कर्मकरणमिति । नरे ज्ञानिन्यपीति । न रीयते न क्षीयत इति व्युत्पत्त्या नरश ज्ञानमुच्यते । तद्वानपि नर इति नरपदेन ज्ञानिलाभ इति ध्येयम् ।

## तत्त्वसुबोधिनी

एवमित्यस्यार्थः कर्मकरण इति । अज्ञस्य कर्मलिप्येत कृष्णोपास्तिमकुर्वतः ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् । अतोऽलेपेऽपि लेपः स्यादतः कार्यैव स इति नारदीयवचनमूलकमकुर्वतः कर्म न लिप्यत इति नास्तीति ईशावास्यभाष्यं म निधायाह । नान्यथेतोऽस्तीति । तृतीयपादं व्याचष्टे । अकरण इति । द्वौ नञौ प्र

## वाक्यार्थविवरणम्

न रीयते रीङ्क्षय इति धातोर्न क्षीयते पुमान् येन तत् नरं ज्ञानम् । मत्त्वर्थी आद्यजन्तमित्यभिप्रेत्य नरे ज्ञानिनीत्युक्तमित्यवधेयम् । नास्तीति । किन्तु लि एवेत्यर्थः । लेपस्त्वानन्दह्रासः इति ज्ञातव्यम् ॥

## वाक्यार्थमञ्जरी

ॐ नियमाच्च ॐ ॥ कुर्वन्नेवति श्रुतौ ज्ञानिनोऽपि कर्मणो नियमकथनात् नियमादक प्रत्यवायप्राप्तेरिति यावत् । न लीलामात्रत्वमित्यर्थः ॥ न लिप्यत इति नास्तीति ॥ लि एवेत्यर्थः । इदं नचिकेतसं प्रति यमवाक्यं न चैवं तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ ज्ञानिनः कर्माश्लेषस्य वक्ष्यमाणत्वात्तद्विरोध इति वाच्यम् । भिन्नविषयत्वात् । अत्र नर मनुष्याद्युक्तेः वक्ष्यति चैतत् स्पष्टं चतुर्थाधिकरणे ॥

## सूत्रभाष्यम्

**॥ ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ॥ ८ ॥**

**'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यते । अथापि यथा यथा कर्म कुरुते तथा तथाऽधिको भवती'ति कौण्ठरव्यश्रुतेः । युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बादरायण(स्य)मतम् ॥८॥**

## तत्त्वप्रदीपिका

अधिकोपदेशादित्यादिसूत्रम् ॥ ज्ञानादेव सर्वं ज्ञानिनः कर्मभिः स्वर्गादिष्वाधिक्यमि विशेषश्रुतेः । उक्तश्रुतीनामेवं गतिर्बादरायणमते । अन्येषां देवजातीनां स्वर्गजुषां मध युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनात् । उक्तं हि स्वर्गारोहणके–

''राजसूयजितान् लोकानश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाभाग तपसश्च फलं महदि''त्यादि ॥

(तत्त्वप्रकाशिका)

ज्ञानिनामाचारवैयर्थ्यं विध्याद्यनुपपत्तिश्चेति वाच्यम् । ज्ञानादेव जायमाने पुरुषार्थे कर्मणा शयापादकत्वेन ज्ञानशेषत्वात् । ज्ञानादेव फलप्राप्तिः कर्मणस्तु फलेऽतिशयाधायकत्वेन शेषत्व कुतः । ज्ञानादेवेति श्रुतेर्लिङ्गदर्शनाच्चेति भगवतो बादरायणस्य मतमिति भावः ॥ ८ ॥

## भावबोधः

सूत्रे "अधिकोपदेशात्" इत्यस्य ज्ञानफले स्वर्गे कर्मणाऽधिक्यं भवतीति प्रतिपा श्रुतेरित्यर्थत्वम् । "तद्दर्शनात्" इत्यस्य ज्ञानिकृतकर्मणा ज्ञानफले आधिक्यस लिङ्गस्य दर्शनादित्यर्थत्वम् । "तु"शब्दः "च"शब्दार्थः । तस्य "दर्शनाच्च" इत इत्यभिप्रेत्य प्रवृत्तम् । ज्ञानादेवेत्यादिभाष्यं व्याचष्टे– ज्ञानादेवेति ।

## भावदीपः

॥ ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ॥ ८ ॥ स्वमतमिति देवरूपोत्तमाधिकार्यपेक्षया साक्षादेव सर्वपुमर्थहेतुत्वमितीत्यर्थः । एवं तदिति सौत्रत परामर्शं दर्शयति ॥ यदुक्तमिति ॥ पुरुषार्थोऽत इत्यत्रेत्यर्थः । सौत्रपदयोरनुवाद तदेवमिति ॥ एवंपदार्थमाह ॥ तथैवेति ॥ तात्पर्यार्थमाह ॥ न त्विति ॥ श्रुतेरित्यंत पूर्वोक्तशङ्कानिवर्तकतया तात्पर्यतो व्याचष्टे ॥ न चैवमिति ॥ विध्यादीत्यादि नियमाच्चेत्युक्तनियमो ग्राह्यः ॥ फलप्राप्तिरिति ॥ स्वर्गादिसर्वफलप्राप्तिरित्यर्थ युधिष्ठिरेत्यादेरर्थो लिङ्गदर्शनाच्चेति । राजसूयादिना फलाधिक्यरूपलिंगदर्शनाच्चेत्यर्थ पूर्वस्माच्चशब्दानुवृत्तिरिति भावः । एतच्च विवृतं तत्वप्रदीपे । उक्तं च स्वर्गारोहि राजसूयार्जितांल्लोकानश्वमेधाभिवर्धितान् । प्राप्नुहि त्वं महाभाग तपसश्च महदित्यादिग्रन्थेन ॥ ८ ॥

## वाक्यार्थमुक्तावली

ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ३-४-८ ॥ तुशब्दोऽवधार तदिति बुद्ध्या विवेकेनानुवर्तते । तथा च तदेवमेवेति पर्यवसन्नम् । तस्यार्थम यदुक्तमिति । पुरुषार्थसूत्रे यदुक्तमित्यर्थः । एवकारव्यावर्त्यमुक्तं न त्वि ज्ञानशेषत्वादिति । नाचारवैयर्थ्यादिकमित्यन्वयः । एतेनाधिकेति भावप्रधानम् । ज्ञा आधिक्याय यज्ञेन यज्ञमयजन्त । ज्ञानी च कर्माणि । कुर्वन्नेवेह कर्माणीत्

सूत्रोपात्तयोः यदेव विद्यया करोति कर्मैव देहमिति श्रुत्योर्बादरायणेन गत्यर्थदर्शनस्यादि उत्तरत्र स्पुटीभविष्यति । ज्ञानादेवेति श्रुतेरिति । एतेनाधिकोपदेशादित्यस्य ज्ञान कर्मणोऽधिकस्योपदेशात् कर्मणो ज्ञानशेषत्वोपदेशादित्यर्थान्तरमुक्तं भवति । ति दर्शनाच्चेति । एतेन तुशब्दश्चशब्दार्थः सन् तद्दर्शनाच्चेत्यप्यन्वेति । ततश्च तत् तत्र ज्ञान कर्मणोऽतिशयापादकत्वेन शेषत्वमित्यस्य तादृशस्य युधिष्ठिरादिराजसूयादिफलाधिक्या लिङ्गस्य ''राजासूयार्जितान् लोकान् अश्वमेधाभिवर्धितान् । प्राप्नुहि त्वं महाभाग तप महाफलं'' इति स्वर्गारोहणपर्वणि दर्शनाच्चेत्यर्थः । ज्ञानिकर्मजातीये एकत्वं तथ तत्सामान्यादितरेषु तथात्वमिति न्यायेन सर्वत्राप्येवमित्यत्र लिङ्गमिति भावः ।

## तत्त्वसुबोधिनी

सूत्रे अधिकोपदेशादित्यस्य ज्ञानफले कर्मणा आधिक्यं भवति । तत्प्रतिपाद श्रुतेरित्यर्थत्वं तद्दर्शनादित्यत्र तच्छब्दस्य तेन तस्मिन् अस्येति अज्ञानिकृतकर्मणा ज्ञान आधिक्यरूपलिंगस्य दर्शनादित्यर्थे तुशब्दश्चब्दार्थः । तस्य दर्शनाच्चेत्यन्वयमभि प्रवृत्तम् । ज्ञानादेवेति भाष्यं व्याचष्टे । ज्ञानादेवेति ।

## वाक्यार्थविवरणम्

विध्यादीति ॥ ज्ञानी च कर्माणीत्युक्तविधीत्यर्थः । आदिपदेन नियमाच्चेत्युक्ताक प्रत्यवायग्रहणम् ॥

अनेनेति ॥ भगवन्मतमुनिमतयोरविरोधप्रतिपादनेनेत्यर्थः । यद्वा ब्रह्मदर्शनात् स्या मोक्षो नान्यस्मात्कर्मणः । इति वचनेनेत्यर्थः ॥ कर्मशेषत्वम् ॥ मोक्षविशेष इति शेषः कर्मैव मोक्षसाधनम् । ज्ञानं तु तच्छेषभूतमिति मोक्षस्य ज्ञानकर्मसमुच्चयसाधनत्वमुच्यते तथा च मोक्षे कर्मशेषत्वं ज्ञानस्योच्यत इति यज्जैमिनिमतं तस्याप्रामाण्यमुच्येत इ यत्परैरुच्यते तदप्यनेनैव निरस्तम् । ब्रह्मदर्शनान्मोक्षो नान्यस्मादिति कर्मणो मोक्षसाध त्वनिषेधात् वक्ष्यमाणरीत्या मतयोरविरोधोपपत्तेरिति भावः ॥ अनन्वयदृष्टान्त इति समभिव्याहृतेन पश्यन्निति पदेनान्वयो नास्तीत्यर्थः । तर्हि तस्य कथमन्

## वाक्यार्थमञ्जरी

ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ॥ बादरायणस्य मतमेवं
ज्ञानस्य पुरुषार्थहेतुत्वं न चैवमाचारादिवैयर्थ्यं कुतः अधिकोपदेशात्,
फलेऽधिकस्य कर्माधीनातिशस्य यथा यथेति श्रुत्युक्तत्वात्, युधिष्ठिरादेस्तद्दर्शनात्
तिशयोपलंभाच्चेत्यर्थः ॥ किं न स्यादिति ॥ फलोपकारापेक्षयास्वरूपोपकारस
स्त्वादिति भावः ॥

## सूत्रभाष्यम्

॥ ॐ तुल्यं तु दर्शनम् ॐ ॥ ९ ॥

राजसूयादिकृतावकृतौ च सममेव तेषां विज्ञानम् ।

‘विज्ञातमेतत्सर्वेषां मुनीनां ब्रह्मदर्शनात् ।
स्यादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता ॥
स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः ।
ज्ञानेनाऽऽधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन ॥
अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते ।
इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः ॥
यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम् ।
यथाऽऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा ।
प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ॥
स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् ।
अनन्ताकाशवत्पश्यन्निखिलं पुरुषोत्तमः ।
ज्ञानेनैवाऽऽप्यते सर्वं कर्मणा त्वधिकं भवेत् ।
इति प्राह महायोगी पुमर्थानां विनिर्णयमि’ति भविष्यत्पर्वणि ।

‘ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् ।
चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणी’ति ब्रह्मतर्के ॥ ९ ॥

## तत्त्वप्रदीपिका

''विज्ञातमेतदि''त्यादेरयमर्थः । जैमिन्यादीनां वेदव्यासशिष्याणां मुनीनां ब्रह्मदर्शना मोक्षो न कर्मणेत्येतद्विज्ञातम् । तथाऽपि तद्विज्ञाने नानाप्रकारत्वमस्ति ब्रह्मदर्शनमि विषयान्तरे । ''यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलमि''त्यधिकारिभेदात् । तत्र दृष्टान्तमाह– ''यथाऽऽकाश'' इत्यादि । यथाऽऽकाशः कात्स्र्न्येन गृह्यमाणोऽनन्तोऽपि प भेदापेक्षया व्यामः पुरुषप्रमाणः हस्तप्रमाण इत्याद्युच्यते सत्यवचनेनैव । तथैतेषां सत्यान्यधिकारिभेदापेक्षया । उक्तं चानुव्याख्याने–

''एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा ।
अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात् ॥
देवर्षिमानुषादीनां तत्तज्ज्ञात्यनुसारतः ।
जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन ॥
सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः ।
बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यत'' इति ॥

राजसूयादिना फलाधिक्यमित्याद्युक्तं तत्र प्रमाणमाह– ''ज्ञानिनामपि देवानामि''त्य

## तत्त्वप्रकाशिका

नन्वस्तु ज्ञानस्य पुरुषार्थहेतुत्वं कर्मणस्तु तच्छेषत्वम् । शेषत्वं च न ज्ञान शयाधायकत्वेन किंतु ज्ञानेऽतिशयाधायकत्वेन किन्न स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा तुल्यं त्विति ॥ न ज्ञानिकर्मणो ज्ञानेऽतिशयाधायकत्वं किं तु ज्ञानफल एव । कर्मकरणाकरणयोर्ज्ञानस्य तुल्यत्वात् । अन्यथा कर्मकरणे ज्ञानं पुरुषार्थसाधने समर्थमकरण मिति ज्ञाने विशेषः स्यात् । एतच्चोपपादयिष्यत इति भावः । नन्वेवं तर्हि भगवन्म जैमिनिमतस्याप्रामाण्यं प्रसज्येत । न च मुनिमतस्य तद्युक्तम् । प्रामाण्ये तु भगवन्मतस्या मित्याशङ्कां स्मृत्या परिहरति ॥ विज्ञातमिति ॥ संमतमिति यावत् । अनेनैतदपि यत्परैरुच्यते पुरुषार्थादिसूत्रैर्भगवता केवलज्ञानस्य मोक्षसाधनत्वमुच्यते शेषत्वादित्य कर्मशेषत्वं ज्ञानस्येति जैमिनिमतमुच्यत इति । तत्रापि तेषां मतेष्वपि चित्रता विष आधिक्यं कर्मफले । विचित्रतायामपि न मुनिमतानामसत्यत्वं भगवन्मतान्तर्भूत

(तत्त्वप्रकाशिका)

स्वमतत्वेन पश्यन्नपि व्यासः केनचिद्विशेषेणैवं पुरुपार्थनिर्णयं प्राहेत्यर्थः । अनन्ताका त्यनन्वयदृष्टान्तो यथाऽऽकाशो व्याप्तस्तथा ज्ञानमिति । तथा चोक्तम् । 'व्यत्यासोऽनन् प्रसिद्धो भूत एव च । सर्वसंहारिकश्चेति दृष्टान्तः पञ्चधा स्मृतः' । इति । नन्वेवं मतानां प्रामाण्योक्तावपि परस्परविरुद्धत्वात् कथं तत्स्यादित्यतो भगवन्मतं देवताविपयं जैमिन्याि तदन्यविषयमिति भावेनात्र स्मृतिमाह ॥ ज्ञानिनामिति ॥ अत एव सूत्रकृता देवता तद्विपयकर्मविध्यादेरेव गतिरुक्ता न तु 'यदेव विद्यया करोति कर्मैव देहम्' इति श्रुत योर्मानुपविषयत्वोपपत्तेः । प्रतिबन्धकयुक्तदेवताविषयत्वोपपत्तेश्च । अतो ज्ञानस्य सर्वपु साधनत्वादत्यन्तापेक्षितं तदिति सिद्धम् ॥ ९ ॥

## गुर्वर्थदीपिका

अदृष्टमेवेत्यत्र अदृष्टं स्वर्गादिकं दृष्टं पुत्रकामेष्ट्या कारीर्यादियागेन जायमानपु धनादिकमित्यर्थः । अनन्वयदृष्टान्त इत्यत्र साक्षादुक्तार्थे यस्यान्वयो नास्ति अ प्रकारान्तरेणान्वयोऽपि यस्य सोऽयमनन्वयः । प्रकृतेऽपि ''अनन्ताकाशवत्पश्य'' सूर्यवदग्निस्तपतीत्यादौ यथा सूर्यस्तपति तथाऽग्निरपि तपतीतिवदनन्ताकाशो यथा तथा व्यासोऽपि पश्यतीत्येकक्रियायामन्वयो नास्ति । अस्ति यथाऽऽकाशो व्या ज्ञानमपीति प्रकारान्तरेणान्वयोऽपि । अतः सोऽयमनन्वयदृष्टान्तः । संग्रहश्लोके वक्ष व्यत्यासस्तु केवलव्यतिरेकी । ''अधिकोपदेशात्तु बादरणयणस्यैवं तद्दर्शना''दिति ''तुल्यं तु दर्शन''मिति सूत्रे च कर्मणा ज्ञानफलेऽतिशयस्योक्तत्वेन देवताचारस्यैव कृतः न तु पूर्वसूत्रोक्तमतद्वयमिति भावेनाह अत एवेति ॥

## भावबोधः

सौत्रः ''तु'' शब्दः ''एवार्थः'' इत्यभिप्रेत्य भाष्ये सममेवेत्युक्तम् । तद्व्यावत् अन्यथेति । ज्ञाने विशेषः स्यादिति । नास्ति च ज्ञाने विशेष इति भावः । नास्तीत्यत आह– एतच्चेति । ''कामकारेण चैके'' इत्यत्रेत्यर्थः । अनेनेति । भग मुनिमतयोरविरोधप्रतिपादकस्मृतिविरोधेनेत्यर्थः ॥ नन्वाकाशस्य दर्शनाभावात् कथम काशवत् पश्यन्नित्युक्तमित्यत आह– अनन्ताकाशवदिति ॥

''जैमिन्युक्तं मनुष्याणां तद्विशेषाश्च केचन ।

(भावबोधः)

इत्यनुव्याख्यानानुसारेण स्मृत्यभिप्रायं वदन्नवतारयति– भगवन्मतमित्यादिना । जैमिन्यादिमतमिति । यद्यप्यत्र सूत्रकारेण जैमिनिमतमेवोपन्यस्तम् । तथाप्युदाहृतस्मृतौ– ''स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः'' इत्यादिनानेकमुनिमतस्योक्तत्वात् ''आदि'' पदम् । तदन्यविषयमिति । कर्मसाध्ये सर्वत्र दृष्टादृष्टरूपफले ज्ञानस्य शेषत्वमिति जैमिनिमतम् । यथोक्तं– ''कर्मैव देहं दैविकं मानुषं वा'' इत्यादि । तच्चापरोक्षज्ञान्युत्तममनुष्यविषयम् । अदृष्टमेवेत्युक्तमुनिमतं त्वैहिके ज्ञानस्योपयोगो नास्त्येव । अदृष्टफले ज्ञानस्य कर्मशेषतयोपयोगोऽस्तीत्यभिमतम् । स्वर्गादयः कर्मणैवेति मुनिमते तु स्वर्गादौ नश्वरफले ज्ञानस्योपयोगो नास्त्येवेत्यभिप्रेतम् । एतन्मतद्वयं तु मध्यमाधममनुष्यविषयम् । यथोक्तं सुधायां– मानुषा अप्युत्तममध्यमाधमभेदभिन्ना यथायोग्यं विचित्रमतिविषया भवन्त्येवेति । गतिरुक्तेति । ''अधिकोपदेशात्'' इत्यनेनेत्यर्थः ॥ ''बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते'' इत्यनुव्याख्यानं मनसि निधायाह– प्रतिबन्धकयुक्तेति । येषां देवानां ज्ञानस्य स्वर्गारम्भकत्वेऽस्ति प्रतिबन्धकं कर्मणस्तु नास्ति, तद्देवताकर्मणः स्वर्गादौ ज्ञानस्य तच्छेषत्वमित्यर्थः । उक्तं च सुधायाम्– न हि यत् ज्ञानस्य प्रतिबन्धकं कर्म तत्कर्मणोऽपीत्यस्ति नियमः । लोकेऽन्यथा दर्शनादिति । अनेन भगवन्मततदितरमतयोः प्रकारान्तरेण विषयव्यवस्था दर्शिता । अत एव सुधायां प्रकारान्तरेण मतयोर्विषयभेदं दर्शयति, ''इति बलवत्'' इत्येतदनुव्याख्यानमवतारितम् । अत्राद्ये सूत्रे– स्वमतेन श्रुत्या ज्ञानस्य सर्वपुरुषार्थसाधनत्वसमर्थनम् । द्वितीये– जैमिनिमतावलम्बेन ज्ञानस्य स्वर्गादिसाधनकर्मशेषत्वोक्तिः । तृतीये– ज्ञानस्यैवाशेषपुरुषार्थसाधनत्वे देवसंबन्ध्याचारवैयर्थ्यलक्षणबाधकोक्तिः । चतुर्थे– ज्ञानस्य कर्मशेषत्वे ''यदेव'' इति श्रुतिरूपसाधकोक्तिः। पञ्चमे ''यदेव'' इति श्रुतेर्ज्ञानस्य सर्वपुरुषार्थसाधकत्वश्रुतिसमानयोगक्षेमत्वनिरासाय कर्मणः प्राधान्ये निरवकाशप्रमाणोक्तिः । षष्ठसप्तमयोः– ज्ञानस्यैव सर्वपुरुषार्थसाधकत्वे बाधकत्वेनोक्ताचारस्य लीलात्वेनान्यथासिद्धि- निरासाय ज्ञानिनोऽपि कर्मकरणाकरणयोर्विधिप्रत्यवाययोरुक्तिः । अष्टमे– ज्ञानस्याशेषपुरुषार्थहेतुत्वे बाधकत्वेनोक्तानामाचारविधिनियमानां गतिप्रदर्शनाय स्वमतेन कर्मणो ज्ञानसाध्ये स्वर्गादावाधिक्यापादकत्वरूपज्ञानशेषत्वसमर्थनम् । नवमे– विवक्षितशेषत्वसिद्ध्यर्थं कर्मणो ज्ञानस्वरूपातिशयाधायकत्वरूपज्ञानशेषत्वनिराकरणमिति सूत्रक्रमः ॥ १ ॥

## भावदीपः

॥ ॐ तुल्यं तु दर्शनं ॐ ॥ ९ ॥ ज्ञानफले ज्ञानजन्यफल इत्यर्थः । सममे
कारव्यावर्त्यमाह ॥ न ज्ञानीति ॥ सममित्यंतभाष्यं हेतुत्वेन व्याचष्टे ॥ कर्मेति ॥ एत
तुशब्दः शंकाव्यावर्तकः । दर्शनं तुल्यमिति हेतुगर्भमिति सूचितम् । हेतोरप्रयोज
निरासाय विपक्षे बाधकमाह ॥ अन्यथेति ॥ कर्मणो ज्ञान एवातिशयाधायकत्व इत्य
यद्वा मास्तु तुल्यत्वमित्यत आह ॥ अन्यथेति ॥ तौल्याभाव इत्यर्थः । अस्त्वयं
को दोष इत्यत आह ॥ एतच्चेति ॥ सदसत्प्रवृत्त्योर्ज्ञानस्य मोक्षाख्यपुमर्थसमर्थत्वरूपत
स्तुतयेऽनुमतिर्वेति नये कामकारेणेत्यादिनोपपादयिष्यते । तथा च तद्विरोध इति भाव
अनेनेति ॥ ब्रह्मदर्शनादेव मोक्षः स्यान्नाप्यस्मादिति व्यासमतं सर्वेषां जैमिन्यादि
संमतमिति स्मृतौ कथनेनेत्यर्थः । इतीत्यस्य इत्येतदिति पूर्वेणान्वयः । तत्र
स्मार्तपदानुवादः । तेषां मतेष्वपीति व्याख्या । ज्ञानान्मोक्ष इति प्रमेय एव विचि
भ्रमनिरासायाह ॥ विषयांतर इति ॥ कर्मफल इति च शेषोक्तिः । एतच्च तच्छ्रुतेरित्यत्र
प्रमेयम् । एतेन पूर्वसूत्रेषु जैमिनिमतोक्तिरुपलक्षणमिति सूचितम् । स्वयं त्वित्या
व्यासमतोक्तेः कृत्याप्रतीतेराह ॥ ननु ज्ञानादेवेति ॥ पश्यन्नित्यस्याकाशेऽनन्वयादा
अनंतेति ॥ उक्तमिति ॥ प्रथमस्कंधतात्पर्ये उक्तमित्यर्थः । तत्रैव दशमेऽध्या
"यत्तदीशमनीशस्य प्रकृतिस्थोऽपि तद्गुणैः । न युज्यते तदात्मस्थैर्यथा बुद्धिस्तदाश्र
त्यत्र तज्ज्ञानिनामपि प्रकृतिस्थानां न तत्संगः किमु तस्येति व्यत्यासदृष्टांतः । तथा च
बृहद्भाष्ये ज्योतिर्ब्राह्मणे "सामान्यधर्मो बलवान् धर्माद्विशेषिकाद्यथा । बलवद्विशेष
सामान्यवचनात्तथे"त्युदाहृतस्मृतौ । अनन्वयदृष्टांतस्तु अयं प्रकृत एव । प्रसिद्धदृ
यथोर्णनाभिः सृजत इत्यदिः । अभूतदृष्टांतो दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ सहोदयेतामुदयाद्रिशृंङ्गे रवी
द्वावित्यादिस्मृतौ । देवविषयमतमात्रोक्तावपि तदुक्त्यैव तदन्यविषयमतमप्युक्तप्रायं म
देवविषयत्वेनोक्तं कस्य मतमित्यतो विवृण्वन्नेव स्मृतिमवतारयति ॥ भगवन्मतमिति
अत्रेति ॥ कर्मणो ज्ञानजन्यफल एवाधिक्यं न तु ज्ञान इत्युक्तव्यासमत इत्यर्थः
उक्ताधिकारिभेदेन मतभेदे सूत्रकृज्ज्ञापकमाह ॥ अत एवेति ॥ स्वमत
देवताविषयत्वादेवेत्यर्थः ॥ उक्तेति ॥ अधिकोपदेशादित्यनेनेत्यर्थः । तथैव व्याख्यातत्व
त्पूर्वमिति भावः । एतेन जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन । सामान्यं [illegible]

(भावदीपः)

चोदनाद्यविशेषादित्युक्तयुक्तिविरोधः । अन्यथा ज्ञानी च कर्माणीति कुर्वन्नेवेति श्रुत्योर्देवमात्रविषयत्वं स्यादित्यत आह ॥ प्रतिबंधकेति ॥ बलवद्विरोधिसद्भावे जैमिन द्युक्तिरिष्यत इत्यनुभाष्योक्तेरिति भावः । अन्यथा ज्ञानादेवेत्यादिवाक्यविरोधापाता भावः ॥ अत इति ॥ श्रुत्यादिबलादित्यर्थः ॥ ९ ॥ अ० १ ॥

## वाक्यार्थमुक्तावली

ॐ तुल्यं तु दर्शनम् ॐ ३-४-९ ॥ शेषत्वं त्रिविधम् । साधनस्वरूपोत्पत्त्युपयोगि प्रधानफलसम्पादनविषये सहकारितया साधन एवातिशयाधायकत्वेन, साधनेन फलेऽतिशयासाधकत्वेनेति । तत्रोत्तरभाविकर्मणः आद्यशेषत्वाभावेऽपि द्वितीयमस्तु तृतीयेनेति शङ्कते । नन्वस्त्विति । सौत्रस्तुशब्दोऽवधारणार्थ इत्यभिप्रेत्य भ सममेवेत्युक्तम् । तद्व्यावर्त्यमाह । अन्यथेति । विशेषः स्यादिति । न च विशेषोऽस्त पूरणीयम् । कुत इत्यत आह । एतच्चेति । कामकारेणेत्यत्र सत्कर्मकरणेऽकरणे विरुद्धक च ज्ञानस्य मोक्षसाधनत्वाभावस्य निराकरिष्यमाणत्वादित्यर्थः । पुरुषार्थादिसूत्रैरिति पुरुषार्थादिशब्दघटितैः पुरुषार्थोऽतः, अधिकोपदेशात्, तुल्यमिति सूत्रैरित्यर्थः । तथा किं कर्मानुप्रवेशेन ज्ञानं मोक्षसाधनं, किं वा स्वतन्त्रमेवेति संशये कर्मानुप्रवेशेनेति पू शब्दात् तमेवं विद्वानित्यादिशब्दाज्ज्ञानादेव पुरुषार्थः । किं चाधिकोपदेशाज्ज्ञानान्मोक्षा क्याख्यफलान्तरस्याप्युपदेशात् कैमुत्येन ज्ञानस्य मोक्षसाधनत्वम् । तुल्यं तु द कर्मभावेऽभावे च दर्शनं मोक्षहेतुरेवेति ज्ञानस्यैव मोक्षसाधनत्वमुच्यत इति भाव शेषत्वादित्यादिसूत्रैरिति । अत एव शेषत्वादित्यादिसूत्रैर्मोक्षसम्पादन एव ज्ञा कर्मशेषत्वमिति पूर्वपक्षतया जैमिनिमतमाशङ्क्य सूत्रद्वयेन तदप्रामाण्यमुच्यत इति यत्परै तत्सर्वेषां मुनीनां ब्रह्मदर्शनादेव मोक्षोऽन्यस्मान्न स्यादिति सम्मतमित्युक्त्या निरस्तमित्य किञ्च विद्यैव निर्धारणादित्यत्रैवास्यार्थस्य समर्थितत्वात् गतार्थं च भाक्तं वाऽना वित्त्वादिति सूत्रे लिङ्गभङ्गरूपमोक्षे न कर्मावकाश इत्युक्तत्वाच्च । अन्यार्थं तु जैमि परामर्शं जैमिनिरिति सूत्रयोश्च परमात्मज्ञानार्थं कर्मादिकं जैमिनिर्वक्तीत्युक्तत्वेन स ज्ञानस्य कर्मशेषत्वं ब्रूयात् । स्पष्टमेतत् तत्वप्रदीपिकायां सुधायां चेति । ज्ञा

(वाक्यार्थमुक्तावली)

यथाऽनन्तेति । केनचिद्विशेषेणेति । अधिकारिविशेषविवक्षयेत्यर्थः । एवमिति । इ
सर्वं पुरुषार्थजातमाप्यते । कर्मणा त्वखिलं पूर्णमतिशयवद्भवेदित्येवमर्थः ।

नन्वाकाशस्य दर्शनान्वयाभावात् कथमनन्ताकाशवत्पश्यन्नित्युक्तमित्यत आ
अनन्ताकाशवदित्यनन्वयेति । अध्याह्रियमाणेनान्वयेऽपि श्रूयमाणेनान्वयरहितोऽनन्व
प्रकृते चानन्ताकाशवद्व्याप्तेन ज्ञानेन पश्यन् विषयीकुर्वन्नित्यध्याहारो विवक्षित इति भ
तथा चोक्तं भागवततात्पर्यनिर्णये । व्यत्यासो व्यतिरेकदृष्टान्तः । यथा लक्ष्म्यादिवदस्
न भवतीश्वर इति । अनन्वयस्तु प्रकृतः । प्रसिद्धस्तु स्पष्टः । अभूतस्तु ''दिवि सूर्यस
भवेद्युगपदुत्थिता । यदि भाःसदृशी सा स्यात् भासस्तस्य महात्मन'' इति गीतोव
''गगनं गगनाकारं सागरं सागरोपमम् । रामरावणयोर्युद्धं रामरावणयोरि
सर्वगुणोपसंहारेण प्रवृत्तसर्वसांहारिक इति विवेकः । अत एव तत्वप्रदीपे तत्रापि चित्रते
ब्रह्मदर्शनमधिकृत्यैव विषयान्तरे चित्रतेति व्याख्यातम् । नन्वज्ञेनापि करणात् कथं ज्ञ
तत्स्वरूपोपकारकाङ्गत्वमिति चेत्पूर्वभाव्यश्वमेधादिकर्मापेक्षयोत्तरभाविकर्मणस्तस्यैव स्वग
कफलहेतुत्वात् अज्ञस्य स्वापेक्षितफलापादककर्मसम्पादस्यैवाशक्यत्वात् । ज्ञा
यद्यदपेक्षितं तत्सर्वापादककर्मार्जनोपपत्तेरिति ज्ञेयम् । तदुक्तं देवर्षिमानुषादीनां तत्तज्ज्ञा
सारतः । अपेक्षितफलावाप्तिरारब्धस्यानतिक्रमादिति । ज्ञानेनाधिक्यमित्याहुः जैमिन्या
केचनेत्यक्तम् । दृष्टादृष्टलक्षणे कर्मफले सर्वत्र ज्ञानेनाधिक्यमिति जैमिन्यादिमतं मध्यम
ष्योत्तमविषयम् । अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यत इत्युक्तम् । केवलज्ञानमहिम्नै
फलम्। ऐहिकं धनादिकं केवलज्ञानेन न भवति । किन्तु कर्मशेषभूतज्ञाने
मुनिमतमुत्तममनुष्योत्तमविषयम् । तदुक्तं सुधायां मनुष्या अप्युत्तमाधममध्यमभेदा
यथायोग्यं विचित्रमतविषया भवन्तीति । भावबोधे तु स्वर्गादयः कर्मणैवेत्यधमविषय
जैमिनिमतमुत्तमविषयम् । अदृष्टमेवेत्युक्तमुनिमतं त्वैहिके ज्ञानस्योपयोगो नास्त्ये
अदृष्टफले ज्ञानस्य कर्मशेषतयोपयोगोऽस्तीत्येदभिप्रायेण प्रवृत्तं मध्यमविषयमित्युक्त
यद्यप्यत्र श्रीमता सूत्रकारेण जैमिनिमतमेवोक्तम् । तथापि मतान्तरयोः तद्विभेदत्वात्स
मनुसृत्य भाष्यकारैस्तदुपन्यासः कृतः । तदुक्तम् । तद्विशेषाश्च केचनेति । वि
प्रमेयमुक्तावल्याम् । अत्राद्ये ज्ञानस्य सर्वपुरुषार्थसाधनत्वे श्रुत्युपन्यासः । द्वितीये त
शेषत्वपरत्वे सावकाशत्वचोदनम् । तृतीये शेषत्वोपपादनाय विपक्षे आचारवैय
रूपबाधकोक्तिः । चतुर्थे ज्ञानस्य कर्मशेषत्वाभावेऽपि समप्रधानभावेनाचारे आर्थिक
शङ्क्य शेषत्वे श्रुत्युपन्यासः । पञ्चमे यदेवेति शेषत्वश्रुतेर्ज्ञानस्य सर्वपुरुषार्थसाधकं

षष्ठसप्तमयोर्ज्ञानकर्मणः फलाभावात् ज्ञानस्य तच्छेषत्वं दूरनिरस्तम् । पंचमोक्तश्रुति
ज्ञानिकर्मविषये ज्ञान्याचारस्तल्लीलयेत्याशङ्क्य ज्ञानिनोऽपि कर्मकरणाकरणयोः विधि
वार्योक्तिः । अष्टमे पूर्वपक्ष्युक्तानामाचारविधिनियमानां गतिप्रदर्शनपूर्वं कर्मणो ज्ञानशेष
समर्थनम् । नवमे कर्मणः शेषत्वं च ज्ञानफलेऽतिशयाधायकत्वेनैव न तु ज्ञाने फलहेतु
शक्त्युद्बोधकत्वेन शेषत्वमिति समर्थनमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ज्ञानकर्मणः ज्ञानशेषभूतकर्मणः । सौत्रस्तुशब्द एवार्थ इत्यभिप्रेत्य सममेवेत्युक्त
तद्व्यावर्त्यंत्तमाह । अन्यथेति । ज्ञानस्यानुत्तमत्वे इत्यर्थः । ज्ञाने विशेषः स्यादिति । ना
च ज्ञाने विशेष इति भावः । कुतो नास्तीत्यत आह । एतच्चेति । कामकारेण
इत्यत्रेत्यर्थः । तत्र कामचाराणामपि मोक्षस्य प्रतिपादितत्वेन ज्ञाने विशेषसद्भावेन
मोक्षानुपपत्तेरिति भावः । अनेनेति । भगवन्मतमुनिमतयोरविरोधमतिदक्रमस्मृतिविरोधे
त्यर्थः । तत्रापीत्यस्य अर्थः तेषां मतेष्वपीति । चित्रतेत्युक्तं ज्ञानान्मोक्ष इत्यस्मिन् अ
चित्रताविपरीतप्रतीतिनिरासायाह । विषयांतर इति । मोक्षेतरविषय इत्यर्थः । ज्ञानेना
क्यमित्यत्र कुत्राधिक्यमिति न प्रतीयते अत आह । कर्मफल इति । ननु अनन्ताका
वत्पश्यन्नित्यत्र हि यथाऽकाशः सर्वं पश्यति तथाऽयमपीति वक्तव्यम् । तच्चा
आकाशस्याचेतनत्वेन प्रकृतदर्शनक्रियायां अन्वयासंभवादित्यत आह । अनन्ताकाशवदिति
अन्वयदृष्टान्तः । प्रकृतदर्शनक्रियान्वयराहित्येऽप्ययमन्वयसंज्ञक एवायं दृष्टान्तः । कथं
अयं प्रकृते योजनीय इत्यत आह । यथाऽऽकाश इति । अन्वयसंज्ञकदृष्टान्त
काप्यप्रसिद्धत्वात् कथमयुक्तमित्यत आह । तथा चोक्तमिति । यद्वा आकाश
दर्शनासंभवात् कथं अनन्ताकाशवत्पश्यन्नित्युक्तमित्यत आह । अनन्ताकाशवदिति ।

तदेव विवृणोति । यथेति । अयं भावः पूर्वोत्तरसमभिव्यवह्रीयमाणपदार्थान्वयाभावे
योदृष्टान्तः सोऽन्वयदृष्टान्तः अनन्ताकाशवदित्यस्य च व्याप्तज्ञानमहांशुमानिति पूर्वपदा
नान्वयो नास्ति तथा पश्यन्नित्युक्तिः अवदार्थेनान्वयो नास्तीत्यतोऽनन्वयदृष्टान्तोऽ
मिति। ननु अनन्वयदृष्टान्तस्याप्रसिद्धत्वात् कथं तदुक्तिरित्यतस्तत्र प्रमाणमाह । त
चोक्तमिति । ब्राह्म इति शेषः । यत्तदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः । न युज्
सदात्मस्थैः यथाबुद्धिस्तदाश्रयेति व्यत्यासदृष्टान्तः । तत्रायं भावः । उदाहृतश्लो
प्रकृतिस्थोऽपि भगवान् सदात्मस्थैः प्रकृतिगुणैः न युज्यते इत्यत्र ज्ञानिनां प्रकृतिस्थत्वेऽ

(तत्त्वसुबोधिनी)

आत्मस्थप्रकृतिगुणसंबन्धाभावात् यथा ज्ञानिनः वक्तव्यं तदाश्रयेति कथमित्यतो
ज्ञानिनः इति वक्तव्येऽपि यथा तदाश्रया बुद्धिरिति यदुच्यते तद्भगवद्विषयकज्ञानसंब
ज्ञानिनः प्रकृतिस्थत्वेऽपि प्रकृतिस्थगुणसंबन्धो यदा नास्ति तदा भगवतो नास्तीति
वक्तव्यमिति कैमुत्यसूचनार्थ इति व्यत्यासदृष्टान्तोऽयमिति अनन्ताकाशवदित्यु
त्यान्वयदृष्टान्तः । महानसादिः प्रसिद्धदृष्टान्तः । अभूतदृष्टान्तस्तु अभूतोपमा द्रष्टव
तदुदाहरणं तु प्रेक्षां क्षियन्त हरितोपलाद्रेः संध्याभ्रनीवेरुरुरुग्ममूर्ध्न इत्यादि द्रष्टव्य
सर्वसांहारिकश्च सर्वोपसंहारेण तेषामिदं दर्शनमिति ज्ञातव्यम् । जैमिन्यादिमतमिति । य
सूत्रकारेण जैमिनिमतमेवोपन्यस्तं तथापि उदाहृतस्मृतौ स्वर्गादय इत्यादिनानेक
मतस्योक्तत्वादादिपदम् । तदन्यविषयमिति । कर्मसाध्ये दृष्टादृष्टफले ज्ञानस्य कर्मशेषत्व
मतमपरोक्षज्ञानिमनुष्यविषयम् । अदृष्टमेवेत्युक्तमुनिमतस्यतु एहिकफले ज्ञानस्योप
नास्तीत्येव अदृष्टफले ज्ञानस्य कर्मशेषतया उपयोगोऽस्तीत्यभिमतम् । स्वर्गादयः कर्मणै
मुनिमतेतु स्वर्गादौ नश्वरफले ज्ञानोपयोगो नास्तीत्यभिप्रेतं एतन्मतद्वयं उत्तममध्यमा
विषयमित्यर्थः । अत एवसुधायां मानुषा अपि उत्तमाधममध्यमभेदाद्भिन्नाः यथा
विचित्रमतविषया भवन्त्येवेत्युक्तम् । ज्ञानिनामिति स्मृतौ विशेष इत्यत्र फले इति शे
कृतेवा इत्यत्र वाशब्दोऽप्यर्थः । एवं च कर्मणि चीर्णे अकृतेऽपि न ज्ञानस्य विशेष इत
अत एवेति । भगवन्मतस्य देवताविषयत्वादित्यर्थः । गतिरुक्तेति । ''अधिकोपदेशा
इत्यनेनेत्यर्थः । ''बलवद्विरोधि सद्भावे जैमिन्याद्युक्तिरिष्यते'' इत्यनुव्याख्यानासुस
भगवन्मततदितरमतानां प्रकारान्तरेण विषयभेदमाह । प्रतिबन्धकयुक्तेति । एवं चैतन्म
प्रतिबन्धकयुक्तदेवताविषयत्वात् । भगवन्मतंतु प्रतिबन्धकरहितदेवताविषयमिति भावः
अत्राद्ये सूत्रे स्वमतेन ज्ञानस्य सर्वपुरुषार्थत्वसमर्थनम् । द्वितीये जैमिनिमतावलम्बेन ज्ञा
स्वर्गादिसाधनकर्मशेषत्वोक्तिः । तृतीये देवतासंबन्धाचारवैयर्थ्यलक्षणबाधकोक्तिः । च
श्रुतिरूपसाधकोक्तिः । पञ्चमे कर्मणः प्राधान्येन निरवकाशप्रमाणोक्तिः । षष्ठसप्तम
ज्ञानिनामपि कर्मकरणाकरणयोः विधिप्रत्यवाययोरुक्तिः । अष्टमे कर्मणः ज्ञानस
स्वर्गादावाधिक्यप्रतिपादकत्वरूपशेषत्वसमर्थनम् । नवमे कर्मणो ज्ञानस्वरूपातिशयाध
कत्वरूपज्ञानशेषत्वनिराकरणमिति सूत्रक्रमः ॥

## वाक्यार्थमञ्जरी

ॐ तुल्यं तु दर्शनं ॐ ॥ कर्मकर्तावकर्तौच ज्ञानिनां दर्शनं ज्ञानं तुल्यं समं वेत्यर्थ

॥ अनेनेति ॥ भगवन्मतमुनिमतयोरविरोधप्रतिपादकस्मृतिविरोधेनेत्यर्थः । मोक्ष
वैचित्र्याभावादाह ॥ विषयान्तर इति ॥ ॥ अतः कथमिति ॥ आकाशे नागप्रवेश
निमतानां विलक्षणे व्यासमते प्रवेशायोगादिति भावः ॥ निखिलमिति ॥ तथ
नोक्तमविशेषेऽन्यमतप्रवेश उच्यते । किं तु बुद्धिस्थे सामान्यमत एवेति भाव
नन्वाकाशस्य दर्शनाभावात्कथमनन्ताकाशवत्पश्यन्नित्युक्तमित्यत आह ॥ आनन्त
शवदिति ॥ व्यत्यासः व्यतिरेकः । प्रसिद्धोन्वयः । अभूतो यथा गगनं गगनाकारमित
॥ तदन्यविषयमिति ॥ कर्मसाध्ये सर्वत्र दृष्टफले ज्ञानस्य शेषत्वमितिमतम् । अदृष्टमेवेत्
मुनिमते हि दृष्टेर्ज्ञानस्योपयोगो नास्त्येव दृष्टफलमात्रज्ञानस्य कर्मशेषतया उपयोगो
त्यभिमतम् । स्वर्गादयः कर्मणैवेत्युक्तमुनिमते तु स्वर्गादौ नश्वरफले ज्ञानस्योप
नास्त्येवेत्यभिमतम् । अत्राद्यं मनुष्योत्तमविषयं उत्तरद्वयन्तु मध्यमाधममनुष्यविषयम् । य
सुधायाम् । मानुषा अप्युत्तममध्यमाधमभेदभिन्ना यथायोग्यं विचित्रमतिविषया भवन्त्येवे
अत एव भिन्नविषयत्वादेव गतिरुक्तेति अधिकोपदेशादित्यनेनेत्यर्थः ॥ प्रतिबन्धकेति
तैरपि कर्मकृत्वैव प्रतिबन्धकस्य निरसनीयत्वादिति भावः ॥ १ ॥

## १. असार्वत्रिकाधिकरणम्

**सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारितेत्यत आह —**

**॥ ॐ असार्वत्रिकी ॐ ॥ १० ॥**

**न सर्वेषामधिकारः ॥ १० ॥**

## तत्त्वप्रदीपिका

**किमनियमेन सर्वे ज्ञानाधिकारिणः किं वा नेत्याकांक्षायां सर्वेषां निर्दुःखं सुखमाप्नुवान पुरुषार्थापेक्षित्वात्तस्य च ज्ञानैकहेतुकत्वादुक्तरीत्या स्वर्गादेरपि ज्ञानेन लभ्यत्वात्सर्वेषां ज्ञानाधि इत्यत आह– असार्वत्रिकी ॥ न सर्वेषामुच्चनीचादिभावानामुक्तसामर्थ्ये वदिष्यमाणसामर्थ्ये ज्ञानेऽधिकारः ॥**

## तत्त्वप्रकाशिका

**अत्र भगवत्प्राप्तिसाधनज्ञाने सर्वेषामधिकाराभावमहिम्नो वर्णनादस्ति शास्त्रादिसंगतिः सर्वाधिकारिकत्वेन तस्य यागाद्यतिशयः सिध्यतीत्येतद्वर्णनीयम् । प्रकृतं ज्ञानमेव विषयः । किं**

(तत्त्वप्रकाशिका)

सर्वेषामधिकारोऽस्ति न वा इति संदेहः । लोके साधनद्वैविध्यप्रतीतिः सन्देहबीजम् । पूर्वपक्ष
सर्वेषामिति ॥ सर्वेषामप्यस्ति ज्ञानेऽधिकारः । फलार्थी समर्थो विद्वान्हि साधनेऽधिक्रि
तत्रास्त्येव सर्वेषां ज्ञानफले मोक्षेऽर्थिता । निर्दुःखानन्दात्मकत्वात्तस्य । तादृशस्य च पुरुषार्थत
अस्ति च सर्वेषां श्रवणादौ सामर्थ्यं तदुपयोगिनी विद्वत्ता च । एवं च सर्वेषामधिका
निरधिकारित्वं ज्ञानस्य स्यात् । अतः सर्वेषां ज्ञानेऽधिकारित्वान्न तदतिशयवदिति भ
वक्ष्यमाणसूत्रमनुकरोति स्त्रीलिङ्गप्रयोगेण । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ श

## गुर्वर्थदीपिका

भगवत्प्राप्तिसाधनज्ञान इत्यत्र ज्ञानपदेन वेदान्तश्रवणादिजन्यापरोक्षज्ञानं गृह्य
''यावदधिकारमवस्थितिराधिकारिकाणा''मित्यधिकरणे उपासनेऽधिकारिणां निरूपि
त्तज्जन्यज्ञानेऽप्यधिकारी निरूपितप्राय एव । तस्यैव ज्ञानेऽधिकारित्वात् । अत
पुनर्विचारेणेति चेत्सत्यम् । अधिकारिपदमात्रेणाधिकारिणां कथनेऽपि तल्लक्षणस्या
तत्वेन तदर्थं पुनरारम्भस्यावश्यकत्वात् । न च वाच्यं प्रथमाधिकरणे ''भक्तिमान्परमे
यस्त्वध्ययनवान्नर'' इत्यादिनाऽधिकारिलक्षणं तद्विशेषश्च भाष्यकारेण निरूपित इ
तथापि सूत्रमर्यादया निरूपणाय पुनरारम्भ इति ज्ञेयम् । अत एव ''अध्ययनमात्र
''नाविशेषादिति चोपरी''ति तत्रैव भाष्यम् ॥

## भावबोधः

ओं असार्वत्रिकी ओं ॥ १० ॥ अधिकाराभावेति । 'अधिकोपदेशात्तु बादराय
इति ज्ञानशेषत्वेन कर्मणः सकाशाद्योऽतिशय उक्तः । स कर्मवज्ज्ञानस्यापि सर्वाधिका
न संभवतीति पूर्वाक्षेपादनन्तरसङ्गतिरिति भावः । अत एव वक्ष्यति– सर्वाधिकारि
तस्य यागाद्यतिशयः सिध्यतीति । किं तत्रेति । अत्र ज्ञानेऽधिकारः सर्वेषामस्त्युत ना
चिन्ता । तदर्थं मोक्षार्थित्वादिमात्रस्य ज्ञानाधिकारोपयोगित्वं संभवत्युत न संभवत
तदर्थमर्थित्वादिव्यतिरिक्तं ज्ञानाधिकारनियामकं नास्त्युतास्तीति ॥

ननु भाष्ये लाघवाज्ज्ञानाधिकार इत्येव वक्तव्येऽधिकारितेति किमर्थमुक्तमित्यत
वक्ष्यमाणसूत्रमिति ।

## भावदीपः

॥ ॐ असार्वत्रिकी ॐ ॥ १० ॥ ज्ञाने सर्वेषामित्यादि ॥ एतेन पूर्वत्र ज्ञानादेव

(भावदीपः)

तु ज्ञान एव तत्कामिनां सर्वेषां नाधिकार इत्युच्यत इति पूर्वसंगतिरपि सूचिता । चिंताफलमाह ॥ सर्वाधिकारिकत्व इति ॥ प्रकृतमिति ॥ पुरुषार्थोऽत इत्यत्रातःशब्देन प्रकृतमित्यर्थः ॥ लोक इति ॥ भोजनादिकं सर्वाधिकारिकम् । वाणिज्यादि-कमसर्वाधिकारिकं प्रतीयत इति भावः । भाष्ये सर्वेषामधिकारितेत्यन्वयमुपेत्याह ॥ सर्वेषामपीति ॥ अंधपंग्वादीनामर्थिनामपि कर्मादाविव एडमूकादीनां ज्ञानेऽनधिकारेण व्यभिचारितया भाष्योक्तार्थित्वमात्रस्याधिकाराप्रयोजकत्वादुपलक्षणत्वेन हेत्वंशं व्यनक्ति ॥ फलार्थीत्यादिना ॥ सामर्थ्यवैदुष्यवत्त्वे सति तज्जन्यफलार्थित्वादिति हेतोः पक्षधर्मतामुप-पाद्याप्रयोजकत्वं निराह ॥ एवं चेति ॥ अधिकारप्रयोजके सत्यपीत्यर्थः । इतोऽन्य-स्याधिकारप्रयोजकस्याभावादिति भावः । फलोक्त्या भाष्यार्थमुपसंहरति ॥ अत इति ॥ अर्थित्वादेरधिकारप्रयोजकस्य भावादित्यर्थः । उत्तरभाष्य इवात्रापि भाष्ये अधिकार इति वाच्ये अधिकारितेत्युक्तेः कृत्यमाह ॥ वक्ष्यमाणेति ॥ एतेन कस्याधिकार इत्युत्तर-भाष्यस्थषष्ठ्यप्युक्तप्रयोजनेति ध्येयम् ॥ १० ॥

## वाक्यार्थमुक्तावली

ॐ असार्वत्रिकी ॐ ३-४-१० ॥ यदि सर्वपुरुषार्थसाधनत्वं ज्ञानस्य तर्हि सर्वेषां पुरुषार्थापेक्षितत्वात् ज्ञाने सर्वेऽप्यधिकारिणः स्युरिति पूर्वोक्तमुपजीव्य पूर्वपक्षोत्थानाद-नन्तरसङ्गतिः । तत्रेति । ज्ञाने सर्वेषामधिकारोऽस्ति न वेति चिन्ता । तदर्थं किमर्थित्वादिकमेवाधिकारप्रयोजकमुतान्यदिति । औदार्यमित्युक्तपूर्वपक्षन्यायमेवार्थित्व-सामर्थ्यविद्वत्वरूपोदाहरणगुणवत्वमित्यर्थतयैतदधिकरणेऽपि प्रदर्शयत्पूर्वपक्षभाष्यं व्याचष्टे । सर्वेषामपीति । भाष्ये पुरुषार्थापेक्षितत्वादित्येतदुपलक्षणं मत्वाऽऽह । अस्ति चेत्यादिना । एवं चेति । एवमप्यधिकारोपयुक्तसद्भावेऽपीत्यर्थः । अनुकरोतीति । ज्ञानाधिकारिता न सार्वत्रिकी इत्यन्वयलाभायेति भावः । एवं सति न सर्वेषामिति भाष्यं स्वपदवर्णनपरतया पर्यवस्यतीति ज्ञेयम् ।

## तत्त्वसुबोधिनी

ॐ असार्वत्रिकी ॐ अधिकाराभावेति । अधिकोपदेशात्तु बादरायणस्येति ज्ञानस्य कर्मशेषित्वे कर्मणः सकाशात् ज्ञानस्य यः विशेषः उक्तः सःकर्मवत् ज्ञानस्यापि सर्वाधिकारिकत्वे न संभवतीति पूर्वाक्षेपादनन्तरसंगतिरिति भावः । अधिकारप्रयोजकाभावात् अधिकाराभाव इत्यतः तत्प्रयोजकार्थित्वादेः सद्भावात् युक्तोऽधिकार इत्यत आह ।

(तत्त्वसुबोधिनी)

निर्दुःखेति । निर्दुःखानन्दात्मकत्वस्येत्यर्थः । ननु अधिकारप्रयोजकार्थित्वादेः सत्वेऽपि कथं न सर्वेषामधिकार इत्यत आह । एवं चेति । ननु भाष्ये ला ज्ञानाधिकार इत्येव वक्तव्ये अधिकारितेति किमर्थमुक्तमित्यत आह । वक्ष्यमाणेति ।

## वाक्यार्थमञ्जरी

सर्वेषु विशेषत्रयं क्रमेणोपपादयति ॥ तत्रेत्यादिना ॥ पुरुषार्थत्वात्, पुरुषैरर्थ्यत्वात् च एवमपि । ननु भाष्ये लाघवायाधिकार इति वक्तव्ये अधिकारितेति किमर्थमुक्तमि आह ॥ वक्ष्यमाणेति ॥ ॐ असार्वत्रिकी ॐ ॥ ज्ञानाधिकारिता असार्वत्रिकी सर्वजननिष्ठेत्यर्थः ॥

## सूत्रभाष्यम्

॥ ॐ विभागश्शतवत् ॐ ॥ ११ ॥

'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।
सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ॥
यथा तथैवासङ्ख्येयाः प्रजास्तासु कियाञ्जनः ।
ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसंश्रयः'

इति वचनात्सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥ ११ ॥

## तत्त्वप्रदीपिका

विभागः शतवत् ॥ यथा नवकोटीनां देवानां मध्ये शतमेव सोमाधिकारिणः, प्रधान (१) वसु (८) रुद्र (११) मरु (४९) दादित्यादयो (१२) विश्वेदेवाः (१०) बृहस्पतिः पितृपतयः (३) अश्विनौ (२) ऋभवो (१) द्यावापृथिव्यन्ता (२) । द्वे ब्रह्मणी परावरे । विष्ण्वाख्यमवरं चतुर्मुखम् । एवमनन्तानां जीवानां मध्ये कियन्त एव ज्ञानाधिकारिणः ॥

## तत्त्वप्रकाशिका

नन्वर्थित्वादेः सर्वेषामपि सद्भावात्कथं नाधिकारितेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याच विभाग इति ॥ यथा खलु देवत्वसाम्येऽपि नवकोटीनां न साधारण्येन सोमाधिकारः कि परापरब्रह्मद्वयाधिकशतस्येति विभाग एव । तथा सर्वेषां पुरुषार्थापेक्षासाम्येऽपि न ज्ञानाधिकारः

## भावदीपः

॥ ॐ विभागः शतवत् ॐ ॥ ११ ॥ भाष्यं स्पष्टार्थमित्यव्याख्याय
हेतोरप्रयोजकत्वोक्तिपरतयोत्तरसूत्रमवतारयति ॥ नन्विति ॥ सुखेत्यादिभाष्यं
दृष्टांतोक्तेरुपलक्षणं मत्त्वा व्याचष्टे ॥ यथेति ॥ परापरब्रह्मेति ॥ विष्णुविरिंचेत्यर्थ
शतेत्युपलक्षणमिति भावः ॥ शतस्येति ॥ प्रधानवायुः (१) वसवः (८) रुद्राः
मरुतः (४९) आदित्याः उरुक्रमसहिताः (१२) विश्वेदेवाः (१०) बृहस्पति
पितृपाः (३) अश्विनौ (२) ऋभुगणः (१) द्यावापृथिव्यौ (२) इति । प्र
वसुरुद्रमरुदादित्या विश्वेदेवा बृहस्पतिः पितृपतयः अश्विनावृभवो द्यावापृ
तत्वप्रदीपोक्ताः । हेतोः को दोष उक्त इत्यतः सौत्रवतिप्रत्ययसूचितप्रतिबंदीमुखे
यदीति ॥ ११ ॥

## वाक्यार्थमुक्तावली

ॐ विभागः शतवत् ॐ ३-४-११ ॥ नवकोटिदेवानां मध्ये सोमार्थं द्व्यधिक
सर्वेषामर्थित्वादिसाम्येऽपि ज्ञानाधिकारार्थं पुरुषेषु विभागोऽङ्गीकार्य इति सोपस्करं
स्पष्टयति । यथा खल्वित्यादिना । अनेन व्यवस्थेत्युक्तपूर्वाधिकरणसिद्धान्तन्याय
पीति सूत्रारूढो दर्शितो भवति । सोमाधिकारिशतदेवाश्च तत्वप्रदीपे यथा नवको
मध्ये शतमेव सोमाधिकारिणः प्रधानवायुवसुरुद्रमरुदादित्याः विश्वेदेवा बृहस्पतिः
अश्विनावृषभो द्यावापृथिव्यन्ताः। द्वे ब्रह्मणी परापरे । परं विष्ण्वाख्यम् ।
चतुमुखाख्यमिति निरूपिताः ।

## तत्त्वसुबोधिनी

परापरब्रह्मद्वयाधिकशतस्येति । प्रधानवायुवसुरुद्रादित्या मरुदादयो विश्वेदेवाः बृ
पितृपतयोऽश्विनावृभवो द्यावापृथिव्यंताः परंब्रह्मविष्णाख्यम् अपरं चतुर्मुख
परापरब्रह्मद्वयाधिकशतस्येत्यर्थः ।

## वाक्यार्थविवरणम्

परापरेति ॥ परं ब्रह्म नारायणाख्यं अपरं ...

### ३-४-२ असार्वत्रिकाधिकरणम्

## वाक्यार्थमञ्जरी

ॐ विभागश्शतवत् ॐ ॥ ज्ञानाधिकारः केषाञ्चिदस्ति केषाञ्चिन्नास्तीति विभागः व्य
स्था शतवत् यथा व्यधिकशतदेवानां सोमपानाधिकारो नान्येषामिति व्यवस्था तथेत्यर्थ

## सूत्रभाष्यम्

कस्याधिकारः ?

॥ ॐ अध्ययनमात्रवतः ॐ ॥ १२ ॥

'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।
ब्रह्मज्ञाने तु वेदोक्तेऽप्य(ह्य)धिकारी सतां मत' इति ब्रह्मतर्के ॥

'पठेद्वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देदि'ति(च)कौपारवश्रुतिः ॥१२

॥ इति अधिकाराधिकरणम् (पा. असार्वत्रिकाधिकरणम्) ॥ २ ॥

## तत्त्वप्रदीपिका

अथ के तेऽधिकारिण इत्याकांक्षायामह– अध्ययनमात्रवत इत्युक्तेरेव अधिकारिलक्ष कृत्स्नमर्थत उक्तं भवतीत्येतद्वेदनार्थं प्रमाणवाक्यमाह– ''अवैष्णवस्य वेदेऽपि ह्यधिकारो विद्यत'' इत्यादि । अवैष्णवादीनामध्ययनेऽपि तत्फलानुत्पत्तेः सफलाध्ययनवत इत्यथः । म शब्दस्य कार्त्स्न्येऽवधारणे च वृत्तेः साङ्गसर्ववेदाध्ययनवत इति चार्थः । अशक्तौ च यथासम्भ वेदाध्ययनवत इति भवति ॥

## तत्त्वप्रकाशिका

यद्यर्थित्वादिसाम्येऽपि न सर्वेपामधिकारस्तर्हि कस्याप्यसौ न स्यात् । यदि केषाञ्चिदि तर्ह्यर्थित्वाद्यतिरिक्तं विशेषणं वक्तव्यम् । न च

(तत्त्वप्रकाशिका)

अवैष्णावस्येति ॥ यस्मादध्ययने भगवद्भक्त्यादिमतामेवाधिकारो नान्येषां तस्मादध्यय
ब्रह्मज्ञानेऽधिकारीति युक्तम् । विभागभङ्गाभावादिति भावः । अध्ययनवतो वैदिके ब्रह्मज्ञ
कार इति स्मृत्या सिद्धम् । तत्र श्रुतिं चाह ॥ पठेदिति ॥ अतो ज्ञाने सर्वेषाम
भावादतिशयितं तदिति सिद्धम् ॥१२॥

## भावबोधः

अर्थित्वादिव्यतिरिक्तं किमधिकारप्रयोजकमिति वक्तव्ये कस्येति कथमुक्तमित्यत
अर्थित्वाद्यतिरिक्तेनेति । सौत्र''मात्र''शब्दः चतुर्मुखव्यतिरिक्ते अव्याप्तिपरिहाराय
शक्तीति वक्तव्यमित्यभिप्रेत्याह– यथाशत्यखिलेति । ''अर्थसिद्धं'' इति स्मृतौ
मित्येवोक्तं; न तु वेदोक्तम् । ब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भ
अत्राद्ये– सर्वेषामधिकाराभावप्रतिज्ञा । द्वितीये– तत्र निमित्तत्वेनोक्तार्थित्वादेरप्र
त्वोक्तिः । तृतीये– तदुपपादनायार्थित्वादिव्यतिरिक्ताधिकारप्रयोजकाभिधानमिति सू

## भावदीपः

॥ ॐ अध्ययनमात्रवतः ॐ ॥ १२ ॥ पूर्वं स्वोक्तनिरधिकारिकत्वापत्तिदोषं भा
कुर्वन्नवतार्य व्याचष्टे ॥ यद्यर्थित्वादीति ॥ प्रागुक्तशंकां निराह ॥ नार्थित्वादेरिति
हेतुत्वेन सूत्रार्थं तस्मादित्यादिस्मृतिशेषोक्तमाह ॥ यथाशक्तीति ॥ सलिलवच्चे
न्यायादिति भावः । मात्रपदं कात्स्न्र्यपरं मत्त्वोक्तमखिलेति । तस्मादि
स्मृतेरुपयोगाप्रतीतेराह ॥ यदीति ॥ सूत्राक्षरार्थमनुवदति ॥ अध्ययनेति ॥ भाष्ये इति
चशब्दादाह ॥ स्मृत्या सिद्धं श्रुतिं चाहेति ॥ अध्ययनान्वित इत्यादिस्मृतिशेषेणैव
सिद्धत्वेऽप्यध्ययनस्यातिप्रसक्तिनिरासकतया पूर्वांशस्योपयोगसूचनाय स्मृत्या सिद्ध
क्तम् ॥ अत इति ॥ अध्ययनवत्त्वे सत्यर्थित्वादेरेव प्रयोजकत्वात्तस्य चासार्वत्रिकत
त्यर्थः ॥ १२ ॥ अ०२ ॥

## वाक्यार्थमुक्तावली

ॐ अध्ययनमात्रवतः ॐ ३-४-१२ ॥ अर्थित्वाद्यतिरिक्तेति । अर्थित्व
अनधिकारिसाधारण्यात् अनधिकारिव्यावर्तकमधिकारिविशेषणं वक्तव्यमित्यर्थः । केचे

(वाक्यार्थमुक्तावली)

विष्णाविति जिज्ञासाधिकरणभाष्यविरोधः । अत्र चाध्ययनेनैव विष्णुभक्तिः वक्ष्यमाण
लभ्यते । अत एव तत्वप्रदीपे । अध्ययनमात्रवत इत्युक्तेरेवाधिकारिलक्षणं कृत्स्नमर्थत
भवतीत्येतद्वेदनार्थं प्रमाणवाक्यमाह । वैष्णवस्येति । इत्यवतारितमिति । अर्थतो ला
मुखतोऽलाभेनाध्ययनपदेन गुरूक्त्यनुक्तिमात्रग्रहणेऽवधारणार्थकमात्रशब्दस्य प्रागुक्तवि
तादवस्थ्यात् । अत एवोक्तं जिज्ञासाधिकरणटीकायाम् । अध्ययनलब्धापि विष्णुभ
रन्यस्याध्ययननिवृत्त्यर्थं पृथगुक्तेति । किञ्च मात्रशब्दस्यान्ययोगव्यवच्छेदकत्वेऽर्थित्वा
व्यावर्तितत्वान्मुक्तानामपि व्यावर्तितत्वान्मुक्तानामपि वेदाधिकारित्वं स्यात् । अ
नायोगव्यवच्छेदकत्वे ''यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेदि''त्युक्तरीत्य
कारिप्रयोजकयथाशक्त्यखिलवेदाध्ययनस्य लाभ इत्यतो मात्रशब्दस्य कात्स्न्र्यपरत्वं स्वी
सर्वेषां कृत्स्नाध्ययनाभावादव्याप्तिपरिहाराय यथाशक्तीति विशेषणं च स्वीकृत्य अ
इत्यनुवृत्तिं चाभिप्रेत्य सूत्रार्थमाह । यथाशक्तीति । भक्त्यादिमतामेवाधिकार इ
नन्वभक्तस्यानधिकारित्वे चतुर्मुखस्य विरोचनाध्यापने कथं प्रवृत्तिरिति चेन्न । अभक्तत
तस्यानधिकारितया विफलमिति ज्ञापनायाध्यापनोपपत्तेः। स्मृत्यर्थसिद्धमिति । अवैष्णव
स्मृत्या सिद्धम् । अर्थादन्यथानुपपत्त्या ''प्रजास्तासु कियान् जनः ज्ञानाधिकारी सम्प्रो
इति प्रमितविभागान्यथानुपपत्त्या सिद्धमित्यर्थः । यद्वा सतां मत इत्यत्राध्ययनवति स
यदर्थात्सिद्धमध्ययनं कर्तव्यमिति तत्र स्मृतिमाहेत्यर्थः । यद्वा स्मृतौ सतां मत इत्येवोक
न च वेदोक्तब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावेन स्मृत्यर्थपर्यालो
कर्तव्यत्वेन सिद्धमित्यर्थः । अत्राद्ये सर्वेषां ज्ञानाधिकाराभावं प्रतिज्ञाय परोक्ताधि
प्रयोजकस्य द्वितीयेऽप्रयोजकत्वमुक्त्वा तृतीये भक्तिपूर्वाध्ययनस्य प्रयोजकत्वोकि
सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अर्थित्वादिव्यतिरिक्तं किमधिकारप्रयोजकमिति वक्तव्ये कस्येति कथमुक्तमित्यत अ
अर्थित्वाद्यतिरिक्तेनेति । सौत्रमात्रशब्दः कात्स्न्र्यपरः ततश्च सांगसर्वदेदाध्ययनवत
सूत्रार्थः ॥ चतुर्मुखव्यतिरिक्तेऽव्याप्तिपरिहाराय यथाशक्तीति वक्तव्यमित्यभिप्रेत्या
यथाशक्त्याखिलेति । यस्मादित्यादि । अनेनावैष्णवानामध्ययनेऽपि तत्फलानु
सफलाध्ययनवतः इति वार्थ इत्युक्तं भवति ॥ उक्तविभागभङ्गः । भगवद्भक्तिमतामेवा
इत्युक्तविभागभङ्गः । अर्थस्मृत्यासिद्धमिति । स्मृतौ सतां मत इत्येवोक्तं न तु वेदोत्त

द्वितीये अर्थित्वादेरप्रयोजकत्वोक्तिः तृतीये च अर्थित्वादिव्यतिरिक्ताधिकारप्र
धानमिति सूत्रक्रमः ॥ २ ॥

## वाक्यार्थमञ्जरी

ॐ अध्ययनमात्रवतः ॐ ॥ मात्रशब्दः कात्स्न्र्ये कात्स्न्र्याध्ययनवतोऽधिका
अर्थसिद्धमिति ॥ तत्र सतां मत इत्येवोक्तं न तु वेदोब्रह्मज्ञानार्थमध्ययनं
विधिरस्तीति भावः ॥ २ ॥

## ३. अविशेषाधिकरणम्

॥ ॐ नाविशेषात् ॐ ॥ १३ ॥

न सामान्येनाधिकारो देवादीनाम् ।

'अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् ।
तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरमि'ति कौण्डिन्यश्रुतिः

॥ इति अधिकारविशेषाधिकरणम् (अविशेषाधिकरणम्) ॥ ३ ॥

## तत्त्वप्रदीपिका

अधिकारितारतम्यस्पष्टीकारि सूत्रमवतारयति– नाविशेषात् ॥ न सामान्येनाधिकारो
मृषिगन्धर्वाणां मनुष्याणां च, न च देवानामपि सामान्येनाधिकारः, नाप्यृष्यादीनां नापि
णाम् । अर्थो धर्मो ज्ञानमित्युत्तरोत्तरत पुमर्थानां कामस्वर्गापवर्गाणां साधनानि । साधनं
त्तरमधिकमित्यर्थः । तेषु त्रिष्वप्यधिकारिणो मनुष्यऋष्यादिदेवा उत्तरोत्तरं प्रत्येकं प्रत्येकं चे

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानाधिकारस्य संपूर्णस्य दौर्लभ्यलक्षणज्ञानमहिम्नो वर्ण
शास्त्रादिसंगतिः । सौलभ्येऽतिशयाभावप्रसङ्गादेतत्समर्थनीयम् । प्रकृतो ज्ञानाधिकारो विषय
सर्वेषां देवादीनामेकप्रकारेणाथ नानाप्रकारेणेति सन्देहः । लौकिकसाधनेषूभयथा दर्शनं
बीजम् । सर्वेषामविशेषेण ज्ञानाधिकार इति पूर्वः पक्षः । अधिकारतारतम्यकल्पनस्य व्यर्थत
न च वाच्यं प्रज्ञान्तरपृथक्त्ववद्दृष्टिरिति ज्ञाने तारतम्यस्योक्तत्वात्तदधिकारेऽपि तारतम्य
अधिकारे विशेषाभावेऽपि ज्ञानतारतम्यस्याधिकारिणामुच्चावचशक्त्यैव संभवात् । अतः
ज्ञानाधिकारसाम्येन सर्वसौलभ्यात्पूर्णाधिकारस्य न ज्ञानमतिशयितमिति । सिद्धान्तयत्सूत्रं प

(तत्त्वप्रकाशिका)

व्याचष्टे ॥ नेति ॥ न देवाद्यधिकारिणां साम्येन ज्ञानाधिकारः । तथात्वे ज्ञानेऽपि साम्यप्रसङ्ग तस्याधिकारानुसारित्वात् । न चाधिकारसाम्येऽपि शक्तितारतम्येन ज्ञानतारतम्यमिति युक्त अधिकारसाम्ये शक्तितारतम्यस्यैवायोगात् । अधिकारतारतम्यमन्तरेण तत्कारणाभावा भावः । ज्ञानाधिकारतारतम्ये श्रुतिं चाह ॥ अथेति ॥ पुमर्थो मोक्षः । अर्थस्य धर्मज्ञान मोक्षसाधनत्वं धर्मस्य ज्ञानद्वारा ज्ञानस्य साक्षादिति । अतः संपूर्णज्ञानाधिकारस्य सर्वसु त्वाभावात्सातिशयं ज्ञानमिति सिद्धम् ॥ १३ ॥

## भावबोधः

ओं नाविशेषात् ओं ॥ संपूर्णस्येति । उत्तमस्येत्यर्थः । पूर्वं सासान्यतोऽधिकारस्य विचार्येदानीं तद्विशेषविचारादनन्तरसङ्गतिरिति भावः । किं सर्वेषामिति । अत्र ब्रह्म देवादीनां सर्वेषामेकप्रकारेणाधिकार उतानेकप्रकारेणेति चिन्ता । तदर्थं ''प्रज्ञा पृथक्त्ववद्दृष्टिः'' इत्युक्तापरोक्षज्ञानतारतम्यमधिकारतारतम्यं विना संभवत्युत संभवतीति। तदर्थं साधकानामुच्चावचशक्तिरधिकारानुसारिणी न भवत्युत भवती तदर्थमधिकारतारतम्ये प्रमाणं नास्त्युतास्तीति । न सामान्येनाधिकारो देवादीना भाष्यानुरोधेन पूर्वपक्षमाह– सर्वेषामविशेषेणेति । अधिकारे समेऽपि तेषामेवोच्चा शक्तियोगात् फलभेदोपपत्तेः अधिकारिविशेषकल्पनं व्यर्थमिति न्यायविवरणं संयोजय अधिकारतारतम्येति । भक्त्याद्यधिकारतारतम्यानुसारेण शास्त्रात् फलप्राप्तेः सर्वे विशेषादिति न्यायविवरणं तात्पर्यतो व्याचष्टे– तथात्व इति । उच्चावचशक्तेरपि तन्नि नत्वादिति न्यायविवरणं पूर्वपक्षहेत्वसिद्धिप्रतिपादकत्वेन व्याचष्टे– अधिकारसाम्य इ श्रुतिं चाहेति । अनेन दृश्यमानत्वाच्च भक्त्याद्यधिकारतारतम्यस्येति न्याविवरणमप्यु भवति । श्रौतस्य ''ज्ञानमित्युत्तरोत्तरं'' इत्यस्याभिप्रायमाह– अर्थस्येति । ''यावदधि मवस्थितिराधिकारिकाणां'' इत्यत्र ''वृद्धिह्रासं'' इत्यत्रोक्तस्य मोक्षगततारत प्रयत्नादिनान्यथासिद्धिशङ्कानिससाय उपासनायां अधिकारतारतम्यसमर्थनम् । अत्र ''प्रज्ञान्तरपृथक्त्ववद्दृष्टिः'' इत्युक्तापरोक्षज्ञानरूपफलतारतम्यस्य प्रयत्नादिनान्यथासि शङ्कानिरासाय ज्ञानाधिकारतारतम्यसमर्थनमिति महान् भेदः ॥ ३ ॥

## भावदीपः

॥ ॐ नाविशेषात् ॐ ॥ १३ ॥ संपूर्णस्येति ॥ पुष्कलस्येत्यर्थः । अधिकारे

पूर्वोक्तसामान्यस्यात्र विशेषचिंतनाद्वा यथाशक्त्यखिलवेदाध्ययनवतोऽधिकारित्वोक्तौ
तत्तदीयोच्चावचशक्त्यैव फलभेदसिद्धौ किमधिकारभेदकल्पनयेति शंकनाद्वा पूर्वसंग
सूचिता । सामान्येनाधिकारो देवादीनामिति भाष्योक्तमाह ।। सर्वेषामिति ।। अधि
णामित्यर्थः । सामान्येनेत्यस्य व्याख्येयसौत्रपदानुकारोऽविशेषेणेति । अधिकारविशेष
व्यर्थमित्यन्यत्रोक्तं हेतुत्वेन योजयति ।। अधिकारेति ।। अधिकारे समेऽपि तेषामे
वचशक्तियोगात्फलभेदोपपत्तेरिति न्यायविवरणांशं गतार्थताशंकानिवर्तकतया योजयति
चेति ।। प्रज्ञांतरपृथक्त्ववदुपासनातारतम्यवत् दृष्टिश्च पृथङ्नानाप्रकारेत्युपासनापा
द्वात्रिंशन्नये उक्तत्वादित्यर्थः । यद्यपि तत्र साधनतारतम्येनैव दृष्टितारतम्यमुक्तं त
तस्याप्यधिकारतारतम्यमूलकत्वात्तदधिकारेऽपि तारतम्यमित्युक्तम् । ज्ञानेत्युपलक्षण
मुक्तितारतम्यस्येत्यपि ध्येयम् । तेन यावदधिकारमवस्थितिरित्यत्र मुक्तितारतम्यान्यथ
पत्त्या प्राचीनाधिकारतारतम्यं सिद्धमिति तदप्याक्षिप्तं ध्येयम् । अत एव न्यायवि
फलभेदानुपपत्तेरिति सामान्योक्तिः ।। उच्चावचेति ।। महदल्पेत्यर्थः । ।। अत इ
शक्तिभेदेनैव फलभेदोपपत्त्या अधिकारि विशेषकल्पनस्य व्यर्थत्वादित्यर्थः । सर्वेषामध्य
वतामित्यर्थः ।। छ ।। भाष्यं व्याचष्टे ।। न देवेति ।। सौत्राविशेषपदार्थः साम्येनै
अविशेषप्रसंगादित्यर्थांतरं चोपेत्याह ।। साम्यप्रसंगादिति ।। तस्येति ।। ज्ञा
साम्यस्येत्यर्थः । तच्च नेत्युक्तम् । प्रज्ञांतरेत्यत्रेति भावः । प्रागुक्तशंकामनूद्योच्चावचशक्
तन्निबंधनत्वादित्यन्यत्रोक्तयुक्तिविवरणेन निराह ।। न चेति ।। न केवलं ज्ञाने
विशेषप्रसंगरूपयुक्तिरिति चार्थः । उत्तरोत्तरमित्यस्यार्थोऽर्थस्येत्यादि ।। अत इति
अधिकारिभेदस्य युक्तिश्रुतिसिद्धत्वादित्यर्थः ।। १३ ।। अ० ३ ।।

## वाक्यार्थमुक्तावली

ॐ नाविशेषात् ॐ ३-४-१३ ।। सम्पूर्णस्येति । पूर्वं ब्रह्मज्ञानाधिकारो न स
किन्तु वैष्णवानामेवेत्युक्तमधुना वैष्णवेष्वपि सम्पूर्णज्ञानाधिकारस्य सार्वत्रिकत्वनिरा
दनन्तरसङ्गतिरिति भावः । किं सर्वेषामिति । अत्र ब्रह्मज्ञाने देवादीनां सर्वेषाम
प्रकाराधिकार उतानेकप्रकार इति चिन्ता । तदर्थमधिकारतारतम्यं निष्प्रयोजन
सफलमिति । तदर्थं फलत्वेनाभिमतं ज्ञानतारतम्यं शक्तितारतम्येनैवान्यथासिद्धमुत नेति

(वाक्यार्थमुक्तावली)

न्यायोनोपपादयति । अधिकारेति । सूत्रे देवादीनां ज्ञानाधिकार इत्यध्याहारः । चाविशेषादविशेषेण साम्येनैकप्रकारतया देवादीनां न ज्ञानाधिकार इत्यर्थपरं न साम्ये भाष्यं व्याचष्टे । न देवादीनामिति । कुतो नेत्यतः अविशेषादित्युक्तसिद्ध न्यायप्रदर्शकस्याविशेषादित्यस्य ज्ञानेऽविशेषप्रसङ्गादित्यर्थान्तरं भाष्येऽपि साम्येनैत साम्यप्रसङ्गेनेत्यर्थं मत्वा व्याचष्टे । तथात्व इति । अधिकारज्ञानयोरविशेषेण साम्येनै प्रकारत्वेनेत्यर्थं मत्वा व्याचष्टे । तस्याधिकारानुसारित्वादिति । अधिकारसाम्ये शक्तित म्यस्यैवायोगादिति । एतेनाधिकारशक्त्योरविशेषेण साम्येनैकप्रकारत्वेनेत्यर्थान्तरमुक्तं भव अर्थो धर्मो ज्ञानमित्येतान्युत्तरोत्तरं द्वारद्वारिभावेन पुमर्थसाधनानि । तत्र तेषु मनुष्या ऋ देवा उत्तमोत्तमाधिकारिण इति श्रुत्यर्थमभिप्रेत्याह । पुमर्थो मोक्ष इत्यादिना ।

ननु भक्तिवैराग्यादिरूपस्य ज्ञानाधिकारस्य तारतम्यसमर्थनं गतार्थम् । भक्ति वृद्धिह्रासभाक्त्वमित्यत्र फलतारतम्येन भक्त्याद्यधिकारतारतम्यस्य समर्थितत्वात् उपासनापादे यावदधिकारमित्यत्र च वृद्धिह्रासभाक्त्वमित्यत्रोक्तस्य फलतारतम्यस्य कारतारतम्यं विहाय प्रयत्नतारतम्येनान्यथासिद्धेर्निरस्तत्वाच्चेति चेन्न । तत्र मुक्त्या फलतारतम्यस्योपासनादिप्रयत्नतारतम्येनान्यथासिद्धिशङ्कानिरासायोपासनायामधिकार तम्यसमर्थनम् । इह तु प्रज्ञान्तरपृथक्त्वमित्युक्तापरोक्षज्ञानरूपफलतारतम्यस्य प्रयत्नादि न्यथासिद्धिशङ्कानिरासाय ज्ञानाधिकारतारतम्यसमर्थनमिति भेदात् । तदुक्तं न्यायविवर भक्त्याद्यधिकारानुसारेण शास्त्रफलप्राप्तेरिति ।

## तत्त्वसुबोधिनी

ॐ नाविशेषात् ॐ । संपूर्णस्येति । उत्तमस्येत्यर्थः । पूर्वं सामान्यतोऽधिकारस विचार्य इदानीं तद्विशेषविचारादनन्तरसंगतिरिति भावः । ज्ञानतारतम्यस्यान्यथासिद्ध न्नाधिकारतारतम्यकल्पकत्वमित्याह । अधिकारेति । श्रौतस्य प्रथमस्योत्तरोत्तर स्याभिप्रायमाह । अर्थस्येति । तत्राधिकारिण इत्यादेरयमर्थः । तत्र मोक्षसाध मनुष्याः, ऋषयः, देवाः, अधिकारिणः ते च पूर्वपूर्वापेक्षया उत्तरोत्तरं विशिष्टा एव समाना इति ॥ एतच्च ज्ञानाधिकारतारतम्ये श्रुतिं चाहेत्यवतारिकाग्रंथेनैव व्याख प्रायत्वान्न तत्र टीककृता पृथक्व्याख्यातम् । तत्वप्रदीपे तु साम्येनाधिकारो ऋषिगन्धर्वाणां मनुष्याणां च न च देवानामपि सामान्येनाधिकारः नापि ऋष्यादीनां

(तत्त्वसुबोधिनी)

चोत्तरोत्तरमधिकम् । एतेषु अधिकारिणो मनुष्यादिदेवाः उत्तरोत्तरं प्रत्येकं प्रत्येकं चेत्यथ इति प्रकारान्तरेण व्याख्यातमिति ज्ञातव्यम् । यावदधिकारमित्यत्र वृद्धिह्रासमित्यत्रोक्तस मोक्षगततारतम्यस्य प्रयत्नादिनाऽन्यथासिद्धिशङ्कापरिहाराय उपासनायामधिकारतम्यसमर्थन मिति महान् भेदः ।

## वाक्यार्थविवरणम्

लौकिकसाधनेष्विति ॥ कृषीवलानां धान्यसाधनीभूतकर्षणादिसाधनानामेकप्रकार दृष्टम् । धनप्राप्तिसाधनानां कुसीदराजसेवादीनामनेकप्रकारत्वं दृष्टमित्यर्थः ॥

## वाक्यार्थमञ्जरी

उच्चेति ॥ उत्तमम् । अवचेति ॥ नीचेत्यर्थः ॥ ॐ नाविशेषात् ॐ ॥ अविशेषाद्वि शेषतारतम्यं विना ज्ञानाधिकारिता न कुतः अविशेषात् मानस्याप्यविशेषप्रसंगादित्यर्थः ।

## ४. स्तुत्यधिकरणम्

**‘अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्ये स्यात्तेनेदृश एवे’**(बृ.उ.५-५-१)**ति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह —**

**॥ ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ १४ ॥**

**न विधिः । ज्ञानिनः स्तुतये अनुमतिमात्रं वा । युज्यते च ॥ १४ ॥**

## तत्त्वप्रदीपिका

मौनमुपासनम् । अमौनमपरोक्षज्ञानम् । निर्विद्य नितरां लब्ध्वा, विद् लाभ इति धातोः । अ ब्राह्मणः ब्रह्मनिष्ठो भवति । स येन केनापि वर्तेत, तेनेदृश एव स्यात् । न किञ्चिदपि हीयते । श्रुतियोजनायां ज्ञानिनो यथेष्टचरणं विधीयत इत्यायातम् । युज्यते च । किन्नु खल्वेवंविधं ब्रह्मद तस्य दर्शनवतोऽभिमत न कुर्वीतेत्यत आह– स्तुतयेऽनुमतिर्वा ॥ नायं विधिः यो ज्ञानी स य चरेदेवेति । प्रमाणाभावात् । अपि तु “केन स्याद्येन स्यात्तेनेदृश एवे”त्युक्तिर्ज्ञानिस्तुतये यथेष्टप्रवृत्तावनुमतिमात्रं वैतत् । ‘स्तुतिः’ सामर्थ्यप्रकटनम् । ‘अनुमतिः’ क्रियमाणस्याभ्यनुज्ञ

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्यासत्प्रवृत्तावपि मोक्षसाधनत्वनियमलक्षणमहिम्नो वर्णन
शास्त्रादिसंगतिः । अन्यथा साधनान्तरादतिशयाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतज्ञान
विषयः । किं तस्य सदसत्प्रवृत्त्योर्विशेषोऽस्ति न वा इति सन्देहः । लौकिकदृष्टिस्तुल्यं त्वित्यु
सन्देहबीजम् । पूर्वपक्षं सूचयति ॥ अथेति ॥ न ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषोऽस्ति । ब्र
पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च नि
ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव इति श्रुतौ ज्ञानिनो यथेष्टप्रवृत्तिविधानात्
हि । यो ब्रह्मप्राप्तियोग्योऽसावागमजं ज्ञानं लब्ध्वा युक्तिजज्ञानमापादयेत् । तदुभयलाभ
ध्यानी भवति । तेन चापरोक्षज्ञानं प्राप्नोति अथ जीवन्मुक्त उच्यते । स च सता वाऽस
केनाऽपि प्रकारेण वर्तेतेति । यदि ज्ञानिनः सदसत्प्रवृत्त्योरस्ति विशेषस्तर्हि सदेवाचरेन्ना
वक्तव्यम् । न तु यथेष्टाचरणं विधातुं युक्तम् । श्रूयते च ज्ञानिनः सदसत्प्रवृत्त्योरविशे
स्यात्केन स्यात्तेनेदृश एवेति । अयुक्तश्च ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषः । न हि मोक्षादति
फलमस्ति यत्सत्प्रवृत्त्या भवेत् । न च समुच्चयसाध्यत्वं मोक्षस्य नापि ज्ञानिनो मोक्ष
योऽसत्प्रवृत्त्या भविष्यति । अतः सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषाभावादाद्याधिकर
मयुक्तमिति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अस्त्येव ज्ञानिनः सदसत्प्र
र्विशेषस्तर्हि कथमयं यथेष्टाचरणविधिः । मैवम् । केन स्यादित्यस्य विधित्वाभावात्
किमर्थमुच्यते । यथा कश्चित् भृत्यं प्रति तत्स्तुतये कथ्यते यथेष्टं कुर्विति न तु विधिस्त
ज्ञानिनः स्तुतय एवोच्यते । अथवा यथेष्टाचारेऽनुज्ञानमात्रमेतत् । सर्वथा तु न विधिरिति
न सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषोयुज्यते । तथा सत्यसत्प्रवृत्त्या कुण्ठितस्य
मोक्षसाधनत्वाभावप्रसङ्गादित्यत आह ॥ युज्यते चेति ॥ सदसत्प्रवृत्तिभ्यां विशेष इति शेषः

## गुर्वर्थदीपिका

न ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषोऽस्तीत्यत्र ज्ञानिनां सदसत्प्रवृत्तिभ्यां सर्वथा
शुभफले न स्त इति पूर्वपक्षिणोऽभिसन्धिः । सिद्धान्तिनस्तु सत्प्रवृत्तेर्न मोक्षस
नाप्यसत्प्रवृत्तेर्मोक्षप्रतिबन्धकत्वम् । मुक्तावानन्दवृद्धिह्रासफलकत्वात्सर्वथा निष्फल
नेत्याहुरिति विवेकोऽनुसन्धेयः । बाल्येन तिष्ठासेदित्यत्र युक्त्यनुसंधानाख्यबल
बलिनो भावः बाल्यमिति व्युत्पत्या बाल्यपदेन युक्त्यनुसन्धानात्मकं मननं गृह्यते । प्र
कब्राह्मणशब्दस्य 'अणपणगता' वितिधातोः ब्रह्माणतीति व्युत्पत्या ब्रह्मप्राप्तियोग्यत्व

(गुर्वर्थदीपिका)

प्राथमिकपाण्डित्याख्यश्रवणस्यैव मौनं निर्विद्येति पुनरनुवादः । गत्यर्थानां ज्ञानार्थत्वात् द्वितीयब्राह्मणशब्दस्य ब्रह्मापरोक्षज्ञानित्वमर्थ इत्यनुसन्धेयम् । आद्याधिकरणोक्तमित्यत्र ''अधिकोपदेशादि''त्यधिकरणे यदुक्तं तन्नेत्यर्थः ।

## भावबोधः

ओं स्तुतयेऽनुमतिर्वा ओं ॥ १४ ॥ अत्र पूर्वाधिकरणोक्तज्ञानाधिकारतारतम्यानुसारेणैव ''केन स्यात्'' इति श्रुतिविचारादनन्तरसङ्गतिरिति ज्ञेयम् । किमित्यादि । अत्र ज्ञानिनां सदसत्प्रवृत्त्योर्विशेषो नास्त्युतास्तीति चिन्ता । तदर्थं ''केन स्यात्'' इति श्रुतिर्निरवकाशोत सावकाशेति । तदर्थं ज्ञानिनां सदसत्प्रवृत्त्योर्विशेषः किं न युक्त उत युक्त इति । तदर्थं सदसत्प्रवृत्त्योर्विशेषः किं मोक्षतदभावयोरन्यतर उत तदतिरिक्त इति । तदर्थं ज्ञानिनां विहितनिषिद्धकरणाकरणयोः प्रमाणं नास्त्युतास्तीति । श्रुतौ यथेष्टाचरणविधेरप्रतीतेः कथमेतदित्यतो द्वितीये ब्राह्मणो ब्रह्माणितुं योग्यः । पाण्डित्यमागमजज्ञानं, बाल्यं युक्तिसहितं बलयुक्तत्वात् । मौनमुपासनाजं, अमौनमपरोक्षज्ञानं, निर्विद्यं नितरां प्राप्य लब्ध्वा ''विद् लभ'' इति धातोः । अथ ब्राह्मणो मुक्तो भवतीत्यर्थ इति बृहदारण्यकभाष्यं मनसि निधाय श्रुतिव्याख्यानपूर्वकं पूर्वपक्षमुपपादयति– तथा हीत्यादिना। अधिकारज्ञापकस्याद्यब्राह्मणशब्दस्यार्थो ब्रह्मप्राप्तियोग्य इति । ''पाण्डित्यं'' इत्यस्यार्थं आगमजज्ञानमिति । ''निर्विद्ये''त्यस्यार्थो लब्ध्वेति । यद्यपि निःपूर्वो विदिर्वैराग्ये रूढः । तथापि निः उपसर्गः । सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयति । निर्विद्यत इति कर्तरि प्रयोगदर्शनात् लाभार्थस्यार्थं तु विशिनष्टचेव केवलम्। निर्विदन्ति निविदन्त इति वैराग्ये तत्प्रयोगादर्शनादिति गीताभाष्यटीकायामेवोक्तम्। बाल्यमित्यस्य युक्तिरूपबलसम्बन्धीत्यर्थमभिप्रेत्याह– युक्तिजज्ञानमिति । तिष्ठासेदित्युक्तायाः स्थितीच्छाया अविधेयत्वात्; तदिच्छायां बाल्यस्याकारणत्वाच्च युक्तिजज्ञानमापादयेदिति तात्पर्यमुक्तमिति ज्ञातव्यम् । अथ ''मुनिः'' इत्यस्यार्थो तदुभयलाभादनन्तरं ध्यानी भवतीति । तेन चापरोक्षज्ञानं प्राप्नोतीति । अनेन मौनं निर्विद्यामौनं प्राप्नोतीति शेषपूरणेन वाक्यं योजितं भवति । जीवन्मुक्त उच्यत इति । ''न चाथ ब्राह्मणो मुक्तो भवति'' इति बृहदारण्यकभाष्यविरोधः । ब्राह्मणशब्दस्य जीवन्मुक्तपरममुक्तोभयपरत्वेन

(भावबोध:)

इत्युक्तमिति भाव: । ज्ञानिनामात्मस्वरूपस्यैव दाढ्यात् सत्प्रवृत्तिविपरीतप्रवृत्त्योरि इति न्यायविवरणं मनसि निधाय आह– अयुक्तश्चेति । न हि मोक्षादिति । मो ज्ञानिनां निश्चित एवेति भाव: । अनेनात्मस्वरूपस्य आनन्दाविर्भावादिलक्षणस्य दा निश्चितत्वादिति व्याख्यातं भवति । न मोक्षातिरिक्तातिशयितफलार्थं सत्प्रवृत्ति: । कि मोक्षार्थमेव । सत्प्रवृत्त्यभावे ज्ञानेन मोक्षस्यैवाजननादित्यत आह– न च समुच्चयेति ।।

''विना कर्म न मोक्ष: स्याज्ज्ञानेनेत्यपि सा श्रुति: ।
नान्य: पन्था इति ह्येव निवारयति सादरम् ।।''

इत्यनुव्याख्यानोक्तरीत्या ''विद्यैव तु निर्धारणात्'' इत्यत्र समुच्चयवादस दूषितत्वादित्यर्थ: । ''कामचारेण चैके'' इत्यादिसूत्रनिवर्तनीयमाह– नापि ज्ञानिन इ ज्ञानिन आत्मस्वरूपलक्षणमोक्षस्य दृढत्वादेवेत्यर्थ: । अन्यथा ''अनियम: सर्वे इत्युक्तविरोध: स्यादिति भाव: । आद्येति । पुरुषार्थनये ''तद्वतो विधानात्'' ''नियमाच्च'' इत्यादिना कर्मावश्यकमित्युक्तमयुक्तमित्यर्थ: । ज्ञानिन: स्तुतय एवे सर्वाधिकारिसाधारणमिदमिति ज्ञातव्यम् ।

''प्रारब्धकर्मजस्यैव विषभक्षान्मृतेरिव ।
प्राप्तस्याप्यनिवर्त्यस्य किञ्चिद्भुक्तस्य संविदा ।।
उपमर्द इति प्रोक्तो देवादीनां यथा क्रमम् ।।''

इत्यनुव्याख्यानानुसारेण सूत्रं व्याचष्टे– ज्ञानिनां हि विषभक्षणादिति ।

## भावदीप:

।। ॐ स्तुतयेऽनुमतिर्वा ॐ ।। १४ ।। मोक्षसाधनत्वनियमेति ।। ज्ञानिनोऽसद्वृत्त मोक्षो भवत्येवेति नियमेत्यर्थ: । एतेनास्तु पूर्वत्र ज्ञानरूपफले प्रज्ञांतरेत्यत्र निण विशेषाभावप्रसंगात्तदधिकारे विशेष: । ज्ञाने तु नासत्प्रवृत्तिकृतो विशेष: । तत्फले मु तत्कृतविशेषस्य निर्णीतस्य कस्यचिदभावादिति शंकनाद्वा पूर्वत्रेवात्रापि मुक्तिफले संभव तत्रानंदह्रासरूपविशेषेण ज्ञानेऽप्यस्ति संपूर्णमुक्त्यजनकत्वरूपविशेष इति सिद्धांतकर पूर्वमाचार्यमतजैमिनिमतयोरुपन्यासव्याजेन ज्ञानस्य कर्मशेषत्ववाक्यानां क ज्ञानशेषत्ववाक्यानां चाधिकारिभेदेनाविरोधमुक्त्वा मध्ये प्रसंगादधिकारचिंतां च कृत्व पुनरेकस्मिन्नेव वाक्ये त्रिविधवाक्यैर्विरुद्धार्थत्रयपरत्वमपेत्यात्र त्रिविधाधिकारिभेदेनावि

(भावदीपः)

विशेषदृष्टिरित्यर्थः । ज्ञानिनां सत्प्रवृत्तिविपरीतप्रवृत्तयोरविशेष इत्यन्यत्रोक्तप्रतिज्ञामाह ॥ ज्ञानिन इति ॥ एकवचनोक्तिर्ब्रह्मादिमानुषांतज्ञानिसामान्यसूचनाय । कुत इत्यतो भाष्य हेतुत्वेन योजयितुं भाष्योक्तश्रुतावथपदोक्तानंतर्यप्रतियोगिज्ञापनाय निर्विद्येत्यत्र कर्तृज्ञापन च पूर्वशेषमाह ॥ ब्राह्मण इति ॥ इति श्रुताविति ॥ पञ्चमाध्यायपञ्चमब्राह्मण स्थकाण्वश्रुतावित्यर्थः ॥ इति श्रुतौ ज्ञानिन इति ॥ "तां चतुर्थीं माहाचमस्यः प्रवेदयत इति व्याहृतिविद्यादाविव न ह वै देवान् पापं गच्छतीति सप्तान्नविद्यादादिव हंतकारं मनु इत्यादाविव च केन स्यादिति वाक्ये कर्तृविशेषाभावेनास्य वाक्यस्य ब्रह्मादिमानुषांतज्ञा सामान्यपरत्वाद्यदेव विद्ययेत्यादेर्वाक्यस्य मानुषविषयत्वे ज्ञानादेव स्वर्गः । ज्ञानेनैवाप सर्वमित्यादिवाक्यस्येव ज्ञानादेव स्वर्ग इत्यादेर्देवताविषयत्वे यदेव विद्ययेत्यादे चेहाधिकारिविशेषपरत्वे कल्पकस्य कस्यचिदभावाच्च ।

न च ब्रह्मैव स्वेच्छानियत इत्यादिवाक्यमेवास्य चतुर्मुखमात्रपरत्वकल्पकमिति वाच्यम् तस्य कार्यं न विद्यत इति स्मृतिबलाज्ज्ञानिसामान्यपरत्वस्य संभवात् । न च तत विशेषपरं कल्पकाभावात् । न च प्रातरुत्थाय संध्यामुपासीतेति ब्राह्मणो न हंत इत्यादिवाक्यमेव तस्य कार्यमित्यादेर्विशेषपरत्वकल्पकमिति वाच्यम् । तस्याज्ञविषयत्वो पत्तेरिति भावः । स्याच्छब्दस्य विधौ स्मरणादाह ॥ विधानादिति ॥ ननु ज्ञानि यथेष्टेत्याद्युक्तिरयुक्ता । बृहद्भाष्ये अथ ब्राह्मणः मुक्तो भवतीत्यर्थः । स मुक्तः केनापि वर्तयन्नीदृश एव भिक्षुक एव न कदाचित्स्वतंत्रो भवतीति ग्रंथेन मुक्तस्य भगव सकाशादात्मानं विदित्वा भिक्षाचर्यं चरंतीति पूर्वप्रकृतानंदभिक्षुकत्वपरतया व्याख्यातत ब्राह्मणशब्दस्य ज्ञानिपरत्वाभावादित्यतः सत्यमेवं तथापि ।

"ततो ब्रह्माणने योग्यः पांडित्यं प्राप्नुयात्परम् ।
पांडित्यमागमज्ञत्वं बाल्यं युक्तिसहायता ।
मौनं तूपासनासिद्धिरमौनं भगवद्दृशिः ।
एतान्याप्य भवेन्मुक्तिर्मुक्तो वै भिक्षुको भवेत् ॥"

इत्यादिनैकमर्थमुक्त्वा "प्रथमो ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते । अपरोक्ष

(भावदीपः)

तदर्थानुक्तिः । व्याख्यास्यते चाग्रेऽनुपदम् । हेतोरप्रयोजकत्वमाशंक्य हेतूच्छित्तिरेव बाधिकेत्याह ।। यदीति ।।

भाष्ये श्रुतिशेषोक्तेरुपयोगमाह ।। श्रूयते चेति ।। न केवलं विधानान्यथ पत्त्याऽनुमीयत इति चार्थः । एवमविशेषेणानुमानागमावुक्त्वा विशेषस्यायोगाच्चाविशेषः इति भावेन युज्यते चेति भाष्यसूचितं शमदमादीति सूत्रव्यावर्त्यमाह ।। अयुक्तश्चेति किं मोक्षादन्यो मोक्ष एव वेति विकल्प्याद्यमाह ।। न हीति ।। भवेदित्युपलक्षण असत्प्रवृत्त्या न भवेदित्यपि ध्येयम् । द्वितीये ज्ञानकर्मणी द्वे अपि रज्ज्वाः सूत्रद्व मोक्षस्य साधनं स्यात् । असत्प्रवृत्त्या च मोक्षः प्रतिबध्येतेति स्यात् । तदुभयमपि क्रमेणाह ।। न चेति ।। विद्यैव त्वित्यादौ तथोक्तेः। विस्तृतं चैतत्तत्रैवानुव्याख्यानाद भावः ।। नापीति ।। अनियमः सर्वेषामित्यत्र तथोक्तेरिति भावः । एतेन ज्ञानिनाम स्वरूपदार्ढ्यादित्यन्यत्रोक्तहेतोः आत्मस्वरूपरूपमोक्षस्य दृढत्वेन ततोऽतिशयस्य प्रा स्याभावात्तत्प्रतिबंधस्य चाभावदिति द्वेधार्थः सूचितः ।। अत इति ।। अविशेषसाधकयु श्रुतिबलाद्विशेषस्यायुक्तत्वाच्चेत्यर्थः ।। आद्येति ।। पुरुषार्थनये तद्वतो विधाना माचेत्यादिना कर्मावश्यकमित्युक्तमित्यर्थः ।। छ ।।

अत आहेत्युक्तं पूर्वपक्षशंकानिवर्तकत्वं सूत्रभाष्ययोर्विवरितुमाह ।। अस्त्येवेति एवकारेण न त्वविशेष इति पूर्वपक्षनिरासः । तत्र हेतुत्वेन न विधिरिति भाष्यार्थमा विधित्वाभावादिति ।। तथा च प्रागुक्तहेतोरसिद्धिरिति भावः । सूत्रभाष्ये अवतारयि तर्हीति ।। चतुर्थीनिर्वाहाय किमर्थमित्युक्तिः । ज्ञानिनः स्तुतय इत्यादि व्याचष्टे ।। ।। स्तुतिः सामर्थ्यप्रकटनम् ।। एतदिति ।। केन स्यादिति वचनमित्यर्थः । अनुम त्यस्यार्थोऽथवेति । अयुक्तश्चेत्यादिनोक्तचोद्यमनुवदति ।। सदसदिति ।। साधनत्वप्रसंग त्यनंतरं तथा च विद्यैव त्वित्याद्युक्तव्याघात इति योज्यम् ।। १४ ।।

## वाक्यार्थमुक्तावली

ॐ स्तुतयेऽनुमतिर्वा ॐ ३-४-१४ ।। अत्र पूर्वाधिकरणोक्तज्ञानाधिकारतारत नुसारेणैव केन स्यादिति श्रुतिविचारादनन्तरसङ्गतिः । मोक्षसाधनत्वेति । ज्ञा सदसत्प्रवृत्तिभ्यामानन्दातिशयह्रासरूपविशेष एव न मोक्षहानिरिति प्रतिपादनादित्यर्थ एतेन संशयपूर्वपक्षसिद्धान्तानामसत्प्रवृत्तावपि मोक्षो भवतीत्येतद्विषयप्रवृत्तेः क

स्पष्टत्वादिति भावः । किमिति । अत्र ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषो नास्त्युतास
चिन्ता । तदर्थं सदसत्प्रवृत्तिभ्यां विशेषसद्भावे केन स्यादिति यथेष्टाचारविधिरीदृश
साम्यश्रुतिः मोक्षस्य ज्ञानैकसाध्यतया क्लृप्तत्वात्तदधिकारस्य सदसत्प्रवृत्तिभ्यां वर्धनी
कुण्ठनीयस्य फलस्याभावयुक्तिश्च विरुध्यत उत न विरुध्यत इति । सूचयतीति । विध
इत्युक्त्या विशेषसद्भावे विध्यनुपपत्तिरिति सूचनात् । ईदृश एवेत्यन्तोदाहरणेन साम्य
रिति सूचनात् । उपलक्षणतया युक्तेश्चेति वक्ष्यमाणयुक्तेरपि सूचनादिति भावः ।

ब्राह्मणो ब्रह्माणितुं योग्यः पाण्डित्यमागमजं ज्ञानं बाल्यं युक्तिसहितं
बलरूपत्वात् मौनमुपासनममौनमपरोक्षज्ञानं निर्विद्य निरन्तरां प्राप्य ''विद् लाभ''
धातोः अथ ब्राह्मणो मुक्तो भवतीति बृहद्भाष्यं मनसि निधाय श्रुत्यर्थमाह
तथाहीत्यादिना । तदुभयलाभानन्तरं ध्यानी भवति । तेन चापरोक्षज्ञानं प्राप्नोतीति ।
मौनं निर्विद्य प्राप्यामौनं प्राप्नोति । मौनं तत्साध्यममौनं च निर्विद्येति शेषपूरणेन
योजितं भवति । अनेन केन स्यादित्यादेरर्थः सतामेवेति । युज्यते चेत्युत्तरभाष्यसूत्रि
आत्मस्वरूपदार्ढ्यमित्युक्तन्यायविरोधमप्याह । अयुक्तश्चेति । यदि ज्ञानिनः सत्प्र
विशेषः स्यात्तर्हि मोक्षादतिशयफलं स्यादिति तर्कस्य विपर्यये पर्यवसानमाह । न ही
एतच्च शमाद्युपेतः स्यादित्यादावुत्तरभाविसत्कर्मणानन्दातिशयसमर्थनात्तन्निरसनीय
ज्ञेयम् । यदि मोक्षादधिकफलाभावेऽपि ज्ञानिनः सत्प्रवृत्त्या विशेषः स्यात्तर्ह्ययं ज्ञानस
एवेति मोक्षस्य केवलज्ञानसाध्यत्वाभावात् समुच्चयसाध्यत्वं स्यादिति तर्कस्य वि
पर्यवसानमाह । न चेति । एतच्चात एव चाग्नीन्धनेति सूत्रनिरस्यं बोध्यम् । यद्यसत्प्र
विशेषो भवेत्तर्हि ज्ञानिनो मोक्षाभावः स्यादिति तर्कस्य विपर्यये पर्यवसानमाह । नापी
एतच्च कामकारेणेति सूत्रनिरस्यम् । एवमापाद्य विपर्यये पर्यवसानमुक्त्वा तद्धेतूकृत्या
कविपर्यये पर्यवसानमाह । अत इति । मोक्षादतिशयफलाभावात् मोक्षस्य समुच्चयसाध्य
भावादसत्प्रवृत्त्या ज्ञानिनो मोक्षकुण्ठनाभावाच्चेत्यर्थः । आद्याधिकरणेति । पुरुष
धिकरणोक्तं कर्मणो ज्ञानफलेऽतिशयाधायकत्वमित्यर्थः ।

सूत्रेऽचोदनेत्येतत् चोदनमाकृष्यते । किन्त्विति शेषः । तथा च केन स्या
श्रुतिरचोदना न यथेष्टाचारविधिः किन्तु ज्ञानिनः स्तुतये उच्यते । यदि सता वासत

(वाक्यार्थमुक्तावली)

अस्त्येवेत्यादिना । यथा किञ्चिदिति । यथेष्टकरणेऽपि मत्प्रीतिभावात् तवाधिकार नास्तीति प्रियभृत्यस्य श्रुतिर्लभ्यत इति भावः ।

## तत्त्वसुबोधिनी

ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ पूर्वाधिकरणोक्तज्ञानाधिकारतारतम्यानुसारेणैव वि स्यादिति श्रुतिविचारादनन्तरसंगतिरिति भावः । ननु श्रुतौ यथेष्टाचारणविधिरप्र कथमेतदित्यतः द्वितीयो ब्राह्मणो ब्रह्माणितुं योग्याः पाण्डित्यमागमजं ज्ञानं, युक्तिसहितं बलयुक्तत्वात्, मौनमुपासनं, अमौनमपरोक्षज्ञानं, निर्विद्य नितरां प्राप्य त विद्दलाभ इति धातोः । अथ ब्राह्मणः मुक्तो भवति इति श्रुतिव्याख्यानपूर्वकं पूव मुपपादयति । तथा हीति । अधिकारज्ञापकस्याद्यब्राह्मणशब्दस्यार्थो ब्रह्मप्राप्तियोग्य इ पाण्डित्यमित्यस्यार्थो आगमजं ज्ञानमिति । निर्विद्येत्यस्यर्थो लब्ध्वेति । यद्यपि नि विदिः वैराग्ये रूढः, तथापि निरुपसर्गस्य सत्तार्थस्यैवंविधकथनबाधित्त्वात्तं वैर व्यवस्थापयतीति भावः । ज्ञानमिति । तिष्टासेदित्युक्तायाः स्थितीच्छाया अविधेय तदिच्छायां बाल्यस्याकरणत्वाच्च युक्तिजज्ञानमापादयेदिति तात्पर्यमुक्तं इति ज्ञातव्य अथ मुनिरित्यस्यार्थः तदुभयलाभानन्तरं ध्यानी भवतीति । तेनापरोक्षज्ञानं प्राप्नोती अनेन मौनं निर्विद्यामौनं प्राप्नोति इति शेषपूरणेन व्याख्यातम् । जीवन्मुक्त उच्यत इति चाथ ब्राह्मणो मुक्तो भवतीति बृहदारण्यकभाष्यविरोधः । ब्राह्मणशब्दस्य जीवन् परममुक्तोभयपरत्वोपपत्तेः । न हि मोक्षादिति । मोक्षश्च ज्ञानिनां निश्चित एवेति भा ननु न मोक्षातिरिक्तातिशयितफलार्थं सत्प्रवृत्तिः, किन्तु मोक्षार्थमेव सत्प्रवृत्त्यभावे अ मोक्षस्यैवाजननादितित्यत आह । न च समुच्चयेति । "विनाकर्म न मोक्षः ज्ञानेनापीति सा श्रुतिः । नान्यःपन्था इति ह्येवं निवारयति सादरं" इत्यनुव्याख्यान रीत्या "विद्यैव तु निर्धारणादित्यत्र समुच्चयवादस्यापि पठितत्वादित्यर्थः। असत् ज्ञानिनो मोक्ष एव न स्यादित्यतः आह । तावतापीति । ज्ञानिनः आत्मस्व लक्षणमोक्षस्य दृढत्वादेवेत्यर्थः । अन्यथा "अनियमः सर्वेषां" इत्युक्तविरोधः स्या भावः। आद्याधिकरणोक्तमिति । कर्मणः आधिक्यं अधिकोपदेशादित्यत्रोक्तं तद्युक्तमित ज्ञानिनःस्तुतय इति । सर्वाधिकारिसाधारणमिति ज्ञातव्यम् । स्तुतिः सामर्थ्यप्रकटन

## वाक्यार्थविवरणम्

मोक्षसाधनत्वेति ॥ लिङ्गशरीरभङ्गरूपमोक्षेत्यर्थः ॥ अन्यथेति ॥ असत्प्रवृत्तावि मोक्षसाधनत्वाभाव इत्यर्थः ॥ साधनान्तरादिति ॥ स्वर्गादिसाधनात्कर्मरूपादित्यर्थः असत्प्रवृत्तिपूर्वकं कर्मकरणे तस्यापि स्वर्गसाधनत्वाभावेन तत्साम्यापत्त्या तस्मादतिशयो स्यादित्यर्थः । ॥ लोकदृष्टिरिति ॥ लोकेऽसत्प्रवृत्त्यादिनाऽसंव्यवहार्यत्वादिरूपविशेषो दृश्य इत्यर्थः । तमेव विशेषमुपपादयितुं तावत्सत्पवृत्त्याऽविशेषमुपपादयति ॥ न हीति असत्प्रवृत्त्याप्यविशेषमुपपादयति ॥ नापीति ॥ आद्याधिकरणोक्तमिति ॥ अधिकोप देशादित्यत्र यथा यथा कर्म कुरुते तथा तथाऽधिको भवतीति सत्प्रवृत्त्या विशेषकथन मित्यर्थः ॥ अनुज्ञामात्रमेतदिति ॥ दैवात् कदाचिज्ज्ञानिनां कामचरणेच्छा चेत् क्रियतामि त्यनुज्ञामात्रमेवैतत् । न विधिरित्यर्थः । सत्प्रवृत्तिसापेक्षत्वे दूषणमाह ॥ सत्प्रवृत्ति समुचितस्येति ॥ तच्च भवतामनिष्टमिति भावः ॥ मोक्षं लिङ्गभङ्गरूपम् ॥ एवमुत्तरत्रा मोक्षशब्दस्यायमेवार्थो ज्ञातव्यः ।

## वाक्यार्थमञ्जरी

तुल्यं त्विति ॥ तत्र कर्मकरणाकरणयोर्ज्ञानस्य तुल्यत्वोक्तिरित्यर्थः । आद्यब्राह्मण शब्दार्थो ब्रह्मप्राप्तियोग्य इति । पाण्डित्यमित्यस्यागमजन्यज्ञानमिति, निर्विद्येत्यस लब्ध्वेति, विद्लृ लाभ इति धातोः । बाल्यमित्यस्य युक्ति अज्ञानमिति, तिष्ठासेदित्यस्या पादयेदिति, मुनिरित्यस्य ध्यानी भवतीति, अमौनशब्दार्थः अपरोक्षज्ञानमिति, ब्राह्मण शब्दार्थो जीवन्मुक्त इति, ईदृशः विशिष्टः तदेव व्यनक्ति ॥ न हीत्यादिना ॥ मोक्ष ज्ञानिनां निश्चित एवेति भावः । ननु न मोक्षातिरिक्तातिशयितफलार्थं सत्प्रवृत्तिः किं मोक्षार्थमेव, सत्प्रवृत्त्यभावे ज्ञानेन मोक्षस्यैवाजननादित्यत आह ॥ न च समुच्चयेति विद्यैव तु निर्धारणादित्यत्र समुच्चयवादस्य दूषितत्वादिति भावः ॥ नापीति तथात्वेऽनियमः सर्वेषामित्युक्तज्ञानिनां मोक्षानियमविरोध इति भावः ॥ आद्याधिकरणोक्त मिति ॥ ज्ञानस्य सर्वपुरुषार्थसाधनत्वरूपमाहात्म्यमित्यर्थः ॥

ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ स ब्राह्मण इति श्रुत्युक्तं यथेष्टाचरणं स्तुतये ज्ञानिस्तुत्यर्थ

## सूत्रभाष्यम्

॥ ॐ कामकारेण चैके ॐ ॥ १५ ॥

'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुर रम्भणमि'(सामशाखा)ति चैके पठन्ति ॥ १५ ॥

## तत्त्वप्रदीपिका

अत्र प्रमाणमाह– कामकारेण चैके ॥ एके शाखिनः कामकारेणापि ज्ञानिनो मोक्षं पठन्ति अत उक्तं युज्यते । 'कामकारः' कामितकरणम् । तत्कामचारभक्षवादेषु त्रिष्वपि समम् ॥

## तत्त्वप्रकाशिका

असत्प्रवृत्त्या कुण्ठितशक्तेर्ज्ञानस्य मोक्षसाधनत्वाभावप्रसङ्गात्कथं युज्यते इत्याश परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ कामेति ॥ नासत्प्रवृत्त्या कुण्ठितत्वेन ज्ञानस्य मोक्षसाधनत्वाभ प्रसज्यते । यतो यथेष्टाचारेणापि ज्ञानिनो मोक्षमेके शाखिनः पठन्ति इति भावः अनारम्भणमनादि ॥ १५ ॥

## गुर्वर्थदीपिका

''स्तुतयेऽनुमतिर्वे''त्यधिकरणे 'केन स्याद्येन स्यादि''त्युक्तं सदसत्कर्मिणोः कामच ज्ञानिनस्स्तुतये कथ्यते । आज्ञामात्रं वा न तु विधिरित्युक्तम् । इदं तु देवताविषयम् ''कामकारेण चैक'' इति सूत्रे कदाचिदसत्प्रवृत्तावपि मोक्षप्रतिबन्धो न । असत्प्रवृत्ते संसारध्वंसाख्यमोक्षकारणत्वं च नेत्युच्यते । किन्तु मोक्षे सत्प्रवृत्त्या आनन्दवृद्धिः अस त्प्रवृत्त्याऽऽनन्दह्रासश्च भवतीत्युच्यते । इदं च मानुषविषयम् । ''गुणदोषैस्सुखस्यापि वृद्धि ह्रासौ विमुक्तिगौ । नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्'' इत्यणुभाष्ये कथनात्

## भावबोधः

एके शाखिन इति । अनेन ''च''शब्दः पूर्वसूत्रगतस्य ''एके'' इत्यनुकर्षणार्थ इत्यु भवति ।

## भावदीपः

(भावदीपः)

असत्प्रवृत्त्येति ॥ साध्यमध्याहृत्य तत्र हेतुत्वेन भाष्यं व्याचष्टे ॥ नासदिति ॥ चशब्दस्य वाऽयमर्थः । यद्वा चोऽप्यर्थे । यथेष्टाचारेणापीत्याद्युक्त्यैव तात्पर्यतो लब्धार्थस्योक्तिर्नासत्प्रवृत्त्येत्यादि । युज्यते च विशेष इति पूर्वभाष्यभावार्थो वा । अनारंभणमिति श्रौतपदानुवादोऽनादीति व्याख्या ॥ १५ ॥

## वाक्यार्थमुक्तावली

ॐ कामकारेण चैके ॐ ३-४-१५ ॥ चशब्दो हेतावप्यर्थे च वर्तत इति भावेन व्याचष्टे । नासत्प्रवृत्त्येति । यथेष्टाचारेणेति । अत्राचारपदं चरणभक्षवादक्रियासामान्यपरम् । अत एव तत्वप्रदीपे कामकारः कामितकरणम् । तत्कामचरणभक्षवादे चतुर्ष्वपि समर्थमित्युक्तम् । ननु तर्कस्य किमनेन दूषणमुक्तम् । प्रमाणबाध इति चेदापाद्यानिष्टत्वोपपादकत्वेन तदङ्गत्वात् । श्रुतावसत्प्रवृत्तावपि मोक्षोक्त्या तर्कस्याप्रयोजकत्वमुक्तमिति चेन्नासत्प्रवृत्तिकृतविशेषस्यैवापादकत्वेन श्रुतौ तत्सद्भावेऽपि मोक्षोक्तभावादिति चेत्सत्यम् । श्रुतौ कामचाराणामपि मोक्षोऽस्तीत्येतावन्मात्रमुक्तमिति । तथापि श्रुत्या कामचारस्य मोक्षविघातकत्वाभावलाभात् । कामचारकृतविशेषो मोक्षविघातरूपो न भवतीति तर्कस्याप्रयोजकत्वमिति पर्यवसानादिति भावः ।

## तत्त्वसुबोधिनी

न आरभ्यत इत्यनारंभणमित्यन्यथाप्रतीतिनिरासायाह अनारंभणमनादीति । एवं च न आरंभणं यस्य तत् अनारंभणमिति विग्रहः सूचितः । एके शाखिन इति । अनेन चशब्दः पूर्वसूत्रगतस्यैक इत्यस्यानुकर्षणार्थः इत्युक्तं भवति ।

## वाक्यार्थमञ्जरी

ॐ कामकारेण चैके ॐ ॥ ज्ञानिनः कामकारेण यथेष्टाचारेणापि मोक्षमेके शाखिनः कामकारा इति पठन्तीत्यर्थः ॥

## सूत्रभाष्यम्

## तत्त्वप्रदीपिका

अपमर्दं च ।। परमात्मदर्शिनां पुण्यपापयोरुपमर्दं काममाचरतामपि तेषां मोक्षं च वक्ति
उपमर्दः फलह्रासः । प्रारब्धकार्ययोः पूर्वयोः विनष्टत्वात् । ह्रासाभावे काम्यविधिवैयर्थ्यात्
त्वनिष्टविषय उपमर्दः ।।

## तत्त्वप्रकाशिका

कैमुत्येनैतमर्थं समर्थयत्सूत्रं पठित्वा तत्सूचितां श्रुतिमुदाहरति ।। उपमर्दं चेति ।। ज्ञानि
विषभक्षणान्मृतेरिवानिवर्त्यतया प्राप्तस्यारब्धकर्मणोऽपि किंचिद्भुक्तस्य ज्ञानेनोपमर्दमेके श
पठन्ति । तदोत्तरकालीनासत्कर्म न मोक्षप्रतिबन्धकमिति किं वर्णनीयमिति भावः । तदुक्त
वै जनो जातु कथं च नाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्' इति । ॐमित्युच्चार्येति श्रव
लक्षणम् । अन्तर्हृदयस्येतदप्युपलक्षणम् ।। १६ ।।

## गुर्वर्थदीपिका

अन्तर्हृदयस्येत्यत्र हृदयस्येति पदं सौत्रान्तःपदस्य शेषपूरणम् । हृदयस्यान्तरित
उपलक्षणं प्रतिमादेरपि सङ्ग्राहकम् ।

## भावबोधः

तदुक्तमिति । हे अङ्ग मुकुन्दसेव्यपरोक्षजानीजनोऽन्यवदज्ञानिवत् संसृतिं प्रार
फलरूपां जातु कथंचन केनापि प्रकारेण नाव्रजेदित्युक्तार्थादज्ञान्यपेक्षया अल्पमेव
भोगं प्राप्नोतीति लाभादुपमर्दप्रतिपादकत्वं भागवतवाक्यस्येति ज्ञातव्यम् ।।

ननु श्रवणादेरेवापरोक्षज्ञानसाधनत्वेन कथं ''उच्चार्याभिपश्येदित्युक्तं'' इत्यत
श्रवणाद्युपलक्षणमिति ।। ननु व्याप्तदर्शिदेवादिसर्वापरोक्षज्ञानिनां प्रारब्धस्योपमर्दोऽ
''देवादीनां यथाक्रमं'' इत्यनुव्याख्यान उक्तत्वात् । तत्कथं श्रुतौ ''अन्तरिमं
संकोचः इत्यत आह– अन्तर्हृदयस्येति । एतदिति । हृदयस्येति शेषोक्तिः ।

## भावदीपः

।। ॐ उपमर्दं च ॐ ।। १६ ।। एतमिति ।। नासत्प्रवृत्त्येत्यादिनोक्तमर्थम् ।
सूत्रेणान्वयमेके पठंतीत्यस्यानुवृत्तिं चोपेत्यार्थमाह ।। ज्ञानिनो हीति ।। चश
आरब्धकर्मणोऽपीति । प्रारब्धकर्मजस्येव विषभक्षणान्मृतेरिव । ''प्राप्तस्याप्य

भावः । उपमर्दः फले ह्रासः ॥ तदुक्तमिति ॥ प्रथमस्कंधे । अंगेति व्यासं प्रति ना
संबोधनम् ॥ उच्चार्येति ॥ तन्मात्रस्य दृष्ट्यहेतुत्वादाह ॥ श्रवणादीति ॥ अंतरित्य
पूरयति ॥ हृदयस्येति ॥ योगिनामेवोपमर्द इति भ्रमनिरासायाह ॥ एतदपीति ॥
क्रियावतां विष्णुर्योगिनां हृदये हरिः । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्म
त्युक्तदिशा बहिरंतरपि पश्येदित्यर्थः । देवादीनामिति पूर्वोक्तानुभाष्योक्तेरिति भाव

## वाक्यार्थमुक्तावली

ॐ उपमर्दं च ॐ ३-४-१६ ॥ चोऽप्यर्थे । प्रारब्धकर्मण इति शेषः । प्रार
णोऽप्युपमर्दं फलह्रासमेके पठन्ति । तदा किमु वाच्यमुत्तरकालीनासत्कर्म न मोक्ष
कमिति चशब्दस्य कैमुत्यद्योतकापिशब्दार्थत्वमेक इत्यस्यानुकर्षणार्थत्वं च मत्वा व
ज्ञानिनामिति । प्रारब्धकर्मण इति । तत्फलस्येत्यर्थः । प्रारब्धकर्मजस्यैव विषभक्षण
रिव । "प्राप्तस्याप्यनिवृत्तस्य किञ्चिद्भुक्तस्य संविदा । उपमर्द इह प्रोक्तो ह
यथाक्रममि"त्यनुव्याख्यानोक्तेः उपमर्दमिति ह्रासमित्यर्थः । कर्माणि न तावत्
प्राप्नुवन्ति । यावज्ज्ञानमिति भावः । मुकुन्दसेवकापरोक्षज्ञानिजनोऽन्यवत्संसृतिं प्रार
फलरूपां जातु कदाचिदपि कथंचन केनापि प्रकारेण वा नाव्रजेदिति भागवतश्लोक
अन्तर्हृदयस्येत्यतदुपलक्षणमिति । अन्यथाग्नौ क्रियावतां विष्णुरित्याद्युक्तप्रको
धिष्ठाने भगवदपरोक्षिणामुपमर्दोऽनया श्रुत्या न सिद्ध्येदिति भावः ।

## तत्त्वसुबोधिनी

तदुक्तमिति । हे अङ्ग मुकुन्दसेव्यपरोक्षज्ञानीजनोऽन्यवदज्ञानिवत्संसृति प्रार
फलरूपां जातु कथंचन केनापि प्रकारेण वानाव्रजेदित्युक्त्या अर्थादन्यापरोक्ष
संसारभागं प्राप्नोतीति तावदुपमर्दप्रतिपादकत्वं भागवतवाक्यस्येति ज्ञातव्यम्
श्रवणादेरेवापरोक्षज्ञानसाधनत्वेन कथमुच्चार्याभिपश्येदित्युक्तमित्यत आह । श्रव
लक्षणमिति । ननु व्याप्तदर्शिदेवादिसर्वापरोक्षज्ञानिनां प्रारब्धस्योपमर्दोऽस्त्येव ।
श्रुतावन्तरिममिति संकोच इत्यत आह । अन्तर्हृदयस्येतदिति । हृदयस्येति शेषोि

## वाक्यार्थविवरणम्

आरब्धकर्मण इति ॥ अपरोक्षज्ञानात्पूर्वं कृतस्येत्यर्थः ॥ न वै जनो जाि
मुकुन्दसेवी जनः अन्यवत् अज्ञानिवत् संसृतिं न याति । हे अङ्गेति सम्बुद्धिः । प्रार

यावदज्ञानिनं भोजयति न तावज्ज्ञानिनमिति भावः । अयमेव सिद्धान्ते उपमर्द शब्दार्थ ज्ञातव्यम् । ज्ञानिनो गालीशतसमाकुलाश्वजन्मप्रापकं किञ्चित्प्रारब्धं कर्मास्ति । अश्वजन्मप्राप्तौ सत्यां राज्ञां गृहेऽश्वो भूत्वा घृतशर्कराद्यदनेन सुखमास्ते । अश्व आप्नोति परं तु ज्ञानमहिम्ना गालीशतसमाकुलत्वं न भवतीत्येवमुपमर्दप्रकारो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

ॐ उपमर्दं च ॐ ॥ ज्ञानेन किंचिद्भुक्तस्य प्रारब्धकर्मण उपमर्दं फलह्रासं पठन्तीत्यर्थः ॥ न वै जन इति ॥ हे अङ्ग मुकुन्दसेव्यपरोक्षज्ञानीजनोऽन्यवदज्ञा संसृति प्रारब्धकर्मफलरूपां जातु कदाचन कथंचन केनापि प्रकारेण नाव्रजेदित्यर्थः । श्रवणादेरेवापरोक्षज्ञानसाधनत्वेन कथमुच्चार्याभिपस्येदित्युक्तमत्राह ॥ श्रवणाद्युपलक्षण ॥ ननु व्याप्तिदर्शिदेवादिसर्वापरोक्षज्ञानिनां प्रारब्धस्योपमर्दोऽस्त्येव तत्कथमन्तरिमि वोक्तिरित्यत आह ॥ अन्तरिति ॥ हृदयस्येति शेषोक्तिः ॥

## सूत्रभाष्यम्

॥ ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ॥ १७ ॥

न तावता कामचारणां ज्ञानेऽधिकारः ।

'य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत् ।

न तथा विद्यते भूयान् यं प्राप्यान्येऽपि भूयस' इति माठरश्रुतेः ॥ १७ ॥

## तत्त्वप्रदीपिका

अथ यथोत्पन्नज्ञानिनांमधिकारिणां कामचरणं न मोक्षं रुणद्धि । एवमुत्पत्स्यमानज्ञान गुरुदेवताशुश्रूषुणां ज्ञानं न रोत्स्यतीत्याशङ्कायामाह– ऊर्ध्वरेतस्सु च शब्दे हि ॥ ऊर्ध्वरेतस्वित प्रधानत्वादुपलक्षणमन्यगुणानाम् ॥

## तत्त्वप्रकाशिका

यदि कामचारिणामपि ज्ञानिनां मुक्तियोग्यता तर्हि तद्वज्जिज्ञासूनामपि कामचार ज्ञानाधिकारः स्यादविशेषात्तथा चाध्ययनमात्रवत इत्युक्तबाध इत्याशङ्कां परिहरत्सूत्रमुपन्य व्याचष्टे ॥ ऊर्ध्वेति ॥ कामचाराणामपि ज्ञानिनां मुक्तियोग्यताऽस्तीत्येतावता तद्वत्कामचार ज्ञानाधिकारो न मन्तव्यः । 'य इमं' इति शब्दे श्रुतौ ऊर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदे

## गुर्वर्थदीपिका

''अध्ययनमात्रवत'' इत्युक्तबाध इत्यत्राध्ययनपदेन विष्णुभक्तिशमदमादिगुणानां संगृहीतत्वेन कामचाराणां ज्ञानाधिकारस्य निवारितत्वादिति भावः । ऊर्ध्वरेतस्सु भाषयेदित्यत्र भाषयेदित्युक्तत्वात्प्रवचनश्रवणादिविषयेयं श्रुतिरित्यवगम्यत इत्यर्थः ॥

## भावबोधः

सूत्रे ''च''शब्द ''एवार्थः'' । अत एव भाष्ये न तावतेत्यादिप्रतिज्ञाध्याहार कृतो ज्ञानोपदेशविधानमिति शेष इत्यभिप्रेत्य सूत्रं व्याचष्टे– य इममिति ॥

ननु ''य इयं'' इति श्रुतावर्थात् कामचाराणां श्रवणादिपरोक्षज्ञाने अधिकाराभावो लभ्यते । तत्कथमपरोक्षज्ञाने तेषामधिकाराभावप्रतिपादनायेयं श्रुतिरुपात्तेत्यत आह– अपरोक्षज्ञानस्येति । श्रवणादिरूपपरोक्षज्ञाने तेषामधिकाराभावे सुतरां तज्जन्यापरोक्षानेऽधिकारो नास्तीति भावः ।

## भावदीपः

॥ ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ॥ १७ ॥ इत्युक्तबाध इति ॥ अध्ययनपदेन शमदमादिसत्प्रवृत्तेरपि ग्रहणादिति भावः । भाष्यं व्याचष्टे ॥ कामेति ॥ उपलक्षणं मत्त्वाऽह ॥ ऊर्ध्वरेतस्त्वादीति ॥ श्रुतौ कामचारिणां परोक्षज्ञानिनामेवाधिकारप्राप्त्या प्रकृतापरोक्षज्ञानेऽनधिकारप्राप्तेराह ॥ अपरोक्षेति ॥ कैमुत्यलब्धस्तत्रानधिकार इति भावः ॥ १७ ॥

## वाक्यार्थमुक्तावली

ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ३-४-१७ ॥ अध्ययनमात्रवत इत्युक्तबाध इति । शमादिरहितस्याप्यध्ययनाधिकाराभावात्तद्विना ज्ञानाधिकाराभावादुक्तबाध इति भावः । सूत्रे चशब्द एवार्थः । साध्यसमुच्चये च । हिशब्दो हेत्वर्थः । अत एव भाष्ये न तावता इति प्रतिज्ञाय समुच्चयः कृतः । ज्ञानोपदेशविधानमिति शेषः । ऊर्ध्वरेतस्स्वित्युक्तिः प्रधानत्वादुपलक्षणमन्यगुणानामित्यभिप्रेत्य व्याचष्टे । कामचाराणामिति । ननु य इममिति श्रुताविन्द्रियनिग्रहादिमतामुपदेशजन्यापरोक्षज्ञानाधिकारोक्तेः कथमियं श्रुतिर्जिज्ञासूनाम-

## तत्त्वसुबोधिनी

तथाचेति । तत्र शमदमादिमतामेवाधिकारः इत्युक्तबाधः स्यादित्यर्थः । सूत्रे न एवार्थः । हि शब्दो हेत्वर्थः । अत एव भाष्ये न तावतेत्यादि प्रतिज्ञाध्याहारः कृ ज्ञानोपदेशविधानमिति शेष इत्यभिप्रेत्य सूत्रं व्याचष्टे । य इममिति । य इममिति श्रुता कामचाराणां श्रवणादिपरोक्षज्ञाने तेषां अधिकाराभावप्रतिपादनाय इयं श्रुतिः उप इत्यत आह । अपरोक्षज्ञानस्येति । श्रवणादिपरोक्षज्ञाने तेषां अधिकाराभावे तज्जन्यापरोक्षज्ञाने अधिकारो नास्तीति भावः ।

## वाक्यार्थविवरणम्

ज्ञाने ॥ अपरोक्षज्ञाने । ऊर्ध्वरेतस्त्वादिगुणवत्स्विति । रेतसो अधोविसर्जनम ऊर्ध्वरेतस्कत्वोक्त्या कामचाराभावो ज्ञायत इति भावः ॥

## वाक्यार्थमञ्जरी

ॐ ऊर्ध्वरेतस्सुचशब्दे हि ॥ ॐ शब्दे य इममिति श्रुतौ ऊर्ध्वरेतस्सुवैराग्य गुणवत्स्वेव ज्ञानोपदेशो हि यस्माद्विहितस्तस्मा- त्कामचारेण न ज्ञानप्राप्तिरित्यर्थः । न इममिति श्रुतावर्थात्कामचाराणां श्रवणादिपरोक्षज्ञानाधिकाराभावो लभ्यते । तत मपरोक्षज्ञाने तेषामधिकाराभावप्रतिपादनायेयं श्रुतिरुक्तेत्यत आह ॥ अपरोक्षज्ञानस्येति श्रवणादिरूपपरोक्षज्ञाने तेषामधिकाराभावे सुतरां तज्जन्यापरोक्षज्ञानेऽधिकारो नास भावः ॥

## सूत्रभाष्यम्

**॥ ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ॥ १८ ॥**

**'प्रातरुत्थायाथ सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मैव तदुपासते देवान्नमेज्जुहुयाद्वेदानावर्तयीत नान्यत्किञ्चिदाचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत भृशं वदेन्न विस्मरेदात्मानं सोमं पिबेद्धुतशेषेण वर्तयेदि'त्युक्ताचारपराम विधिबन्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते । न**

## तत्त्वप्रदीपिका

कामचरणश्रुतेः विषयभेदमपेक्ष्यार्थभेदाभिप्रायेण मतद्वयं दर्शयति । परामर्शं जैमिनिरित्यादि सूत्रम् । ''प्रातरुत्थायाथ सन्ध्यामुपासीते''त्यादिना विहितानाचारान् परामृशतीयं श्रुतिः । ''कामचाराः कामभक्षाः कामवादा'' इति परामृशन्ती ज्ञानिनां विधिबन्धवर्जितत्वेन कामत एव तेषां चरणमभिधत्ते स कामचार इति जैमिनिः । न पुनर्निषिद्धानामपि चरणम् । सन्ध्योपास्तिदेवप्रमाणामाग्निहोत्रहोमादीन् कामत एवाऽऽचरन्ति निषिद्धानि नाचरन्ति चेति कामचाराः, कामत एव सोमादिभक्षणात्सुराद्यभक्षणाच्च कामभक्षाः, कामत एव वेदानां शब्दतोऽर्थतो वाऽऽवर्तनादतिभाषणवर्जनाच्च कामवादाः । एतेषां विहितानामकरणेऽपि ज्ञानिनोऽधःपातहेतुप्रत्यवायाभावाद्विधिबन्धवर्जितत्वेनेत्याह । न च ज्ञानिनोऽपि शास्त्रनिषिद्धमशुभं कर्तव्यमेवेति विधिः । ज्ञानिनो निषेधोऽपि नास्तीत्यत आह– ''ब्राह्मण'' इत्यादि । ''ब्राह्मणो न हन्तव्य'' इत्यादिप्रतिषेधे च ज्ञानिनोऽप्युक्तन्यायेनाधिकृता एव ॥

## तत्त्वप्रकाशिका

एवं केन स्यादित्यस्याविधित्वमङ्गीकृत्याऽर्थ उक्तः । तथैव जैमिनिमतेनार्थान्तरं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ परामर्शमिति ॥ नायं श्रुत्या कामचारो विहितो नाप्ययं सदसत्प्रवृत्तिविषयः । किं तु सदाचारस्यैव नियमेनाचरणमेव श्रुत्योच्यमानः कामचारः । न चात्राचारानुक्तिदोषः । 'प्रातरुत्थाय' इत्यादिश्रुतिस्मृत्युक्ताचारपरामर्शेन श्रुत्या तच्चरणविधानात् । न चैवं नियमेन चरणे केनेति कामचारोक्त्ययोगः । विधिबन्धवर्जितत्वेन स्वेच्छयैव चरणादिति जैमिनिराचार्यो मन्यत इति भावः । किमर्थं सर्वसत्प्रवृत्तौ कामचरणं निमयेनात्रोक्तमित्युच्यते निषिद्धप्रवृत्तिरप्यत्रोक्ता किं न स्यादिति चेत् । किं निषिद्धं ज्ञानिना कर्तव्यमिति स्फुटविधिसद्भावादेतदुच्यते निषेधाभावाद्वा । आद्यं पराचष्टे ॥ न चेति ॥ द्वितीयं पराह ॥ ब्राह्मण इति ॥ अयं च सामान्यनिषेधो ज्ञानिष्वपि वर्तते ॥ १८ ॥

## गुर्वर्थदीपिका

नायं श्रुत्या कामचारो विहित इत्यत्रायं कामचारः शुभाशुभविषये स्वेच्छयाऽऽचरण विहितो न किंतु शुभविषय एवाचरणं विहितम् । तदपि यथाविधिरस्ति तथैव कुर्वन्ति कुत्रापि व्यत्यासं न कुर्वन्ति । तत्करणं च केवलं विधेर्निर्बन्धनादेव न किन्तु धूतमनोम

## भावबोधः

''केन स्यात्'' इति श्रुतेः पूर्वपक्ष्युक्तमर्थं निराकरोति– नायं श्रुत्येति ''स्तुतयेऽनुमतिर्वा'' इत्युक्तं प्रतिक्षिपति– नाप्ययमिति । ''तस्य चरणं कामचार'' भाष्यं व्याचष्टे– किं तु सदाचारस्यैवेति । इत्युक्ताचारपरामर्शेनेति भाष्यं तन्निवर्तनी शङ्कानिरासपूर्वकं व्याचष्टे– न चात्रेति । अत्र ''केन स्यात्'' इति श्रुतौ । परामर्शेनी प्रातरुत्थायेत्यादिश्रुत्युक्ताचाराभिप्रायेणेत्यर्थः । विधिसंबन्धवर्जितत्वेनेति भाष्यं व्याचष्टे– चैवमिति । अयोग इति । विहितत्वस्यैव नियमेन कर्तव्यत्वादिति भावः । ''ब्राह्मणो हन्तव्यः'' इत्येतदज्ञानिमात्रविषयं किं न स्यादित्यत आह– अयं चेति । यथेष्टाचारवि भवतीति पूर्वपक्षयुक्तिनिषेधः ।

## भावदीपः

॥ ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ॥ १८ ॥ अर्थ इति ॥ स्तुत्यनु तिरूपोऽर्थ इत्यर्थः ॥ तथैवेति ॥ विधित्वमनंगीकृत्यैवेत्यर्थः ॥ अर्थांतरमिति ॥ निय सत्कर्ममात्रानुष्ठानपरत्वरूपमित्यर्थः । कामत एवेत्यादिभाष्यं एवकारस्य तस्येत्यत्रा न्वयमुपेत्य तद्व्यावर्त्योक्तिपूर्वं व्याचष्टे ॥ नायमिति ॥ उत्तरत्रानुष्ठेयमध्ये कामचा क्त्याऽत्रार्थलब्धमुपेत्योक्तं नियमेनेति । स्यादिति लिङ्प्रत्ययो विधिनिमंत्रणाम णेत्यादेर्निमंत्रणार्थ इति भावः । परामर्शेनेत्यंतभाष्यं व्यावर्त्यपूर्वं व्यनक्ति ॥ न चात्रेति कामत एवेत्यस्यार्थः स्वेच्छयैवेति । एवकारव्यावर्त्योक्तिर्विधिबंधवर्जितत्वेनेति । अत प्रागेवकारतात्पर्यं व्यक्तीकृतम् । कामचारो न विहित इति । उभयोक्तेः फलवत्त्व विकल्पमुखेन भाष्यं व्याचष्टे ॥ किमिति ॥ आद्यं पराचष्टे ॥ न चेतीति ॥ ननु ईदृश एवे वाक्यशेषे साम्योक्त्यन्यथानुपपत्त्यैव निषिद्धप्रवृत्तिरप्यत्रोक्तेति ज्ञायते । अन्य असाम्याप्रसक्त्या साम्योक्तिवैयर्थ्यापत्तेरिति चेन्न । नियमेन सर्वाचरणप्राप्तसाम स्यानुवादोपपत्तेः । तेन नियमेन सर्वसदाचरणेनेदृश एवान्यथा त्वनीदृश एवेत्यर्थसंभवादि भावः । ननु यदेव विद्ययेत्यादिप्रागुक्तश्रुतेर्मानुषविषयत्वमिवेयमप्यज्ञविषयैवास्त्वित्यत अ ॥ अयं चेति ॥ तत्रेवेह बाधकाभावात् । केन स्यादिति श्रुतेरेव बाधकत्वे चान्योन्याश्रय साम्योक्तिरप्यन्यथोपपन्नेति भावः ॥ १८ ॥

## वाक्यार्थमुक्तावली

ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ

(तत्त्वसुबोधिनी)

सदाचारस्यैवेति । इत्युक्ताचारस्येति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे चात्रेति । अत्र केन स्यादिति श्रुतौ । परामर्शेनेति । प्रातरुत्थायेत्यादि श्रुत्युक्तावा प्रायेणेत्यर्थः । न चैवमिति । विहितस्य नियमेन कर्तव्यत्वादिति भावः । ब्राह्मणो न ह इत्येतदज्ञानिमात्रविषयं किं न स्यादित्यत आह । अयं चेति । सामान्यनिषेध हेतुगर्भविशेषणं अधिकारिविशेषकल्पकाभावात्तदभावेऽपि तत्कल्पने ‘‘चोदनाद्यविशे त्युक्तव्याघातादिति भावः । यथेष्टाचारविधिर्न भवति इति पूर्वपक्ष्युक्तनिषेधः ।

## वाक्यार्थविवरणम्

सदसत्प्रवृत्तिविषय इति ।। सदसत्प्रवृत्त्युभयविषयको नेत्यर्थः ।। अत्र ।। केन स्य श्रुतौ ।। श्रुत्या ।। केन स्यादिति श्रुत्या ।। तच्चरणेति ।। तथा च विहितानां मध्य कामतस्तच्चरणं केन स्यादित्यनेन विधीयत इति भावः ।। अत्रोक्तेति ।। केन स्यादिति उक्तेत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ परामर्शं जैमिनिरचोदना चापवदिति हि ॐ ।। केनस्यादिति श्रुतिः प्रात येत्यादि श्रुत्युक्तसदाचारस्य परामर्शं कृत्वा तत्र स्वेच्छयावर्तनं प्रतिपादयति त्वसदाचारविषया कुतः हि यस्मादचोदनानिषिद्धं कार्यमिति विधिर्नास्ति, प्रत्युत ब्राह्म हंतव्य इति श्रुतिरसदाचारमपवदति निषेधतीत्यर्थः । पूर्वपक्ष्युक्तमर्थं निराकरोति नायमिति ।। स्तुतय इत्यनेनोक्तं निराकरोति ।। नाप्ययमिति ।। ब्राह्मणो न इत्येतदज्ञानमात्रविषयं किं न स्यादित्यत आह ।। अयं चेति ।। यथेष्टाचारविधिर्न भ पूर्वपक्ष्युक्तनिषेधः ।।

## सूत्रभाष्यम्

**।। ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ।। १९ ।।**

**अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन ‘केन स्याद्येन स्यात्तेनेदृश एवे’ (बृ.उ. ५-५-१)ति साम्यश्रुतेः ।**

**‘यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**

## तत्त्वप्रदीपिका

ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ॥ अनुष्ठेयत्वेन विहितानां मध्ये यस्मिन्करवाण कामस्तस्य चरणं यस्मिन्न करवाणीति तस्य निवृत्तिरित्ययं श्रुत्युदितः कामचार इति भगवन्मत तेनेदृश एवेति करणाकरणयोः साम्यश्रुतेः। "यस्त्वात्मरतिरेव स्यादि"त्यादेरयमर्थ उक्तो भगव श्रीमद्गीताभाष्ये– "रमणं परदर्शनादिनिमित्तं सुखम्। तृप्तिरन्यत्रालंबुद्धिः। सन्तोषः तज्ज सुखम्। "सन्तोपस्तृप्तिकारणमि"त्यभिधानात्। परमात्मदर्शनादिनिमित्तं सुखं, प्राप्तः, अन्य लंबुद्धिं च। महच्च तत्सुखं तेनैवालंबुद्धिरिति दर्शयति– "आत्मन्येव च सन्तुष्ट" इति। तत्स्थ सन् सन्तुष्ट इत्यर्थः। नान्यत्किमपि सन्तोषकारणमित्येवेत्यवधारणम्। आत्मना तृप्तः ह्यात्मन्यलंबुद्धिर्युक्ता। तद्वाचित्वं च– "वयं तु न वितृप्याम उत्तमश्लोकविक्रमैरि" प्रयोगसिद्धमिति॥

## तत्त्वप्रकाशिका

एवमस्य वाक्यस्य जैमिनिमतानुसारेण सदाचारविधित्वमेवोक्त्वा यत् स्तुतयेऽनुमतिर्वेत् तदेव प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे॥ अनुष्ठेयमिति॥ केन स्यादिति यथेष्टाचारविधिर्न भ नापि सर्वस्य कर्तव्यताविधिः। किं तु श्रुत्याद्युक्तानामनुष्ठेयानां मध्ये स्वेच्छया केषाञ्चिच केषाञ्चिदचरणमित्यनुज्ञानमेव कामचारश्रुत्यर्थ इति भगवान् बादरायणो मन्यत इति भावः। क सर्वचरणमेवार्थः किं न स्यादित्यत आह॥ केनेति॥ अनुष्ठेयानां मध्य एवायं कामचारो न स केनापि प्रकारेण प्रवृत्तावपि ज्ञानिनः साम्योक्तेः। साम्योक्तिश्चोक्तकामचरण एव सम्यक्सम्ब प्राप्तिसद्भावात्। सर्वाचरणपक्षे तु संभवमात्रज्ञापनं स्यात्। संभवज्ञापनादप्यसं निवृत्तेर्ज्यायस्त्वादिति भावः। सत्यमस्मिन्पक्षे साम्योक्तिः सम्यक्सम्बध्यत इति। तथाऽपि युज्यते। कर्तव्यपरित्यागे साम्यायोगात्। अतो मुख्यापि योजना साध्वीत्यत आह॥ यस्त्वि ज्ञानिनां कार्याभावोक्तेर्न तत्परित्यागे साम्यायोग इति भावः। आत्मरतिः परमात्मद निमित्तसुखमाप्तः। आत्मतृप्तः परमात्मप्रसादेन विषयेष्वलंबुद्धिमाप्तः। तत्कुतः। परमात सन्तोषवत्त्वात्तद्दर्शनादिनिमित्तसुखवत्त्वादिति भावः। एवं केन स्यादिति वाक्यशे यथेष्टाचरणविधित्वाभावमभ्युपेत्यार्थद्वयमुक्तम्॥ १९॥

## गुर्वर्थदीपिका

(गुर्वर्थदीपिका)

सूत्रद्वयोक्तं सदसत्कर्माचरणविधानं ब्रह्मविषयमिति ज्ञेयम् । ब्रह्मण इत्युक्तेऽपि ज्ञा
मित्येव ज्ञातव्यमिति ब्रह्मपदयोग्यवाय्वादीनां ग्रहणायोक्तम् ।

## भावबोधः

नापि सर्वस्येति । जैमिनिमतनिषेध इति ज्ञेयम् । प्राप्तिसद्भावादिति । ''केन स्य
इति वाक्यानुष्ठेयानां मध्ये केषाञ्चित् करणं केषाञ्चिदकरणमित्यर्थत्वे विहिते किञ्चिदक
निमित्तकसाम्यसंभवस्य प्राप्तिसद्भावात् तेनेदृश एवेति साम्योक्तिः प्राप्तासंभवनिवर्तक
सम्यक् संबध्यत इत्यर्थः । सर्वाचरणेति । ''केन स्यात्'' इति वाक्यस्य क
प्रातरुत्थायेत्यादिश्रुत्युक्तसर्वसत्कर्मकरणार्थत्वे तु सर्वकरणस्य च साम्यसंभावकत्वेन ते
एवेति वाक्येन यदि सर्वं कुर्यात्तर्हि सम इति साम्यसंभवमात्रज्ञापनं कृतं स्यादित्य
पक्षद्वयेऽपि साम्योक्तेः सप्रयोजनत्वात् को विशेष उक्तपक्षपरिग्रह इत्यत आह– संभवे
रमणं परदर्शननिमित्तं सुखम् । तृप्तिः अलंबुद्धिः । सन्तोषः तज्जनकं सुखं,''
गीताभाष्यानुसारेण गीतावाक्यं व्याचष्टे । आत्मरतीत्यादिना । विधित्वस्य जैमिनिम
विद्यमानत्वात्ततः पक्षान्तरत्वज्ञापनायाह– यथेष्टाचरणविधिरिति ।

## भावदीपः

।। ॐ अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॐ ।। १९ ।। तदेवेति ।। अनुमतिपर
सदाचारविषयतया व्यवस्थापयत्सूत्रमित्यर्थः । मध्य एवेति भाष्यस्थैवकारव्यावर्त्यमा
यथेष्टेति ।। पूर्वसूत्रोक्तमपि निराह ।। नापि सर्वस्येति ।। सर्वसदाचारस्येत्यर्थः ।
व्याचष्टे ।। श्रुत्याद्युक्तानामिति ।। प्रातरुत्थायेत्याद्युक्तानामित्यर्थः । केन स्य
लिङामंत्रणार्थ इति भावः ।। सर्वेति ।। नियमेन सर्वसाधुकर्माचरणं जैमिन्युक्तमेवार्थः
स्यादित्यर्थः । पूर्वभाष्योक्तसाध्यमेवानूद्य केनेत्यादिभाष्यं विवृण्वन् संयोजयति
अनुष्ठेयानामिति ।। केनापीति ।। करणेनाकरणेनापीत्यर्थः ।। प्राप्तीति
विहिताकरणनिमित्तासाम्यप्रसक्तिसंभवेन तन्निवृत्त्यर्थं कदाचिद्विहिताकरणेऽपि ईदृश ए
एवेति साम्योक्त्यर्थं वाक्यशेषस्य श्लिष्टत्वादित्यर्थः । जैमिनिमते वाक्यशेषोपपत्तिं सू
बादरायणमतेऽतिशयमाह ।। सर्वाचरणेति ।। सर्वाचरणेन संभवद्यत्साम्यं तन्मात्रज्ञा
कृतं स्यात् न तु प्रसक्तासाम्यनिवर्तकमित्यर्थः ।। अत आहेति ।। ननु कथमेतत्स्मृत्य
शंकानिरासः । गीतातात्पर्ये द्वितीये यस्त्वात्मरतिरेवेत्यादि तु मुक्तविषयम् । यस्त्वेवा

(भावदीपः)

''विष्णुप्रसादाद्रतिमांस्तृप्तो विष्णुप्रसादतः ।
विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचर ॥''

इत्याग्नेय इत्यादिना च मुक्तपरत्वोक्तेः । गीताभाष्येऽपि आत्मरतिरेवेत्यवध संप्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यत इत्युक्त्या अमुक्तपरत्वेऽप्यसंप्रज्ञातसम विषयत्वोक्तेरित्यतोऽत्रोदाहरणबलेन प्रकृतोपयोगाय भावमाह ॥ ज्ञानिनामि समाधिस्थस्यापि ज्ञानित्वादिति वा ज्ञानिसामान्यपरत्वमप्यस्तीति वाऽभिप्रायः । परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रालंबुद्धिरिति गीताभाष्योक्तदिशा पदयोरपौन यार्थमाह ॥ आत्मेति ॥ तेनैवान्यत्रालंबुद्धिरिति दर्शयति । आत्मन्येव च संतु भाष्यदिशा हेतुत्वेन योजयति ॥ तत्कुत इति ॥ अर्थद्वयमिति ॥ नियमेन साध्वाच तेष्वेव स्वेच्छाचारपरत्वं चेत्यर्थद्वयमित्यर्थः ॥ १९ ॥

## वाक्यार्थमुक्तावली

ॐ अनुष्ठेयं बादरायणःसाम्यश्रुतेः ॐ ३-४-१९ ॥ सदाचारविधित्वमेवोक्त्वे च विधिबन्धवर्जितत्वेनेत्युक्तिविरोधः विहिताकरणेऽपि नरकाद्यापादकप्रत्यवा विधिबन्धवर्जितत्वेनेत्यस्य प्रवृत्तत्वात् । आनन्दातिशयसिद्ध्यर्थं ह्रासाभावार्थं च परित्यागस्य सदाचारस्य च चरणविधित्वस्यैव जैमिनिनाऽङ्गीकारादविरोधः । यत्तु मतिर्वेत्युक्तं तदेवेति । अनुमतित्वमेवेत्यर्थः । सूत्रेऽनुष्ठेयमित्यनुष्ठेयानामिति विभक्ति व्यत्ययः । निर्धारणे च षष्ठी । कामचार इत्यनुवर्तते । अनुमतिरिति चावर्तते शब्दोऽध्याहार्यः । अनुष्ठेयमिति यथास्थितं च विवक्षितम् । अनुष्ठेयविषयमभ्य मित्यर्थः। तथा चानुष्ठेयानां विहितानां मध्ये यस्मिन् करवाणीति कामः तस्य चरणं करवाणीति कामः तस्याचरणमनुज्ञानमेव केन स्यादिति कामचारश्रुत्यर्थः बादरायणो मन्यत इत्यभिप्रेत्य प्रवृत्तमनुष्ठेयानामिति भाष्यं परिष्कारपूर्वं व्याचष्टे स्यादिति । यथेष्टाचारविधिर्न भवतीति । अन्यविषयमिति । जैमिन्युक्तं म तद्विषयाश्च केचन । सामान्यं भगवत्प्रोक्तं देवादीनां विशेषत इत्यनुव्याख्यानवच भावः । इति भावेनात्रेति । उपलक्षणमेतत् । कर्मणां फलेऽतिशयाधायकत्वमेव न विशेषाधायकत्वमित्यत्रापीति ज्ञेयम् । अत एवेति । देवान्याविषयत्वादेवेत्

(वाक्यार्थमुक्तावली)

तद्विषयत्वस्यापि भावात् तस्यां दिशायां गतिरुक्तेत्यर्थः । तयोर्मानुषेति । कर्मैव देहं दै
मानुषं वेत्यत्र दैविकदेहपदं मनुष्याणामेव देवलोके ज्योतिर्मयदेहविषयमिति भाव
बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यत इत्यनुव्याख्यानं मनसि निधायाह । प्रतिबन्
युक्तेति । एतेन भगवन्मततदितरमतयोःप्रकारान्तरेण विषयव्यवस्था दर्शिता । त
सुधायां । जैमिन्याद्युक्तबलवत्प्रतिबन्धककर्मसद्भावे ज्ञानस्य पुरुषार्थसाधनत्वमभिप्रेत
स्वतन्त्राज्ज्ञानात् स्वर्गादिप्राप्तिर्भवतीत्युक्तवन्तः । तथाच प्रतिबद्धज्ञानविषयं भगव
मवतिष्ठत इति । उक्तं च । तारादेः सूर्यजस्याङ्गसङ्गात् स्वर्गेनागादन्तरिक्षादिहासीदि
तत्र प्रारब्धोपद्वलितात् सूर्यजस्याङ्गादिति विवक्षितत्वादविरोधः । अत्रायं विवेक
स्वर्गादयः कर्मणैव नान्येनैवेत्यपरे विदुरित्युक्तम् । कर्मणैव स्वर्गादिकं न ज्ञा
शेषतयाप्यपयोग इति मुनिमतमधममनुष्योत्तमविषयम् । नन्वेवं चेदधममनुष्येषु ज्ञा
पुरुषार्थसाधकत्वाभावान्न ज्ञानस्य माहात्म्यमिति चेदपरोक्षोत्पादान्तरं यद्यपेक्षितं त
ज्ञानमहिम्ना जातकर्मणैवेति ज्ञानस्य कर्मस्वरूपोपकारकत्वेनापेक्षितत्वेन कर्म
पुरुषार्थहेतुत्वेन ज्ञानस्य माहात्म्यसिद्धेः पूर्वपक्ष्युक्तनिषेधः। नापि सर्वस्येति जैमिनिमत
इति ज्ञेयम् । उक्तकामचरण एवेति । येन करणेन वा स्यात् येनाकरणेन
स्यादित्युक्तकामचरण एवेत्यर्थः । प्राप्तिसद्भावादिति । केन स्यादित्यस्य केषांचित
केषांचिदकरणमित्यर्थत्वे कारणाभावे साम्यं न स्यादित्यसाम्यप्राप्तिसद्भावादित्यर्थ
सम्भवमात्रेति । केन स्यादिति सर्वाचरण उक्ते सर्वचरणसद्भावात् साम्यं सम्भव
साम्यसम्भवमात्रज्ञापनं कुतं स्यादित्यर्थः। पक्षद्वयेऽपि साम्योक्तेः सप्रयोजनत्वात् को
उक्तपक्षपरिग्रह इत्यत आह । सम्भव इति । कार्याभावोक्तेरिति । नन्वतीतानागत
त्रैलोक्योद्धारणक्षमः । एतादृशोऽपि नाचारं श्रौतं स्मार्तं विसर्जयेदिति कार्योक्तेर्विरोध
चेन्न । तेषां विहिताकरणे एष्यदलाभात् तदर्थं कार्यत्वस्य तत्रोक्तावपि सिद्धहान्य
नरकाद्यभावेन च कार्यं न विद्यत इत्युक्तिसम्भवात् ।

## तत्त्वसुबोधिनी

नापि सर्वस्येति । जैमिनिमतनिषेधत इति ज्ञेयम् । कुतो न सर्वेषामननुष्टेयानां क
कामतश्चरणमित्यत आह । केनापीति । अस्तु साम्येक्तिः ततोऽपि किमित्यत अ
साम्योक्तिश्चेति । प्राप्तिसद्भावादिति । केन स्यादिति वाक्यस्यानुष्ठेयानां मध्ये केषाञ्चित
केषाञ्चिदकरणं इत्यर्थत्वे विहिते किञ्चिदकरणनिमित्तकसाम्यासंभवस्य प्राप्तिसद्भावा

(तत्त्वसुबोधिनी)

केन स्यादिति वाक्यस्य कामतः श्रुत्युक्तसर्वाचरणार्थत्वे तु सर्वकरणस्य च कत्वेनेदृश एवेति वाक्येन यदि सर्वं कुर्यात् तर्हि सम इति साम्यसंभवमा स्यादित्यर्थः । पक्षद्वयेऽपि साम्योक्तेः सप्रयोजनत्वात् को विशेष उक्तपक्षद्वय आह । संभवेति । कर्तव्यपरित्याग इति । अनुष्ठेयमध्ये कस्यचिदचरणे क इत्यर्थः । परमात्मप्रसादेऽपि विषयेषु अलंबुद्धिमत्वं कुत इति पृच्छति । त तदुत्तरत्वेनात्मन्येव च संतुष्ट इति व्याचष्टे । परमात्मनि संतोषव सन्तोषेष्वलम्बुद्धिः कुत इत्यत आह । तद्दर्शनेति ।

## वाक्यार्थविवरणम्

जैमिनिमतनिरासायाह ॥ नापि सर्वस्येति ॥ प्रातरुत्थायेति सदाचारस्येत्यर्थः । ननु पक्षद्वयेऽपि साम्योक्तेः असम्भवनिवृत्तिसम्भवज्ञापन वत्त्वादुक्तपक्षपरिग्रहे को विशेष इत्यत आह ॥ सम्भवज्ञापनादिति ॥ योजनेति ॥ सम्भवमात्रज्ञापनरूपेत्यर्थः ॥ इत्यत आहेति ॥ कर्तव्यपरित्याग स्मृत्या आहेत्यर्थः ॥ अर्थद्वयमिति ॥ ज्ञानिस्तुतिरनुमतिमात्रं वेत्यर्थद्वयमित्यर्थः

## वाक्यार्थमञ्जरी

ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ॥ बादरायणोऽनुष्ठेयमवश्यं कर्तव्य कर्तव्यमित्यनुज्ञानं कामचारश्रुत्यर्थं मन्यते कुतः साम्यश्रुतेः, केनापि प्रकारेण एवेति सामान्योक्तेरित्यर्थः । अत्र केन स्यादिति श्रुतावयोग इति विहितस्यै कर्तव्यत्वादिति भावः । नापि सर्वस्येति जैमिनिमतनिषेध इति ज्ञेयम् ॥ प्राप्ति ॥ केन स्यादिति वाक्यस्यानुष्ठेयानां मध्ये केषाञ्चित्करणं केषाञ्चिदकरणमित्यर्थत्वे किञ्चिदकरणनिमित्तकसाम्यासंभवस्य प्राप्तिसद्भावात्तेनेदृश एवेति साम्योक्तिः निवर्तकत्वेन सम्यक् संबध्यत इत्यर्थः ॥ सर्वाचरणेति ॥ केन स्यादिति वाक्य श्रुत्युक्तसर्वाचरणार्थत्वे तु सर्वकरणस्य च साम्यसंभावकत्वेन तेनेदृश एवेति व सर्वं कुर्यात्तर्हि सम इति साम्यसंभवमात्रज्ञापनं कृतं स्यादित्यर्थः । पक्षद्वयेऽपि सप्रयोजनत्वात्को विशेष उक्तपक्षपरिग्रह इत्यत आह ॥ संभवेति ॥ अर्थद्व

## सूत्रभाष्यम्

॥ ॐ विधिर्वा धारणवत् ॐ ॥ २० ॥

'केन स्याद्येन स्यादि'ति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां वि नान्येषाम् । एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राधर्म कार्या । नान्येषमिति वा ।

'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता ।
नाऽऽशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना ।
इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चने'ति हि ब्राह्मे ॥ २० ॥

## तत्त्वप्रदीपिका

विधिर्वा धारणवत् ॥ यथा वेदपाठादिकं ब्राह्मणक्षत्रियविशां विहितं ''स्वाध्यायोऽध्येतव ''वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने''त्यादिना, न शूद्रादीनाम् । प्रत्युत श्रवणोदाह धारणेषु विपुलो दण्डः श्रुतः । एवं स्वमतानुसारिणी प्रवृत्तिर्ब्रह्मदर्शिनां विहिता । तेषां काम नाधर्माशङ्का कार्या । विशुद्धबुद्धित्वात् । नेतरेषां विहिता । किन्तु निषिद्धा च । वाश ज्ञानिनामपि केषाञ्चिदेवेति सूचितं विषयभेदं प्रकटयति– ''स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधि दिते''त्यादिना । नाऽशङ्क्यं विरिञ्चस्य मतं कदाचिदपि । विष्णोः प्रेरणा प्रत्यक्षाऽस्ति हि तस

## तत्त्वप्रकाशिका

अथाऽयं स्वेच्छाचरणविधिर्वा भवतीत्यर्थप्रतिपादकं सूत्रं पठित्वा व्याचष्टे ॥ विधिर्वेति विधिरिति यथेष्टाचरणविधिरित्यर्थः । न ज्ञानिनां स्वेच्छाचरणविधिर्युक्तोऽज्ञानिनामपि तथा प्रसङ्गादित्यत आह ॥ यथेति ॥ विहिता नान्येषामित्यन्वयः । उक्तस्यैव विवृतत्त्वात्पुनर्वाशब्द नायं यथेष्टाचरणविधिः संभवति । अचोदनेत्युक्तविरोधात् । अधर्मकरणस्यापि संभवादित्यत ॥ न तत्रेति ॥ कुतो न तत्राधर्मशङ्का कार्येत्यत आह ॥ स्वेच्छयेति ॥ अत्र ब्रह्मण इत्युक्ते ज्ञानिनामित्येव ज्ञातव्यं विषयविभागस्य वक्ष्यमाणत्वात् । चोदना यत इति शेषः ॥ २० ॥

## भावबोधः

भाष्ये विधिर्वा नान्येषामिति वेति पक्षद्वयोक्तिरिति प्रतीतिनिरासाय

(भावबोधः)

एतद्विषयत्वासंभवेन ''विशेषितत्वात्'' इति तत्सिद्धान्तसूत्रांशेन ब्रह्मैव स्वेच्छानियत
विषयविभागकथनं व्यर्थं स्यादित्यत आह– अत्र ब्रह्मण इत्युक्तेऽपीति । अत एव
ज्ञानिनामित्येवोक्तमिति भावः । उपलक्षणमेतत् । ''ब्रह्मणः स्वेच्छया कृतौ'' इति
प्रजापतेः'' इत्यत्रापि वाक्यद्वयेऽयं न्यायो द्रष्टव्यः । चोदना यत इति । यथेष्टं
विष्णुविहितकरणस्याधर्मत्वशङ्काविषयत्वासंभवादिति भावः ।

## भावदीपः

॥ ॐ विधिर्वा धारणवत् ॐ ॥ २० ॥ अथेत्यर्थांतरद्योतकः । तदेवाह ॥ स्वेच्छे
सर्वसाध्वाचारविधिरिति भ्रमनिरासाय भाष्यार्थमाह ॥ यथेष्टेति ॥ इति वेत
विधिर्वेत्यतः पक्षांतरमेतदिति धीनिरासायाह ॥ उक्तस्यैवेति ॥ तत
वाशब्दाज्ज्ञानिनामपि केषांचिदेवेति सूचितं विषयभेदं प्रकटयति । स्वेच्छयेतीत्युक्त
विषयविभागः क्रियत इति धीनिरासायाह ॥ अत्र ब्रह्मण इत्युक्तेऽपीति ॥ इह
ज्ञानिनामिति उत्तरसूत्रभाष्ये च तैरपीत्युक्ते ज्ञानिनामेवेत्युक्तम् ॥ वक्ष्यमाणत्वादि
त्रेधा हि ज्ञानिन इत्यादिना । तथा च पुनरुक्तिः स्यादिति भावः ॥ २० ॥

## वाक्यार्थमुक्तावली

ॐ विधिर्वा धारणवत् ॐ ३-४-२० ॥ ननु लिङ्लोट्तव्यप्रत्ययाश्रवणात
विधित्वमिति चेन्न । प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्तीत्यत्र प्रतिष्ठाकामो र
कुर्यादिति विध्युन्नयनस्याङ्गीकृतत्वात्तन्न्यायेन केन स्यादित्यत्रापि यथेष्टं ज्ञानिना कर्त
विध्युन्नयनोपपत्तेरिति ज्ञेयम् । जैमिन्याचार्येणापि सर्वसदाचारस्वीकारात् तद्वैलक्षण्य
यथाचरणविधिरित्यर्थ इति । भाष्ये विधिर्वेति नान्येषामिति वेति वाशब्दस्य
श्रवणादस्मिन्नेव सूत्रे पक्षद्वयमुच्यत इति भ्रमनिरासायाह । उक्तस्यैवेति । केन स्य
स्यादिति विधिर्वेत्युक्तस्यैव धारणवदिति दृष्टान्तविवरणपूर्वं एवं स्वमतानु
प्रवृत्तिर्ज्ञानिनां विहिता नान्येषामिति वेति दार्ष्टान्तिकोपपादनव्याजेन निवृत्तत्वादित
ततश्चायं सूत्रार्थः । त्रैवर्गिकाणामेव वेदधारणस्येव ज्ञानिनामेव केन स
यथेष्टाचारविधिर्वेति । विषयविभागस्येति । पारिप्लवार्था इत्यत्र विधिनियता

(वाक्यार्थमुक्तावली)

स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता इत्युक्तमिति भावः । उत्तरत्राप्येवमेव ब्र
स्वेच्छया कृतौ विधिर्भावि प्रजापतेरित्यत्र ज्ञानिन इति सामान्येनैव द्रष्टव्यम् । नाशङ्क
भाष्यस्य तन्मतं पुत्रिकाकामनाद्यधर्मत्वेन नाशङ्क्यमित्यर्थः । न केवलं ब्रह्म स्वे
वर्तेतेति विधिसद्भावात् तन्मतस्य शङ्कानर्हत्वम् । किन्तु विध्यन्तरमस्तीत्याह । विष्णो
यतो विष्णोः प्रत्यक्षचोदनास्ति अतश्च नाशङ्क्यमित्यर्थः ।

## तत्त्वसुबोधिनी

विधित्वस्य जैमिनिमतेऽपि विद्यमानत्वात्ततः पक्षान्तरज्ञापनायाह । यथेष्टा
विधिरिति । तथाभावप्रसङ्गादिति स्वेच्छाचारविधिप्रसंगादित्यर्थः । व्यवहितत्वान्वयम
विहितेति । विधिर्वेत्युक्तस्यैव यथेत्यादिना विवृतत्वादिति भावः । अनेन उक्तमेव वि
तीति । तद्वाक्यमेव । अचोदनेत्युक्तेति । निषिद्धं कर्तव्यमिति विधिर्नेत्युक्तेत्य
अधर्मकरणस्यापीति अपिशब्दस्य समुच्चयार्थत्वेन दूषणान्तरमेतदिति भावः । ननु स्वे
प्रवृत्तिस्तु इति स्मृत्या एतत्सूत्रं चतुर्मुखनिर्णये विषयपारिप्लवा इति श
एतद्विषयत्वासंभवेन विशेषितत्वादिति सूत्रात् सिद्धान्तसूत्रांशेन ब्रह्मैव स्वेच्छानियत
विषयविभागकथनं व्यर्थं स्यादित्यत आह । अत्र ब्रह्मण इत्युक्तेपीति । अत एव
ज्ञानिनामित्येवोक्तमिति भावः ॥

उपलक्षणमेतत् । ब्रह्मणः स्वेच्छयाकृताविति भाष्ये ज्ञानिनमित्युक्तमिति भा
उपलक्षणमेतत् । ब्रह्मणः स्वेच्छया कृताविति भाष्ये प्रजापतेरित्यत्रापि वाक्यद्वयेऽयं म
द्रष्टव्यः । चोदना यत इति । शेषत इति । प्रत्यक्षाचासौ चेति विग्रहः । यथेष्टं कुर
विष्णुविहितकरणस्याधर्मशङ्काविषयत्वासंभवादिति भावः ।

## वाक्यार्थविवरणम्

नायमित्यादि ॥ कुतो नायं यथेष्टाचरणविधिरित्यत उक्तम् ॥ अधर्मकरण
सम्भवादिति ॥ तथा च यथेष्टतोऽधर्माचरणविधिरपि प्राप्तः स्यादित्यर्थः । अस्तु को
इत्यत उक्तम् ॥ अचोदनेत्युक्तेति ॥ न च निषिद्धं कर्म कर्तव्यमेवेति चोदनेत्युक्त
धर्माचरणविध्यङ्गीकारे तद्विरोधः स्यादिति भावः ॥ तत्र ॥ यथेष्टाचरणे ॥ चोदना य
॥ तथा च अधर्माचरणविधिरपि ब्रह्मणो भवत्येव । यथेष्टं कुर्विति प्रत्यक्षतो विष्ण

## वाक्यार्थमञ्जरी

ॐ विधिर्वा धारणवत् ॐ ।। केन स्यादिति ज्ञानिनः कामचारविधिर्वास्तु तर्ह्य ज्ञस्याप्येवं स्यादित्यत उक्तम् ।। धारणवदिति ।। यथा वेदधारणं त्रैवर्णिकानामेव विहि तथा कामचारो ज्ञानिनामेव विहित इत्यर्थः ।। यथेष्टाचारविधिरिति ।। तेन सदाचार विधिमज्जैमिनिमतभेद इति भावः । इत्यन्वयः इति वक्ष्यमाणेनान्वयः । भाष्ये विधिव नान्येषामिति वेति पक्षद्वय उक्तरिति प्रतीतिनिरासायाह ।। उक्तस्यैवेति ।। विधिर्वेत्यं तेनोक्तस्यैव यथा देवेत्यादिना विवृतत्वादित्यर्थः । स्मृतौ ब्रह्मण इत्येवोक्तत्वात्कथंभाष ज्ञानिनामित्युक्तिरित्यत आह ।। अत्रेति ।। कुत इत्यत आह ।। विषयविभागस्येति यद्येतत्स्मृत्यनुसारेणैतत्सूत्रं चतुर्मुखविषयमिति निर्णीयते तर्हिपारिप्लवार्था इति शङ्काया एतद्विषयत्वासंभवेन विशेषितत्वादिति तत्सिद्धान्त सूत्रांशेन ब्रह्मैव स्वेच्छानियत इ विषयविभागकथनं व्यर्थं स्यादिति भावः । चोदना यत इति विशेष इति यथेष्टं कुर्वि विष्णुविहितकर्मकरणस्याधर्मत्वशङ्काविषयत्वादिति भावः ।।

## सूत्रभाष्यम्

**।। ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ।। २१ ।।**

**स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः। तैरपि सामान्यविधिस्वीकारादिति चेन्न अपूर्वत्वात् परवशत्वात् । सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि**

**'विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ ।**
**परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरते'ति ब्रह्मतर्के ।। २१ ।।**

## तत्त्वप्रदीपिका

**स्तुतिमात्रमित्यादिसूत्रम् । स्तुतिरेव स्वेच्छाचरणवचनं न यथेष्टं कुर्यादिति विधिर्युक्तः तैर्ज्ञानिभिरपि ज्ञानदानादिसामान्यविधिस्वीकारात् स्वेच्छाचरणासम्भवात् ज्ञानिस्तुतय इ पूर्वोक्तविरोधाच्चेति चेन्न । अपूर्वत्वात् । नह्ययं विरिञ्चः पूर्वमनादि ब्रह्म भवति, किन्तु तस्**

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ स्तुतिमात्रमिति ॥ यदुक्त स्यादिति स्वेच्छाचरणं ज्ञानिनां विधीयत इति । मैवम् । किं तु पूर्वोक्तस्तुतिरेव । कु ज्ञानिभिरपि संध्यामुपासीतेत्यादिसर्वजनसाधारणविधिस्वीकारात् । स्वेच्छाचरणविधिर्नास्ति तु स्तुतिमात्रमेतदिति न युक्तम् । ज्ञानिनां स्वेच्छाचरणविध्यभावेन स्तुतिविषयत्वे सर्वविध दूरत्वेन स्तुतिमात्रविषयत्वप्रसंगात् । न च तद्युक्तं परमात्माधीनत्वादिति भावः । परमात्मा त्वेऽपि सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वं किं न स्यादित्यत आह ॥ सर्वेति ॥ ज्ञ सामान्यविधिसद्भावात्स्वेच्छाविध्यभावेऽपि न सर्वविधिदूरत्वमित्याशङ्कां परिहर्तुमुक्तार्थे चाह ॥ विधीनामिति ॥ २१ ॥

## गुर्वर्थदीपिका

परमात्माधीनत्वादिति टीकावाक्ये सर्वविध्यतिदूरत्वस्येति प्रागुपस्कर्तव्यम् ।

## भावबोधः

परमात्माधीनत्वादिति । अनेन सूत्रे अः परः परमात्मा पूर्वो नियामको ये अपूव भावः अपूर्वत्वं तस्मादिति सूत्रं परवशत्वादिति भाष्येण योजितमित्युक्तं भवति ।

## भावदीपः

॥ ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ॥ २१ ॥ भाष्ये मा मात्रपदस्य व्याख्यानमेवेत्येतदिति भावेन तद्व्यावर्त्यपूर्वं तदनुवदति ॥ यदुक्तमित स्तुतिरेवेत्यंतेन ॥ सूत्रे पूर्वपदेनानादिब्रह्मोच्यते । अपूर्वत्वादब्रह्मत्वादित्यर्थः । तात्पर्योक्तिर्भाष्ये परवशत्वादित्येवमभिप्रेत्य भावार्थमाह ॥ ज्ञानिनां स्वेच्छेति ॥ तदिति ॥ सर्वविध्यतिदूरत्वप्रकारकस्तुतिमात्रविषयत्वमित्यर्थः । अधीनत्व निनामित्यनुषंगः ॥ स्मृतिं चाहेति ॥ स्मृतौ ब्रह्मण इत्युक्तावपि ज्ञानिन पूर्ववद्ध्येयम् । ज्ञानिनामित्युक्तावपि येषां ज्ञानिनामित्यादिवक्ष्यमाणविभागपर्याल ब्रह्मण एव पर्यवसानात् ब्रह्मण इत्युक्तिः ॥ २१ ॥

## वाक्यार्थमुक्तावली

ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ३-४-२१ ॥ अत्र विधिरित्यन

(वाक्यार्थमुक्तावली)

किन्त्वित्युपस्कार्यम् । तथा च केन स्यादित्यनेन स्वेच्छाचरणं न विधिः न विधीयते किन्तु स्तुतिमात्रं स्तुतिरेव । कुतस्तैरपि विधेः सामान्यविधेरुपादानादिति सूत्रार्थमभिप्रेत प्रवृत्तं स्तुतिमात्रमेवेत्यादिभाष्यं व्याचष्टे । यदुक्तमित्यादिना । भाष्ये स्तुतिमात्रमित्यनु एवेति मात्रपदार्थकथनम् । पूर्वोक्तेति । करणेऽकरणे च मोक्षप्रतिबन्धो नास्ती पूर्वोक्तस्तुतिरेवेत्यर्थः । नापूर्वत्वादित्यत्र नञा निषेध्यमाह । ज्ञानिनामिति । कुतो युक्तमित्यतस्तथात्वमित्यध्याहारः । स्तुतिमात्रमित्यनुवृत्तिः। स्यादिति शेष इत्यभिप्रेत मात्रशब्दव्यावर्त्यकथनपूर्वं योजयति । ज्ञानिनां स्वेच्छाचरणविध्यभावेनेति । स्तुतिमात्रमिति विपर्यये पर्यसानपरत्वेन योजयति । न चेति । तत्र हेतुतया पूर्वत्वादित्यने लब्धमर्थमाह । परमात्माधीनत्वात् । एतेन पूर्वमनादिब्रह्मज्ञानिनो ब्रह्मत्वात् ब्रह्माधीन त्वादिति यावदित्युक्तं भवति । तदुक्तं तत्वप्रदीपे । न ह्ययं विरिंचःपूर्वमनादिब्रह्म भवति किन्तु तस्य परब्रह्मणो वश इति । केचित्तु चतुर्मुखस्यापूर्वत्वात् पूर्वत्वाभावा जगत्कारणत्वाभावात् भगवत एव कारणत्वेन तद्वशत्वादिति यावदित्याहुः । अन्ये तु अ ब्रह्म पूर्वं नेतृ यस्य तस्य भावस्तस्मादित्यर्थमाहुः । अपूर्वत्वात् पूर्वं प्रलयेऽसत्वा भगवज्जन्यत्वाच्चेत्यर्थ इत्येके । विधीनां विषयोऽस्त्वित्यस्य सामान्यविधीनामपीत्यर्थः ।

## तत्त्वसुबोधिनी

अङ्गीकृत्याह । ज्ञानिनामिति । तर्हि सिद्धं नः समीहितमित्याशङ्क्याह । किं त्विति यदि ज्ञानिनां स्वेच्छाचरणविधिविषयत्वाभावेन स्तुतिविषयत्वमङ्गीक्रियते तर्हि तेष विधिमात्रविषयत्वाभावेन सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यादित्यत आह । ज्ञानिना-मिति। तथाच परमात्मसाम्यं स्यादितिभावः । अस्तु तदित्याशङ्क्याह । न चेति परमात्माधीनत्वादिति । अनेन सूत्रे अः परमात्मा पूर्वो नियामको येषां ते तथोक्ताः, तेष भावोऽपूर्वत्वं तस्मादिति सूत्रं परवशत्वादिति भाष्ये व्याख्यातमिति ज्ञेयम् । विधीनामिति स्मृतौ अन्य इत्यत्र ज्ञानिभ्योऽन्ये अज्ञानिन इति ग्राह्यम् । स्वेच्छया कृतावित्यत्र विधिरिति शेषः । तथाच सामान्यविधेः अज्ञानिविषयत्वात् ज्ञानिनां तद्भावेन स्वेच्छाविधेश्चाभावे सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यात् । तच्चायुक्तमिति स्वेच्छाचरणमेव ।

(वाक्यार्थमञ्जारी)

सर्वविध्यतिदूरत्वेन प्रकारेण स्तुत्यत्वप्रसंगात् न चैतद्युक्तं तेषामपूर्वत्वात् अः विष्णुः, प्रेरको येषां ते अपूर्वाः तेषां भावस्तत्त्वं तस्माद्भगवदधीनत्वादित्यर्थः ॥

## सूत्रभाष्यम्

॥ ॐ भावशब्दाच्च ॐ ॥ २२ ॥

'यथाविधानमपरे विधिर्भावे प्रजापतेः ।
ब्रह्मणः परमस्यैव सर्वविध्यतिदूरते'ति च तुरश्रुतौ ॥ २२ ॥

## तत्त्वप्रकाशिका

ननु ज्ञानिनां स्वेच्छाचरणविधेः स्फुटप्रमाणसिद्धत्वे भवेदेतद्वाक्यं तदर्थं तदेव कुत इत्य परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुतिमेवोदाहरति ॥ भावेति ॥ भावे इच्छायाम् । अत स्वेच्छाचरणविधेरर्थसिद्धत्वाच्चशब्दः ॥ २२ ॥

## भावबोधः

अर्थसिद्धत्वादिति । सामान्यविध्यविषयस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छा विषयत्वस्य ''अपूर्वत्वात्'' इत्यनेन अर्थसिद्धत्वादित्यर्थः ।

## भावदीपः

॥ ॐ भावशब्दाच्च ॐ ॥ २२ ॥ श्रौतभावपदार्थमाह ॥ भाव इति ॥ श्रुतौ प्रज रिति ज्ञानिमात्रपरं पूर्ववद्ध्येयम् । अत एव संबंधटीकायां ननु ज्ञानिनामित्युक्त अर्थसिद्धत्वादिति ॥ अपूर्वत्वादित्यनेन परवशत्वोक्त्या स्तुतिमात्रत्वे तद्विरुद्ध विध्यतिदूरत्वस्याब्रह्मधर्मवत्त्वापत्त्या विधेरर्थसिद्धत्वादित्यर्थः ॥ २२ ॥

## वाक्यार्थमुक्तावली

ॐ भावशब्दाच्च ॐ ३-४-२२ ॥ विधिरित्यनुवर्तते । भावशब्दघटितश्रुतेश्च स्वेच्छ विधिरिति सूत्रार्थः । विधिर्भावे प्रजापतेरित्यत्र भाव इत्यस्यार्थमाह । भावे इच्छायामि इच्छानुसार्याचरणमित्यर्थः । यद्वा सूत्रे भावे शब्दः भावशब्दः । तथा च भावे इच

(वाक्यार्थमुक्तावली)

अर्थसिद्धत्वादिति । परवशत्वान्यथानुपपत्त्या सिद्धत्वादित्यर्थः । सर्वविध्यतिदूरत्वेन स्तुति-मात्रविषयत्वे ब्रह्माभेदप्रसङ्गेन तद्वशत्वायोगादिति भावः ।

## तत्त्वसुबोधिनी

ननु स्वेच्छाचारविधौ पूर्वमेकस्य हेतोरनुक्तत्वेन चशब्दायोग इत्यत आह । अतीतसूत्र इति । अर्थसिद्धत्वादिति । सामान्यविध्यविषयस्य ज्ञानिजातस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छाविधिविषयत्वस्यापूर्वत्वादित्यनेनार्थसिद्धत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ भावशब्दाच्च ॐ ॥ विधिर्भावे प्रजापतेरिति श्रुतौ इच्छापरपर्यायभावशब्दप्रयोगाच्च केन स्यादिति स्वेच्छाचारविधिरित्यर्थः ॥ अर्थसिद्धत्वादिति । स्वेच्छाचारविधिरित्यर्थः ॥ अर्थसिद्धत्वादिति ॥ सामान्यविध्यविषयस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छाविधिविषयत्व-स्यापूर्वत्वादित्यनेनार्थसिद्धत्वादित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ॥ २३ ॥**

**'केन स्याद्येन स्यादि' (बृ. उ. ५-५-१)त्यादयः स्थिरत्वनिवृत्त्यर्था इति चेन्न। 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियता अनियताः स्वेच्छानियता इति विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियत' इति गौपवनश्रुतौ विशेषितत्वात् ॥ २३ ॥**

## तत्त्वप्रदीपिका

पारिप्लवेत्यादि सूत्रम् । एवं च स्तुतित्वासम्भवादनुमतौ च फलह्रासस्य समत्वात्, कामत एव विहितचरणस्य विधिबन्धादपि दारुणत्वात्, बादरायणमतेनोपरुद्धत्वाच्च, तस्य पूर्वोक्तिचालितत्वे-नाविशेषितत्वेन च सङ्कीर्णधीगोचरत्वात्, स्वेच्छाविधेः सर्वज्ञानिष्वविततत्वात्, गत्यन्तरा-

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ पारिप्लवार्था इति ॥ जैमिनिमतानुसारेण ज्ञानिभिः समस्तं कार्यमिति प्रातरुत्थायेत्यादिवाक्यान्यनुसृत्योक्तम् । यस्त्वात्मरतिरित्याद्यनुसारेण स्वेच्छाचरणमनुज्ञातम् । पुनश्च यथाविधानमित्याद्यनुसारेण स्वे चरणविधिरुक्तः । त्रयं च केन स्यादित्याद्यर्थतयोक्तम् । एवं च केन स्यादित्यादिव्यपदे यथावस्तुबोधका भवन्ति । प्रकारत्रयप्रतिपादकवाक्यानां परस्परविरुद्धत्वात् । वस्तुनि विकल भवादिति भावः। परिहारांशं व्याचष्टे ॥ नेति ॥ अनियता अनुष्ठेयानां मध्ये कामचारानुज्ञाव

## भावदीपः

॥ ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ॥ २३ ॥ भाष्यं व्याकर्तुं परिष्व ॥ प्रथममित्यादिना ॥ अर्थत्रयस्य प्रामाणिकत्वद्योतनाय वा इत्यादय इति भाष्यस्र वचनोपपत्तये वाक्यांतरसूचनाय वा इत्यादिविधिवाक्यान्यनुसृत्येत्याद्युक्तम् । आदिपदे भाष्योक्तमुपलक्षणम् । अन्यान्यप्येवंजातीयकानि ग्राह्याणीति सूचितम् ॥ अनुज्ञातमि ज्ञानिभिरित्यस्य ज्ञानिनामिति विपरिणामेनानुषङ्गः ॥ विधिरिति ॥ ज्ञानिनामित्यनुष इत्याद्यनुसारेणेत्यादिपदेन स्वेच्छयैव प्रवृत्तिस्त्विति विधीनां विषयास्त्वन्य इत्यादिवाक्य तत्र ब्रह्मादिपदस्य ज्ञानिमात्रोपलक्षणत्वात् । यथाविधानमित्यस्योक्तिस्तु विधिर्वेत्या तदंतमेकार्थपरमिति द्योतनाय वा साक्षाद्विधिपदश्रवणाद्वा श्रुतित्वाद्वेति ज्ञेयम् । व्याचष्टे ॥ एवं चेति ॥ अर्थत्रयपरत्वे सतीत्यर्थः । इत्यादीत्यादिपदेन प्राता येत्त्याद्युक्तत्रिविधवाक्यानां ग्रहः । पुल्लिङ्गनिर्वाहाय व्यपदेशा इत्युक्तम् । स्थिरत्वनि इत्यस्यास्थिरार्थ इत्यक्षरार्थमुपेत्य भावार्थमाह ॥ न यथावस्त्विति ॥ वाक्यानामि सुतरामेकस्यैव केन स्यादित्यस्येति भावः ॥ वस्तुनीति ॥ अनुष्ठानादित्रि विकल्पसम्भवेऽपि साधुकर्माख्यवस्तुनि विधितः कार्यत्वेच्छाकार्यत्वादिरूपविकल्पायो त्यर्थः । यद्वा वस्तुनि ज्ञानाख्यवस्तुनि विधिनियतत्वादिरूपविकल्पेत्यर्थः । अथवा केन स्यादिति वाक्ये विधिपरत्वेच्छाचारपरत्वादिरूपविकल्पेत्यर्थः ॥ २३ ॥

## वाक्यार्थमुक्तावली

ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ३-४-२३ ॥ समस्तकार्यमिति । समस्तमित्यर्थः । स्वेच्छाचरणमिति । विहितानामेव केषांचिच्चरणं केषांचिदचरणमित

(वाक्यार्थमुक्तावली)

स्तुतय इत्यर्थान्तरस्योक्तत्वात् चतुष्टयमिति वक्तव्यम् । तथाप्यत्रोक्तार्थित्वस्य प्रत्येकं त्रिविधाधिकारिनिष्ठतया विरोधस्यापाक्रियमाणत्वात् । स्तुत्यर्थत्वस्य सर्वाधिकारिसाधारणत्वात् विरुद्धार्थविवक्षया त्रयमित्युक्तम् । अतो मनुष्यादिषु सर्वज्ञादिषु स्तुतये भवतीति तत्वप्रदीपवचनात् । परितः प्लवति नानाविषयेषु चलतीति परिप्लवा अस्थिरा बुद्धिः । तस्य भावः पारिप्लवः बुद्धेरस्थैर्यम् । बुद्धिस्थैर्यनिवृत्तिरिति यावत् । तथा च केन स्यादित्यादिश्रुतयः पारिप्लवार्थाः । बुद्धेरेकत्र विषये इदमित्थमेवेति स्थिरत्वनिवृत्तिप्रयोजनकाविरुद्धत्वेन संशयहेतवो यथावस्तुबोधका इति चेदिति सूत्रभाष्ययोरर्थमभिप्रेत्याह एवं सतीति । विशेषितत्वादिति । ज्ञानिनां मनुष्यदेवचतुर्मुखभेदेन विशेषितत्वादित्यर्थः ।

## वाक्यार्थविवरणम्

भाष्ये ''विधीनां विषयास्त्वन्ये'' इत्यनेन ब्रह्मणः सन्ध्यामुपासीतेत्यादिसामान्यविधिविषयत्वमतिः नैवेति भावः ।। समस्तमिति ।। प्रातरुत्थायेति श्रुत्युक्तसमस्तसदाचारचरणमित्यर्थः । स्वेच्छाचरणमिति ।। श्रुत्युक्तसदाचाराणां मध्य एव स्वेच्छाचरणमित्यर्थः पारिप्लवार्था इत्यस्य स्थिरत्वनिवृत्त्यर्था इति भाष्येऽर्थ उक्तः । तस्याप्यर्थमाह । यथावस्तुबोधका न भवन्ति ।। यथावद्वस्तुबोधका न भवन्तीत्यर्थः । विकल्पः विरुद्धधर्मवत्त्वम् । समस्तस्य कर्तव्यत्वस्वेच्छाचरणानुज्ञानस्वेच्छाचारविधीनां विरुद्धानां एकस्मिन् पुरुषेऽसम्भवादित्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ।। उक्तरीत्यार्थत्रयवत्वे केन स्यादित्यादिश्रुतयः पारिप्लवार्थाः अव्यवस्थितार्थाः स्युरिति चेन्न विशेषितत्वात् ज्ञानिनामनेकप्रकारादित्यर्थः ।। वस्तुनीति ।। केन स्यादिति वाक्यार्थे नानारूपत्वासंभवादित्यर्थः ।।

## सूत्रभाष्यम्

**।। ॐ तथा चैकवाक्योपबन्धात् ।। २४ ।।**

**एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च सम्बन्धो भवति ।। २४ ।।**

(तत्त्वप्रदीपिका)

भवति । न मिथो विरोधाशङ्का । स चाभिप्रायः समुचित एव भक्त्यादितारतम्यानुसारित्व
कामाचरणश्रुतिषु च जैमिनिमतं मनुष्यविषयम् । ''जैमिन्युक्तं मानुषाणामि''त्युक्ति
सङ्गच्छते । विधिबन्धवर्जितत्वं विधिनियतत्वं विरुद्धमेकत्रेति चेन्न । उक्तं हि
बन्धवर्जितत्वमकरणे प्रत्यवायाभावादिति । विधिनियतत्वमकरणे फलह्रासात् । तथाच वक्ष्य

''पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् ।
यदात्मनस्सुनियतमानन्दोत्कर्षमाप्नुयादि''ति ॥

''शुभकर्मभिराधिक्यं विपरीतैर्विपर्यय'' इति च । अतः कामाचरणश्रुतिश्च म
सुखाधिक्यार्थविधिगर्भेति सिध्यति । विधिमन्तरेणापि देवानां शुभेषु बुद्धिर्गच्छति, अतोऽ
देवा इत्युक्तम् । शुभेष्वेव ब्रह्मण इति स स्वेच्छानियत इत्युक्तम् । कामाचरणश्रुतेरपि तत्र
यथाधिकारं वर्तमानया देवेषु कामचरणानुमतिरूपतामभिदधदेव परमगुरुः परमेष्ठिनि विधिस
पर्यवसाययन्ननन्तरमेव प्रणिजगाद ''विधिर्वे''ति । अतश्च भगवन्मतं देवविषयम् । एव मतय
सम्बन्धोऽविरोधेन । नचानन्तकालीनं फलाधिक्यं विजानतां ज्ञानिनां कामत एव धर्मचरणं दु
विधिबन्धादपीति मन्तव्यम् ॥

''निषिद्धं मनसा कल्प्य भीतो विहितमाचरेत् । अज्ञो ज्ञस्य तु सङ्कल्पस्वभावाद्विहितानुगः
शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् । तथाऽपि तस्य नानर्थो मोक्षे नैवान्यथा व्रजे

इति धर्मतत

''केन स्याद्येन स्यादि''त्यादिश्रुतेश्चैवमविरोधेन सर्वज्ञानिषु सम्बन्धो गमयितव्यः ।
ब्राह्मण'' इति ज्ञानिषु सामान्यतः प्रवृत्तं हीदं वेदवाक्यं न च विषयसङ्कोचमर्हति । अपव
भावात् । अतो मनुष्यादिषु सर्वज्ञानिषु स्तुतये भवति । विशेषादुत्तरोत्तरं, चतुर्मुखे च मुख्यस्त
सम्भवोऽभ्यधायि । स्तुतेरमुख्यत्वात् स्तुतय इत्याह– आपाद्येऽस्ति हि तथा व्यवहारः,
'हिरण्यं कुण्डलाये''ति । अनुमतिरूपत्वं च विशेषादुत्तरोत्तरं विधित्वस्य सन्निकृष्टं भव
ब्रह्मणो विधिरेव ॥

''स्वेच्छानुवृत्त्यैव भवेत् ब्रह्मणः प्रायशस्तथा । देवानामपि सर्वेषां विशेषादुत्तरोत्तरमि''ति

ह्याह– ''कामचार'' इति कथं विधिः स्यादिति चेत् कामितमेवाऽचरन्तीति श्रुत्यन्तरवि
तानुवादे किं दूषणम् । ''यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनमि''ति वदिति सकलमनाकुल

## तत्त्वप्रकाशिका

ज्ञानिनामनेकप्रकारत्वेऽपि किमासीदित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ तथा चेति

(तत्त्वप्रकाशिका)

ज्ञावाक्यानां यथाविधानमिति स्वेच्छाचरणविधिवाक्यानामविरोधो भवति भिन्नविषयत
संभवात्। तथा च केन स्यादितिवाक्यस्यापि तदनुसारेणास्थिरत्वाभाव इति भावः । अ
जैमिनिमतं मानुषविषयं द्वितीयं देवताविषयं तृतीयं हिरण्यगर्भविषयमित्युक्तं भवति । न
देवतानां स्वेच्छाचरणे विध्यभावप्राप्तेरुक्तमयुक्तम् । प्रायस्तेषां स्वेच्छाचरणविधिसद्भावात
स्वेच्छाचरणेऽनुज्ञानमात्रत्वाच्चेति ॥ २४ ॥

## गुर्वर्थदीपिका

स्वेच्छाचरणविधिसद्भावादित्यत्र सत्कर्मस्वेवेति प्रागुपस्कर्तव्यम् । स्वेच्छाचरणे अ
ज्ञानमात्रत्वादित्यत्र स्वेच्छाचरणमसत्कर्माचरणम् । "सर्वापेक्षा च यमादिश्रुतेरश्ववत
"शमदमाद्युपेतः स्यात्तथापि तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वा"दिति सूत्रद्वयस
तात्पर्यम् । ज्ञानात्प्राक्कृतमग्निहोत्रादिकर्म । "विविदिषन्ति यज्ञेन दानेने"त्यादि श्रुतेज्ञ
प्रत्येव कारणं ज्ञानादुत्तरकालीनं शमदमयज्ञादिकं न ज्ञानसाध्यमोक्षं प्रति कारणम्
"नान्यः पन्था अयनाये"ति श्रुतेः । किन्तु ज्ञानस्थिरीकरणाय वा मोक्षोत्त
कालीनानन्दवृद्ध्यादेर्वा कारणमिति ज्ञेयम् ॥

## भावबोधः

प्रायस्तेषामिति । "स्वेच्छानुवृत्त्यैव भवेत्" "ब्रह्मणः प्रायशस्तथा" । "देवानाम
सर्वेषां" इति वक्ष्यमाणत्वादिति भावः । अनेन "ब्रह्मैव स्वेच्छानियत" इति श्र
"सर्वात्मना" इत्युपस्कर्तव्यमित्युक्तं भवति । अनुज्ञानमात्रत्वाच्चेति । तथा
विधिविषयत्वाभावेऽपि स्तुतिमात्रविषयत्वाभावेन परब्रह्मसाम्याभावात्, अपूर्वत्वात्" इत्
युक्तमित्यर्थः ।

## भावदीपः

॥ ॐ तथा चैकवाक्योपबंधात् ॐ ॥ २४ ॥ भाष्यं व्याचष्टे ॥ एवं ज्ञानिनामिति
अनेनेति ॥ विशेषितत्वशब्दितत्रैविध्योक्तिपूर्वमेकवाक्यत्वकथनेनेत्यर्थः ॥ उक्तमिति
परब्रह्मण एव सर्वविध्यतिदूरतेत्युक्तमयुक्तमित्यर्थः । यद्वा विध्यभावे ह्यनंतकाली

## वाक्यार्थमुक्तावली

ॐ तथा चैकवाक्योपबन्धात् ॐ ३-४-२४ ॥ एकवाक्येति भावप्रधानो निर्देश तथा च तथा सति एवं सति ज्ञानिनां त्रैविध्ये सिद्धे प्रातरुत्थायेत्यादिसर्वसदाचारवि वाक्यानां यथाविधानमिति स्वेच्छाचारविधिवाक्यानां भाष्ये चशब्दात् यस्त्वात्मरति त्याद्यनुज्ञावाक्यानां चैकवाक्यतया विरोधेनोपबन्धात् सङ्गतत्वात् । तथा च केन स्या वाक्यस्यापि तदनुसारेणार्थत्रयेऽप्येकवाक्यतया विरोधेनोपनिबन्धत्वात् केन स्या त्यादिश्रुतयः पारिप्लवार्था इत्यावृत्त्या सूत्रार्थमभिप्रेत्य व्याचष्टे । एवं ज्ञानिनामिति । देवानां तावत् सामान्यविधिस्वीकारो नास्ति । सामान्यविधेर्मानुषविषयत्वात् । न स्वेच्छाचारविधिविषयत्वम् । तस्याश्चतुर्मुखविषयत्वात् । तथा चास्य देवतावि स्तुतिपरत्वपक्षे सर्वविध्यतिक्रमेण स्तुतिविषयत्वं परब्रह्मवद्देवानामपि स्यात् । त परमात्मन एव तदिति यदुक्तं तद्युक्तं स्यादित्याशङ्क्य निराकरोति । न चेति प्रायस्तेषामिति । प्राय इति चतुर्मुखसाम्यनिरासः । तस्य सर्वात्मना स्वेच्छाच विधिविषयत्वात् । न चात्र मानाभावः । प्रायःशब्दः तथा देवानामपि सर्वेषामिति वक्ष माणत्वात् । प्रायस्सतां न मनः पापमार्गे गच्छेदिति ह्यात्ममनश्च सक्तम् । धर्माचला मतिर्हि तदेव मानमित्याद्युदाहरणाच्चेति भावः । तथा च देवानां सर्वविध्यतिक्रमाभावादु युक्तमिति भावः । अनुमतिर्वा । अनुष्ठेयमिति सूत्रानुसारेणाह । स्वेच्छाचरण इति । त चानुज्ञाविषयत्वेन स्तुतिमात्रविषयत्वाभावाच्चेश्वरसाम्यमिति भावः ।

## तत्त्वसुबोधिनी

वाक्यानां परस्परविरुद्धत्वेऽपि अस्तु यथावस्तुबोधकत्वमित्यत आह । अनेनेति ज्ञानिनामनेकप्रकारत्वकथनेनेत्यर्थः । ननु स्वेच्छाचरणविधेः हिरण्यगर्भमात्रविषयत्वे देवा चरणविध्यभावेन यत्पूर्वमुक्त अपूर्वत्वादित्यनेन ज्ञानिनां सामान्यविधिविषयत्वाभा स्तुतिमात्रविषयत्वाभावेन ब्रह्मसाम्याभावादपूर्वत्वादित्युक्तमित्यर्थः ।

## वाक्यार्थविवरणम्

किमासीदिति ॥ केन स्यादिति व्यपदेशानां पारिप्लवार्थत्वं कथं परिहृतमित्यर्थः । अस्थिरत्वाभावः इत्यर्थः ॥ यथावस्तुबोधकत्वाभावो नेत्यर्थः ॥

(वाक्यार्थविवरणम्)

देवानां तदभावप्राप्त्या विधिबन्धवर्जितत्वरूपपरब्रह्मसाम्यप्राप्तेरपूर्वत्वादित्युक्तं परवशत्वम युक्तमित्यर्थः ॥ प्रायस्तेषामिति ॥ अत एवेन्द्रस्याहल्यागमनं अर्जुनस्य विधवायाः उलूप्या गमनं दृष्टमिति भावः । विधिविषयत्वाभावमभ्युपेत्याप्याह ॥ अनुज्ञानमात्रत्वाच्चेति विधिविषयत्वाभावेऽपि स्तुतिमात्रविषयत्वं परब्रह्मणोऽस्ति । तद्वद्देवानां नास्ति विधिविषयत्वाभावेऽपि कामचारानुज्ञामात्रसद्भावेन परब्रह्मवत् स्तुतिमात्रविषयत्वाभावेना पूर्वत्वादित्युक्तं परवशत्वमुपपन्नमिति भावः ॥

## वाक्यार्थमञ्जरी

ॐ तथा चैकवाक्योपबन्धात् ॐ ॥ तथा च ज्ञानिनां त्रैविध्ये सति विधिवाक्यान स्वेच्छावृत्तिवाक्यानां चैकवाक्यतयाऽविरुद्धार्थप्रतिपादकतयोपबन्धात्केन स्यादित्यस्याप्य विरुद्धार्थत्रयवत्त्वमित्यर्थः ॥ उक्तमिति ॥ अपूर्वत्वादित्यनेन भगवदधीनत्वेन सर्वविध्यति दूरत्वाभावकथनमित्यर्थः ॥ प्रायस्तेषामिति ॥ तथा च न तेषां विध्यभावप्राप्तिरिति भावः अनुज्ञामात्रत्वाच्चेति ॥ तथा च विधिविषयत्वाभावेऽपि स्तुतिमात्रविषयत्वाभावे परब्रह्मसाम्याभावादपूर्वत्वादित्युक्तं युक्तमिति भावः ॥ श्रुतिबलेनेति ॥ केन स्यादि श्रुतिबलेन यः सदसत्प्रवृत्त्योरविशेषः शङ्कितः स परिहृत इत्यर्थः । परिह कामकारेत्यादिसूत्रत्रयेण ॥

## सूत्रभाष्यम्

**॥ ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ॥ २५ ॥**

**अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा ।**

**ब्रह्मतर्के च —**

**'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।**
**शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥**
**स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।**
**देवानामपि सर्वेषां विशेषादुत्तरोत्तरमि'ति ॥ २५ ॥**

## तत्त्वप्रकाशिका

एवं ज्ञानिनां श्रुतिबलेन सदसत्प्रवृत्त्योरविशेषः परिहृतः । तत्र यदुक्तं ज्ञानिनां सदस वृत्त्योर्विशेषे ज्ञानस्यासत्प्रवृत्तिकुण्ठितशक्तेर्न मोक्षसाधनत्वं स्यात् । मोक्षसाधने च सत्प्रवृ सापेक्षत्वं स्यादिति । तत्राद्यं चोद्यं परिहृतम् । द्वितीयपरिहाराय सूत्रं पठित्वा व्याचष्टे । एवेति । ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपि नाग्निहोत्रादिसत्प्रवृत्तिसापेक्षत्वं ज्ञा मोक्षसाधने । कुतः । कामचाराणामपि मोक्षस्य पठितत्वादेवेति भावः । ननु यदि सत्प्रवृत्त्य मोक्षो नासत्प्रवृत्त्या तत्प्रतिबन्धः कथं तर्हि ताभ्यां ज्ञानिनो विशेष इत्यत आह ।। ब्रह्मतर्के चेि

## भावबोधः

श्रुतिबलेनेति । ''केन स्यात्'' इति श्रुतिबलेन यः सदसत्प्रवृत्त्योरविशेषः शङ्कितः परिहृत इत्यर्थः । आद्यं चोद्यं परिहृतमिति । ''कामचारेण चैके'' इत्यादिसूत्रेणेत्यर्थ कामचाराणामपीति । अनेन सूत्रभाष्ययोरतःशब्देन ''कामचारेण चैके'' इत्यत्रो ''कामचारा'' इति श्रुतिः परामृश्यत इत्युक्तं भवति । भाष्ये ब्रह्मतर्के चेत्युक्तमुपलक्षणम

'एतावताधिको नास्ति प्राप्तिरत्यन्ततः स्थिता ।
या स्थितिस्तां समाप्नोति यथाशक्ति प्रयत्नतः ।।
विपरीतप्रवृत्तेस्तु तस्य ह्रासोऽधिकं भवेत् ।।'

इति न्यायविवरणोदाहृतमपि वचनं ग्राह्यम् ।

## भावदीपः

।। ॐ अत एव चाग्नींधनाद्यनपेक्षा ॐ ।। २५ ।। श्रुतिबलेनेति ।। केन स्यादि श्रुतिबलेन प्राप्तो यो अविशेषः स स्तुतय इत्यनेन स्तुत्यर्थतोक्त्या परामर्शमि अनुष्ठेयमिति योगाभ्यां सदाचारमात्रविषयतोक्त्या सदसदाचारपरत्वेऽपि चतुर्मुखमात्र विषयतोक्त्या च स्यादिति लिङो विधिनिमंत्रणाद्यर्थत्वेन ज्ञानिमात्रस्य सदसत्प्रवृत्त्योर विशेषानर्पकतया परिहृत इत्यर्थः ।। परिहृतमिति ।। कामकारेण चैक इत्यादावित्यर्थः अप्रसक्तनिषेधकतानिरासाय युज्यते चेति पूर्वभाष्ये प्रसक्तमापादकमनुवदन् व्युत्क्रमेण भाष व्याचष्टे ।। ज्ञानिन इति ।। सद्भावेऽपीति ।।

## वाक्यार्थमुक्तावली

ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ३-४-२५ ॥ द्वितीयपरिहारायेति । तर्क
प्रयोजकत्वकथनेन द्वितीयपरिहारायेति भावः । चोऽप्यर्थे । तेन ज्ञानिनः सदसत्प्रवृ
विशेषसद्भावेऽपीति लभ्यते । ज्ञानस्य मोक्षसाधनत्वमिति शेषः । अग्नेरिन्धनं स
यस्मिन् कर्मणि तदग्नीन्धनमग्निहोत्रम् । अत एव चेति कामचारेण चेत्युक्तस्य परामर्श
भावेन सूत्रार्थं स्पष्टयति । ज्ञानिन इति । कामचाराणामिति । विहितकरणे त
निषिद्धकरणे च मोक्षस्य पठितत्वादेवेत्यर्थः । उक्तं च तत्वप्रदीपे । सुकृतौ विकृतावि
च मोक्षो नियतोऽत एव ज्ञानस्य मोक्षदानेऽग्नीन्धनाद्याश्रमधर्मेषु वर्णधर्मेषु चानपेक्षते
इत्यत आहेति । इत्यतश्चशब्दसूचितस्मृतिमुदाहरतीत्यर्थः । अत्र येषां ज्ञानं समुत्पन्नं
शुभाशुभकर्मकरणेऽपि मोक्षो विनिश्चित इत्युक्तस्तुतित्वं सर्वाधिकारिसाधारणम् ।
मनुष्याणां मोक्षार्थमग्निहोत्रादीनां तत्प्रतिबन्धाय कलञ्जभक्षणादीनामनपेक्षित
जैमिन्युक्तरीत्या तेषां सर्वसत्कर्मणां निषिद्धत्यागानां सामान्यतो विहितत्वेन तत्क
करणाभ्यां स्वरूप एव वृद्धिह्रासौ भवतः । ब्रह्मणस्तु स्वेच्छानुवृत्त्यैवाधिक्यं भवेत्
तदर्थं श्रुतिविहिताग्नीन्धनाद्यपेक्षा । लोके निषिद्धपुत्रिकाकामत्यागापेक्षा च स्वेच्छानि
विहितत्वादेव । देवानामपि सर्वेषामुत्तरोत्तरमाधिक्येन प्रायशः स्वेच्छानुवृत्त्यैव
क्लृप्तसुखाधिक्यं भवेत् । न तदर्थं प्रायः श्रुतिविहिताग्निहोत्राद्यकरण- निषिद्धत्यागापेक्ष
प्रायशः स्वेच्छानियतत्वात् । तेषामनुष्ठेयानां मध्ये कामचारानुज्ञावत्वेनानियतत्व
ब्रह्मतर्कवचनं सूत्रं च सर्वविषयमिति प्राञ्चः ।

## तत्त्वसुबोधिनी

श्रुतिबलेनेति । केनस्यादिति श्रुतिबलेन यः सदसत्प्रवृत्योरविशेषः शङ्कितः सः प
इत्यर्थः । आद्यं चोद्यं परिहृतमिति । कामकारेणचैके इत्यादिषु इत्युक्तं भवति ।
सत्प्रवृत्तेः मोक्षसाधनत्वे कामचाराणां मोक्षो न स्यात् तेषां सत्प्रवृत्तिविशेषाभावात् ।
तेषां मोक्षप्रतिपादकश्रुतिबाध इत्यत आह । कामचाराणामिति । कामचारत्वेन
सत्प्रवृत्तेरपि करणादिति भावः । असत्प्रवृत्तेः मोक्षप्रतिबन्धकाभावमात्रस्यैव का
श्रुत्यर्थत्वात्सत्प्रवृत्तेः मोक्षहेतुत्वानिरासान्न तद्विरोध इति भावः ।

(वाक्यार्थविवरणम्)

मोक्षसाधनत्वे ॥ अङ्गीक्रियमाणे सत्प्रवृत्तिसापेक्षत्वमिति । तथा च मोक्षस्य ज्ञान समुच्चयसाध्यत्वं स्यादिति भावः ॥ मोक्षस्य ॥ लिङ्गभङ्गस्य । भाष्ये मोक्षो विनि इत्यत्र ॥ मोक्षः ॥ लिङ्गभङ्गः । शुभकर्मभिराधिक्यमित्यनेनानन्दाभिवृद्धिरूपे समुच्चयसाध्यत्वमङ्गीकृतमिति भावः । शुभकर्मभिराधिक्यमित्युक्त- मसदित्याशयेन शङ्क ननु यदीति ॥ ज्ञानिनः सत्प्रवृत्त्या मोक्षप्राप्तिरेव विशेषोऽस्तु । किमाधि रूपविशेषाङ्गीकारेणेत्यर्थः ।

## वाक्यार्थमञ्जरी

ॐ अत एव चाग्नींधनाद्यनपेक्षा ॐ ॥ ज्ञानस्य मोक्षजनने अग्नेरिंधनं दीपनं यरि ग्नींधनमग्निहोत्रं तदाद्याश्रमकर्मापेक्षा नास्ति कुतः अत एव कामचारा इति कामचारेऽपि मोक्षस्य नैय्यत्यस्योक्तत्वादेवेत्यर्थः ॥ कामचाराणामिति ॥ सत्कु मसत्कुर्वतां चेत्यर्थः ॥ असत्प्रवृत्तेरिति ॥ तथा चासच्चरणमेव कामचरणं सदकरणमपीति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ २६ ॥**

**सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाश (बृ. उ. ६-४-२२)ति श्रुतेः । यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न विनि गतेर्ग्रामादिप्राप्तौ ॥ २६ ॥**

## तत्त्वप्रदीपिका

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ वर्णधर्मेष्वध्ययनेज्यादानादिष्वाश्रमधर्मेष्वग्नीन्ध वासाग्निहोत्रपञ्चयज्ञतपोपास्त्यादिपु सामान्यधर्मेषु भक्त्यादिपु नैमित्तिकेषु श्रद्धादिषु च ज्ञानस्योत्पत्तौ, ''तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने''त्यादिश्रुतेः । यथा नि प्रयाणो ग्रामं प्राप्नोति किमपि साधनमनपेक्ष्य, नहि तत्र साधनापेक्षावकाशः, अनि प्रयाणस्त्वश्वादिकमपेक्षते तन्निष्पत्तये, एवं ज्ञानोत्पत्तये साधनमपेक्ष्यते । उत्पन्नज्ञानस्य तु मुक्ति

## तत्त्वप्रकाशिका

अस्तु ज्ञानिनः सत्प्रवृत्त्या विशेषान्मोक्षप्राप्तिः किमाधिक्येन । कामचाराणां मोक्षश्रुतिस्तु बाधिका । असत्प्रवृत्तेरप्रतिबन्धकत्वेऽपि सत्प्रवृत्तेर्मोक्षहेतुत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्य व्याचष्टे ॥ सर्वेति ॥ न ज्ञानस्य मोक्षसाधने सत्प्रवृत्त्यपेक्षा । सर्वसत्प्रवृत्तीनां ज्ञानोत्पत्त्य मपेक्षितत्वात् । विविदिषन्तीति श्रुतेरिति भावः । अनाशकेनानशनेन । ननु सत्कर्म ज्ञानार्थस्यापि मोक्षार्थमपेक्षितत्वं किं न स्यादित्यत आह ॥ यथेति ॥ यथा गतिसाधनाश्वाद निष्पन्नायां गतौ गतिसाध्यफले नापेक्ष्यन्त तथा कर्माणि ज्ञानसाधनानि ज्ञाने निष्पन्ने तत्फलार्थमपेक्षितानीति भावः ॥ २६ ॥

## भावदीपः

॥ ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ २६ ॥ अत एवेत्युक्तहेतोरन्यथा सिद्धिनिरासकतयोत्तरसूत्रमवतारयति ॥ अस्त्विति ॥ ज्ञानस्येत्यादिपूर्वभाष्यमनुवर्त्य त हेतुत्वेन सर्वेत्यादिभाष्यं व्याचष्टे ॥ न ज्ञानस्येति ॥ अत्रोक्तहेतोरप्यप्रयोजकत्वनिरासकत यथेत्यादिभाष्यं व्याचष्टे ॥ नन्विति ॥ २६ ॥

## वाक्यार्थमुक्तावली

ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ३-४-२६ ॥ न बाधिकेति । कामचारा कामभक्षा इति श्रुतौ स्पष्टं सत्कर्मकरणेऽपि मोक्ष इत्यनुक्तेरिति भावः । सूत्रे चोऽवधारणे ज्ञानस्योत्पत्तावित्यध्याहृतेन सम्बद्ध्यते । यज्ञादिश्रुतेरिति । यज्ञादीनां ज्ञानसाधन त्वश्रुतेरित्यर्थः । यज्ञादिना विविदिषन्ति वेत्तुं इच्छन्तीत्युक्ते ज्ञानसाधनत्वप्रतीतेः । अश्ववत् अश्वस्य गत्युत्पत्तावपेक्षैवेति भावेन सूत्रार्थं स्पष्टयति । न ज्ञानस्येति । सर्वसत्प्रवृत्ती-नामिति । अध्यापनं शौर्यं वार्ता शुश्रूषादिसर्वधर्माणां गुरुकुलवासाग्निहोत्रपञ्चमहायज्ञत-पउपास्त्यादीनां आश्रमधर्माणाम् । सामान्यधर्माणां शमदमभक्त्यादीनाम् । नैमित्तिकान श्रद्धादीनामिति तत्वप्रदीपोक्तसर्वसत्प्रवृत्तीनामित्यर्थः ।

## वाक्यार्थविवरणम्

(वाक्यार्थविवरणम्)

तथा च स एव सत्प्रवृत्त्या जायमानो विशेष इति भावः ॥ मोक्षः ॥ लिङ्गभ
विविदिषन्ति ॥ वेत्तुमिच्छन्ति ।

## वाक्यार्थमञ्जरी

ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ सर्वापेक्षा सर्वसत्कर्मापेक्षा च ज्ञानो थर्मेव न मोक्षे कुतः यज्ञादिश्रुतेः यज्ञेनेत्यादिना यज्ञादेर्ज्ञानसाधनत्वश्रवणात् त साधनत्वमस्त्वित्यत उक्तम् । अश्ववदिति ॥ यथा गमनसाधनाश्वस्यगमनहेतुत्वमित विविदिषन्ति जानन्ति ॥

## सूत्रभाष्यम्

॥ ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्या त्वात् ॐ ॥ २७ ॥

यद्यपि ज्ञानेनैव मोक्षो नियतस्तथाऽपि ज्ञानी शमदमाद्युपेतः स्यात् । 'आ द्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेद्दान्तो भवेदनुकूलो भवे परिचरेत्परिचरेदाचार्यमि'ति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः । 'ब्राह्मीं व उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायत यो वा एतामुपनिषदमेवं वेदे' (के. उ. ४-७८, ९) ति ज्ञानाङ्गतया तेषामव ष्ठेयत्वात् ।

'यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा ।
तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः ॥
अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेदि'ति आग्नेये ।

तुशब्दः पूर्णफलार्थत्वं सूचयति ॥ २७ ॥

## तत्त्वप्रदीपिका

शमदमाद्युपेतः स्यादित्यादि सूत्रम् ॥ परिचरेदिति । द्वितीयोक्तिस्तात्पर्यार्था । अ स्समस्माच्छ्रेयांसं चाऽऽचार्यं बहुमानेन परिचरेदिति वाऽर्थः । ''ये के चास्मद्विधाः तानुपास्व तानुपचरस्वे''ति श्रुतेः । ''ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दम प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लो प्रतितिष्ठति प्रतितिष्ठती''ति तलवकारश्रुतिः । उत्पन्नज्ञानस्यापि ज्ञानवृद्ध्यर्थं शमा

(तत्त्वप्रदीपिका)

''शान्तिस्तु भगवन्निष्ठा दमो मदविनिग्रहः । हृदिस्थविष्णौ सन्तोषः सदैवोपरमः
तितिक्षा द्वन्द्वसहना क्षमा क्रोधासमुत्थितिरि''ति शब्दनिर्णये ॥

''विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् । तपोदमस्वधर्मेषु ये स्थिरास्तेषु तिष्ठ
विद्यास्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः । वेदैतामेवमखिलां यौ विष्णौ प्र
इति

उक्तं च भूयो भगवत्पादैरेव तलवकारोपनिषद्भाष्ये– ''सप्रतिष्ठां सायतनामुपनिष
सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्याय
तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा ॥

''निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयै
सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चय'' इति शब्दनिर्णये ॥

''ऋग्यजुस्सामाथर्वाख्या पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम्
वेदा इत्युच्यते सद्भिः शिक्षाद्याः स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतन
विद्यानिण

## तत्त्वप्रकाशिका

यदि सदसत्प्रवृत्तिभ्यां मोक्षतदभावाभावः न तर्हि ताभ्यां विशेषो ज्ञानिन इति स्वीकार्यमसत्याज्यम् । न च मोक्षाधिक्यादिविशेषः । ज्ञानादेव तदुपपत्तेरित्याशङ्कां मुपन्यस्य व्याचष्टे ॥ शमेति ॥ यद्यप्यस्ति ज्ञानिनो मोक्षस्तथाऽपि ज्ञानिनः शमदमा भवितव्यम् । तथा विधिसद्भावादित्यर्थः । ज्ञानादेव मोक्षसिद्धेर्व्यर्थो विधिरित्य ब्राह्मीमिति ॥ न ज्ञानिनः शमदमादिवैयर्थ्यम् । ज्ञानप्रतिष्ठापकत्वेन तेपामवश्यान् भावः । तपआदि प्रतिष्ठेति । तद्वत्सुविद्या प्रतितिष्ठतीत्यर्थः । सत्यं मीमांसा । आय कारणम् । ननु ज्ञानादेव मोक्षसिद्धौ किं प्रतिष्ठयेत्यत आह ॥ यस्येति ॥ ज्ञानमात्रेण मो शमाद्यङ्गयुक्तेन संपूर्णो भवति नान्यथाऽतस्तदनुष्ठेयमिति भावः । एतत्सूत्र एव किं आह ॥ तुशब्द इति ॥ २७ ॥

## भावबोधः

## भावदीपः

ॐ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात् ॐ ।। अत एव कामकारेण चैक इति सूत्रद्वयोक्तप्रमेयाक्षेपसमाधिपरतयोत्तरसूत्रमवतारय यदीति ।। मोक्षेति ।। मोक्षश्च तदभावश्च मोक्षतदभावौ तयोरभावः । सत्प्र मोक्षोऽसत्प्रवृत्त्या तदभावो न चेदित्यर्थः ।। न तर्हीति ।। तथा च युज्यते भाष्यमयुक्तमिति भावः । सौत्रतुशब्दव्यावर्त्यं व्यनक्ति ।। न चेति ।। ह्रास आदिपदा भाष्यं व्याचष्टे ।। यद्यपीति ।। शमदमादिशब्दार्थो जिज्ञासासूत्रेऽभिहितः ।। सत्प्रवृत्त्ये असन्निवृत्त्या चेत्यपि ग्राह्यम् । विधीत्युपलक्षणम् । ब्राह्मणो न हंतव्य इत्यादिनि सद्भावादित्यपि ध्येयम् । एवमग्रेऽपि । सूत्रादावपि शमदमाद्युपेत इत्येतन्निषिद्धाकार स्यादित्यस्योपलक्षणम् । तद्विधेरित्यपि तन्निषेधादित्यस्येति ज्ञेयम् । अत एव संबंधटी सदसत्प्रवृत्तिभ्यामित्यादिद्विवचनोक्तिः । उत्तरत्रापि यदि सदसत्प्रवृत्तिभ्यामित्युक्ति तपआदेर्विद्याधारत्वायोगात्तलवकारभाष्योक्तमर्थमाह ।। तप इति ।। तपो दमः स्वधर्मे स्थिरास्तेषु तिष्ठतीति स्मृतेरिति भावः । निर्णीयते यतः सम्यगिदं सत्यमिति स्फुट श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया ।। सम्यगित्युच्यते तस्मान्मीमांसेति स्मृतेरा सत्यमिति ।। उत्पत्तीति ।। विद्योत्पत्तीत्यर्थः ।। २७ ।।

## वाक्यार्थमुक्तावली

नन्वधिकोपदेशादित्यत्र मुक्तावानन्दातिशयस्य सत्प्रवृत्तिसाध्यविशेषत्वस्योक्तत्वात् तदभाव इत्याशङ्क्य निषेधति । न चेति । ज्ञानादेवेति । कर्मसाध्यस्याप्यतिशयस्य पुरु त्वेन ज्ञानादेवोपपत्तेः। अन्यथा ज्ञानादेव सर्वे कामा इत्यस्य सङ्कोचप्राप्तेस्तत्कारकाभाव नच ज्ञानादेव सर्वे कामा इत्युक्तास्तथापि यथा यथा कर्म कुरुते तथा तथाधिको भव कर्मणाधिक्योक्तेः ज्ञानसाध्ये कर्मणा विशेष इति वाच्यम् । मुक्तावपेक्षिताधिक्ये कारणं कर्मापि कारणान्तरम् । न ह्येकस्यैकं कारणमिति नियमः । स्वर्गस्य परस्प पेक्षानेकहेतुत्वदर्शनात् । तथा च मोक्षार्थमपेक्षितज्ञानादेव सर्वातिशयलाभसम्भवात् णोऽवश्यानुष्ठेयत्वाभावात् । अनुष्ठितं सत्कर्म ज्ञानवन्मोक्ष एवोपयुज्यत इति वक्तव्य तथात्वे समुच्चयवादप्राप्तेः न सत्प्रवृत्त्या को विशेष इति पूर्वाक्षेप इति भावः । यद्यपी मोक्ष इत्यनन्तरं न तदर्थं कर्मापेक्षेति पूरणीयम् । विधिसद्भावादिति । ननु त

(वाक्यार्थमुक्तावली)

कुर्यादित्यादिविधीनां परोक्षज्ञानिविषयत्वोपपत्तेः । देवताचारस्य मुक्तवल्लीलात्वोपपत्तेरित्य आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेदित्यादिना स्पष्टमपरोक्षिण एव तेष शमादीनां विधेः ज्ञानी शमाद्युपेतः स्यान्न तत्रानादरो युक्तः विहितत्वादि प्रतिपादनादगतार्थत्वसम्भवात् ज्ञानादेव मोक्षसिद्धेरिति । अविद्यानिवृत्तिवत्प्रचुरतरानन्द वत्तद्गतानन्दातिशयस्यापि सिद्धेः । तदसाध्यस्याभावादानन्दातिशयाय प्रथमभाव्युपाये स गुरूपायानुसरणं व्यर्थमिति भावः ।

ज्ञानप्रतिष्ठापकत्वेनेति । स्यादेतत् । यदि कर्मणां मौक्तानन्दातिशये स्वतन्त्र कारणत्वमभ्युपगच्छामः । न चैवं किन्नाम, ज्ञानप्रतिष्ठापकत्वेनैव । प्रतिष्ठापकत्वं चातिशय फलसम्पादने ज्ञानदार्ढ्यहेतुत्वम् । तदुक्तं तत्वप्रदीपे । उत्पन्नज्ञानस्यापि दार्ढ्य शमादीनामवश्यानुष्ठेयत्वमिति । दार्ढ्यं च फलोन्मुख्यमिति ज्ञातव्यम् । नन्वेवमुत्त भाविकर्मणो ज्ञानदार्ढ्यहेतुत्वे तुल्यं तु दर्शनमिति सूत्रविरोधः । तत्र चीर्णीकृते वा ज्ञान न विशेषोऽस्ति कश्चनेत्युक्तत्वादिति चेन्न । तत्राविद्यानिवृत्तिरूपमोक्षाख्यफलोन्मु राजसूयादिकृतावकृतौ च तुल्यदर्शनमित्युक्तम् । इह तु ज्ञानमात्रेण मोक्षसिद्धाव फलातिशयार्थं कर्मणां ज्ञानप्रतिष्ठापकत्वमुच्यते । कुतो विरोधः । केचित्तु ज्ञानप्रतिष्ठापक नाम प्रतिदिनं तत्सम्पादकत्वमित्याहुः । यद्यपि तस्यै तपः कर्मेत्यत्र परोक्षज्ञानं प्रकृतम् शब्दमायतनमिति शब्दकरणकत्वोक्तेः । तथापि तदपरोक्षपर्यवसायीत्यपरोक्षस्य प्रकृतत्वम् । यो वा एतामुपनिषदं वेदापहत्य पाप्मानमेनं ते स्वर्गे लोके ज्येये प्रतितिष्ठती वेदनस्य मुक्तौ प्रकर्षेण स्थितिहेतुत्वकथनादिति ज्ञेयम् ।

## तत्त्वसुबोधिनी

तपो दमः कर्मेच विद्यायाः प्रतिष्ठा तद्वत्सु विद्या प्रतितिष्ठतीति तलवकारोपनिषद्भ मनसि निधायाह । तप आदीति ।

## वाक्यार्थविवरणम्

मोक्षतदभावेति ॥ सत्प्रवृत्त्या मोक्ष असत्प्रवृत्त्या तदभाव इत्यर्थः ॥ आधिक्यम्

## वाक्यार्थमञ्जरी

ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्
तथापि ज्ञानस्यैव मोक्षहेतुत्वेऽपि ज्ञानी शमादिसद्वृत्त्युपेतःस्यात्कुतः तद्विधेः
शमदमाद्युपेतत्वस्य आचार्यादिति श्रुतौ विधेर्विहितत्वात् । किमर्थं विधिरित्यत उ
तदित्यादि । तदङ्गतया ज्ञानाङ्गतया तेषां शमादीनामवश्यानुष्ठेयत्वादित्यर्थः ॥

## सूत्रभाष्यम्

॥ ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ॥ २८ ॥

'यदि ह वा अप्येवंविन्निखिलं भक्षयीतैवमेव स भवती'ति सर्वान्ना
प्राणात्ययविषया । 'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदप
(छां. उ. १-१०-४)ति (तद्)दर्शनात् ॥ २८ ॥

## तत्त्वप्रदीपिका

''शुभकर्मभिराधिक्यं विपरीतैर्विपर्यय'' इत्युक्तम् । अन्यथाऽल्पफलं भवेदि''ति च
कथमियं श्रुतिः ''यदि हवा एवंविन्निखिलं भक्षयीतैवमेव स भवती''ति ? अत्रोक्त
सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । आपत्काल्पोऽसौ, ज्ञानिनः प्राणात्ययप्राप्तौ निषिद्ध
दावपि न फलह्रासः । ''नवा अजीविष्यमिमानखादन्निति होवाच कामो म उदपान
यथालब्धाशनाविरोधदर्शनात् । तथाहीभ्याद्भिक्षितांस्तदुच्छिष्टान्कुल्मापान्भक्षयन् चा
ब्रह्मवि''द्धन्तानुपानमि''त्यनुपानदित्सया तेनोक्त ''उच्छिष्टं वै मे पीतं स्यादि''ति न प्रति
''न स्विदेतेऽप्युच्छिष्टा'' इति तेनोक्ते ''नवा अजीविष्यमिमानस्वादन्नि''त्याद्याह । य
पानमित्यनुपानप्रत्याख्यानात् प्राणधारणादधिकं नानुमतमित्यध्यवसीयते ॥

## तत्त्वप्रकाशिका

ननु यदि सदसत्प्रवृत्तिभ्यामस्ति ज्ञानिनो विशेषस्तर्हि कथमेवंविन्निखिलं भक्षयीतै
निषिद्धान्नभोजनेऽपि ह्रासाभावोक्तिः संभवति । अतो न विशेषः स्यादित्याशङ्कां प
पठित्वा व्याचष्टे ॥ सर्वेति ॥ नैतत् श्रुतिबलेन ज्ञानिनोऽसत्प्रवृत्त्या विशेषाभावो वक्तव्यः
श्रुतेः प्राणात्ययविषयत्वात् । यदि प्राणात्ययकाले ज्ञानी निषिद्धं भुंजीत तर्हि न तेन तस्
इति साधारणश्रुतेः कुतः प्राणात्ययविषयत्वकल्पनम् । लिङ्गदर्शनादेव । चाक्रायणेनेभ्य

(तत्त्वप्रकाशिका)

**स्विदेतेऽपि कुल्माषा उच्छिष्टा इति । तत्र मुनिरुवाच । यदीमान्कुल्माषान्नाभक्षयं तर्हि न मे जी भवति । अतः प्राणात्यये दोषाभावात्ते भक्षिताः । जलपानं तु ममेच्छाधीनमिदानीमपि वर्त वृथोच्छिष्टस्वीकारे दोषप्राप्तेर्न तत्पिबामीति । अतो न कर्तव्यमेव ज्ञानिनापि निषिद्धमिति भाव**

## गुर्वर्थदीपिका

चाक्रायणेनेभ्योच्छिष्टकुल्माषानित्यत्र चाक्रायणो नामानसोऽधस्ताद्रथचक्रयोर्मध्ये श वानुषस्तिनामकः ऋषिः चाक्रायणपदेनोच्यते । इभ्यः इभयन्ता कुल्माषाः वन इत्यर्थः । एवं चास्मिन्नधिकरणे ज्ञानिनां मनुष्याणां नियमेन शुभकर्मस्वेव विधिबद्धाना बन्धनिर्बन्धं विना स्वेच्छयैव प्रायशः कर्तव्यशुभकर्मस्वेव प्रवृत्तिः स्वेच्छयैव कदाऽप्यव व्याकरणं च । अशुभकर्मणि त्वाज्ञाऽपि न । तत्करणे तु मोक्षे आनन्दह्रासश्च । ' स्याद्येन स्यात्तेनेदृश एवे''ति वचनान्नियमेन शुभकर्मस्वेव विधिबलात्प्रवृत्तिमतां देवान शुभाशुभकर्मस्वपि प्रवर्तनेऽनुज्ञामात्रम् । कदाचित्कर्तव्यकर्मणोऽप्यकरणमधिकम् । ब्रह्म विधिनिर्बन्धं विना स्वेच्छया प्रायशःशुभकर्मणामेव करणम् । कदाचिदशुभकर्मकरणे विधिश्चोच्यते । उत्तमाधिकारित्वेन भगवतोऽतिप्रियत्वेन च पापालेपेऽपि शक्तत्वात् । एव पुत्रिकाकामनादिकं ब्रह्मणा कृतम् । यद्यपि त्रिविधजीवन्मुक्तानामप्यस्त्येव शुभ विधिबन्धः । तथाऽप्युत्तरोत्तरेषां क्रमेण ज्ञानसामर्थ्याधिक्यप्रदर्शनायैवमुक्तम् । विष्ण सर्वविध्यतिदूरत्वेन महामाहात्म्यम् । यद्यपि मुक्तानामपि सर्वविधिदूरताऽस्ति । तथ संसारे विधिसद्भावादतिदूरता नास्ति । लक्ष्म्यास्तु जीवकोटावप्रवेशादीश्वरकोटावेव प्रवेश तस्या अपि भगवदाज्ञारूपविधिसम्भवान्न भगवत्साम्यमिति तात्पर्यमवगन्तव्यम् । त भागवते रुक्मिणीरूपश्रिया ''यर्ह्यस्य वृद्धय उपात्तरजोतिमात्रो मामीक्षसे तदुह परमानुकम्पे''ति ॥

## भावबोधः

''कथं यदि हवेति'' श्रुतेः प्राणात्ययविषयत्वमित्यतस्तां व्याचष्टे । यदि प्राण यकाल इति । शेषपूरणमेतदिति ज्ञातव्यम् । चरतिर्गतिरिति भक्षणस्य पृथगुक्तेरिति भाव पूर्वं शमाद्युपेतः स्यात्तथापि त्वित्यत्र ''तु''शब्देन सत्प्रवृत्तेः पूर्णफलत्वसाधनेऽसत्प्र

(भावदीपः)

भाष्योक्तश्रुतावित्यर्थः ॥ अत इति ॥ तादृशोक्तिबलादित्यर्थः । श्रुतिगत्युक्तेरसा
निरासाय चशब्दस्य शङ्कानिवर्तकत्वमुपेत्याह ॥ नैतदिति ॥ श्रुत्यारूढतया दर्शयति ।
प्राणेति ॥ भाष्यशेषं व्यनक्ति ॥ साधारणेति ॥ लिङ्गेति ॥ प्राणात्ययज्ञा
मुनिवचनरूपस्य छांदोग्ये प्रथमाध्याये श्रुतस्य दर्शनादित्यर्थः । चाक्रायणेन मुनिना
हस्तिपः धनाढ्य इत्येके तदुच्छिष्टधान्यविशेषान् ॥ प्रार्थितेनेति ॥ स्वोच्छिष्टजलपान
हंतानुपानमितीत्यनेन प्रार्थितेन चाक्रायणेनोक्तमित्यर्थः । एवं हि तत्र वाक्यक्र
चाक्रायण इभ्यग्रामे प्रद्रवणक उवास सहेभ्यं कुल्माषान् खादंतं बिभिक्षे । तं ह
नेतोऽन्ये विद्यन्ते । यच्च येम इम उपनिहता इति । एतेषां मे देहीति । तानस्मै प्र
हन्तानुपानमिति । उच्छिष्टं वै मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इति ।
अजीविष्यमिमानखादन्निति होवाच । कामो म उदपानमिति ॥ अत इ
लिंगदर्शनबलेन यदि ह वा इति श्रुतेः प्राणात्ययविषयत्वेनाबाधकत्वादित्यर्थः ॥ २८

## वाक्यार्थमुक्तावली

ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ३-४-२८ ॥ यद्यपि यदि
अप्यनेवंविन्निखिलं भक्षयीत एवमेव स भवतीति श्रुतेः स्तुतय इत्युक्तन्यायेन सर्वभक्ष
मोक्षप्रतिबन्धो नास्तीत्यर्थत्वं वक्तुं शक्यते । तथापि वस्तुतः श्रुतेर्ह्रासाभावपरत्वं अर्थ
भावेनेयमाशङ्केति भावः । सूत्रे चोऽप्यर्थः । सर्वान्नानुमतिरपि प्राणात्ययकालविषया
उत्सर्गतः सदसत्प्रवृत्तिभ्यां विशेषाङ्गीकारे अपवादिकैतच्छ्रुतिविरोधोऽपि नास्तीति भ
तच्छ्रुतेः प्राणात्ययकाले सर्वभक्षणेपि ज्ञानिनो न कोऽपि दोषः । इत्येतद्विषयत्वं च
वाक्यशेषे दर्शनात् । न वा अजीविष्यमिमानखादन्निति होवाच कामो म उद
मित्यभक्षयितृत्वस्यापि भक्षणाभावे प्राणात्यये तद्भक्षणेपि दोषाभावे अन्यदा ततु
लिङ्गदर्शनात् तुल्यते इत्यन्यथा कुल्माषयाचनेभ्योच्छिष्टत्वसाम्ये विभज्य कथनायोग
भावेन सूत्रार्थमाह ॥ नैतच्छ्रुतिबलेनेत्यादिना ॥

## तत्त्वसुबोधिनी

कथं यदि हवेति श्रुतेः प्राणात्ययविषयत्वमित्यतः तां व्याचष्टे । यदि प्राणात्यये

## वाक्यार्थमञ्जरी

ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ॥ यदि ह वेति श्रुत्युक्तसर्वान्नानुमति-निषिद्धान्नभोजनानुज्ञा प्राणात्यये प्राणापगमकालविषयैव । कुतः तद्दर्शनात् तस्योक्तार्थस्य न वा अजीविष्यमित्युत्तरवाक्ये दर्शनादित्यर्थः । तेदेव व्यनक्ति ॥ यदीति ॥ किं तल्लिङ्गदर्शनमित्यतः उषस्तिर्हि चाक्रायण इभ्यग्रामे प्रद्रावणक उवास सहेभ्यं कुल्माषान् खादंतं बिभिक्षे तं होवाच नेतोऽन्येविद्यन्ते यच्च येम इम उपनिहिता इति । एतेषां मे देहीति चोवाच तानस्मै प्रददौ हंतानुपानमिति । उच्छिष्टं वै मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इतीति पूर्वभागेन सङ्गत्यर्थं हन्तेत्याद्यर्थं तावदनुवदन्न वाऽजीविष्यमिति श्रुतिं व्याचष्टे । चाक्रायणेनेत्यादिना चक्रायणस्यापत्यं पुमान् चाक्रायणः उषस्तिर्नामतः इभ्यो गजपालकः कुल्माषाः कुत्सितमाषाः ॥

## सूत्रभाष्यम्

**॥ ॐ अबाधाच्च ॐ ॥ २९ ॥**

**'अन्याय्यचरणाभावे न हि ज्ञानस्य बाधनम् ।**
**अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धय' इति ब्रह्मतर्के ॥ २९ ॥**

## तत्त्वप्रदीपिका

अबाधाच्चेत्यादिसूत्राण्युदाहृत्योक्तमेवार्थं प्रमाणान्तरैः प्रचुरतरं प्रपञ्चयति ॥

## तत्त्वप्रकाशिका

किं च किं ज्ञानिनिषिद्धाकरणे बाधकसद्भावाद्वा तदुच्यते अथ करणे प्रमाणाभावादुत निषेधकप्रमाणाभावादथ करणे बाधकाभावाद्वा । आद्यं पराकुर्वत्सूत्रं पठित्वा स्मृत्यैव व्याचष्टे ॥ अबाधाच्चेति ॥ २९ ॥

## भावदीपः

॥ ॐ अबाधाच्च ॐ ॥ २९ ॥ अबाधाच्चेत्यादियोगेषु समुच्चायकचापिशब्दश्रवणादाह

## वाक्यार्थमुक्तावली

ॐ अबाधाच्च ॐ ३-४-२९ ॥ अनापदि निषिद्धचरणे ज्ञानस्यानन्दातिशयहे
रूपबाधवदन्याय्यचरणाभावे उक्तविधज्ञानबाधाभाववच्च सर्वान्नानुमतिश्च प्राणात्ययवि
सूत्रार्थः ।

## तत्त्वसुबोधिनी

करणे निषिद्धकरणे निषेधकाभावादिति । निषिद्धं न कर्तव्यमिति निषेधकाभावा
करणे निषिद्धकरणे ।

## वाक्यार्थमञ्जरी

ॐ अबाधाच्च ॐ ॥ निषिद्धाकरणे बाधकाभावाच्च न तत्कार्यमित्यर्थः । असिद्ध
त्प्रमाणसद्भावस्य ॥

## सूत्रभाष्यम्

॥ ॐ अपि स्मर्यते ॐ ॥ ३० ॥

'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाऽऽचारं श्रौतं स्मार्तं परित्यजेदि'ति हरिवंशेषु ॥ ३० ॥

## तत्त्वप्रकाशिका

न द्वितीयः । असिद्धत्वात् । निषेधकस्मृतिसद्भावान्न तृतीयोऽपीत्यर्थप्रतिपादकं सूत्रं पठि
तां स्मृतिमुदाहरति ॥ अपीति ॥ ३० ॥

## भावदीपः

॥ ॐ अपि स्मर्यते ॐ ॥ ३० ॥ असिद्धत्वादिति ॥ अचोदनाच्चेत्यत्रैवोक्ते
भावः ॥ निषेधकस्मृतीति ॥ अपवदति हीत्यनेन पूर्वं ब्राह्मणो न हंतव्य इत्यादिनिषेध
श्रुतिरेवोक्ता । अत्र पुनः स्मृतिरित्यपौनरुक्त्यमिति भावः ॥ ३० ॥

## वाक्यार्थमुक्तावली

ॐ अपि स्मर्यते ॐ ३-४-३० ॥ असिद्धत्वादिति ॥ अचोदनेत्युक्तत्वादिति भाव
[illegible]

## वाक्यार्थमञ्जरी

ॐ अपि स्मर्यते ॐ ॥ सद्धर्मात्यागोऽतीतानागतज्ञानीति स्मर्यतेऽपीति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ शब्दश्चाऽतोऽकामचारे ॐ ॥ ३१ ॥**

**'स य एतदेवं विदेवंमन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत कामममनुवर्तेते'ति कौण्डिन्यश्रुतौ । अत इत्यल्पफलत्वं सूचयति ।**

**'न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छये'ति पाद्मे ॥ ३१ ॥**

## तत्त्वप्रकाशिका

न केवलं स्मृतिरेव निषेधिका श्रुतिश्चास्तीत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां श्रुतिमुदाहरति शब्दश्चेति ॥ चरतिर्गतिः । चतुर्थं निराकर्तुमाह ॥ अत इति ॥ तदेव कुत इत्यत आह ॥ नेति ॥

## भावबोधः

चरतिर्गतिरिति । भक्षणस्य पृथुगुक्तेरिति भावः । पूर्वं शमाद्युपेतः स्यात्तथाऽपि त्वित्य तु शब्देन सत्प्रवृत्तेः पूर्णफलत्वसाधनेऽसत्प्रवृत्तेरल्पफलहेतुत्वमित्यर्थादागतम् । तदिह सू ''अतः''शब्देन परामृश्यत इत्यभिप्रेत्य भाष्ये इत्यल्पफलत्वं सूचयतीत्युक्तं तदवतारयति चतुर्थमिति । अत्र आद्ये– ''केन स्यात्'' इति वाक्यस्य पूर्वपक्ष्युक्तयथेष्टाचार विधिपरत्वापाकरणाय सर्वज्ञानिसाधारणस्तुतिपरत्वेन अनुज्ञानमात्रपरत्वेन सावकाशोक्तिः द्वितीये– असत्प्रवृत्त्या कुण्ठितशक्तेः ज्ञानस्य मोक्षसाधनत्वाभावो नेत्यत्र श्रुतिरूप प्रमाणोक्तिः । तृतीये– तत्रैव कैमुत्योक्तिः । चतुर्थे– कामचारिणां ज्ञानिनां मोक्षयोग्यत तद्विजिज्ञासूनां कामचाराणां ज्ञानयोग्यत्वं स्यादिति प्रतिबन्दीनिरासः । यद्यपीदं सूत्रत्र असत्प्रवृत्तावपि विशेषसमर्थनपरेण ''प्राणात्ययः'' इत्यादिसूत्रचतुष्टयेनैवान्विततय कर्तव्यम् । तथाप्यसत्प्रवृत्त्यविशेषाङ्गीकारे मोक्षानुपपत्तिसमाधानमनेन सूत्रत्रयेण क्रियते

(भावबोध:)

जैमिनिमतापेक्षया स्वमते साम्योक्तेः स्वारस्यज्ञापनाय तदानन्तर्यस्यायुक्तत्वात् । स
''केन स्यात्'' इति श्रुतेः स्वमतेनैव पुनः स्वेच्छाचारविधिरूपार्थान्तरोक्तिः । अ
सप्तमोक्तस्वेच्छाचारविध्याक्षेपपरिहारः । नवमे– ज्ञानिनां स्वेच्छाचारविधौ स्पष्टप्रमाणोि
दशमे– ''केनस्यात्'' इति श्रुतेः पञ्चमषष्ठसप्तमैरुक्तार्थस्य परस्परविरुद्धत्वेनाव्यव
तत्वमाशङ्क्य तन्निषेधपूर्वकं ज्ञानिनामनेकप्रकारत्वोक्तिः ॥

एकादशे–ज्ञानिनामनेकप्रकारत्वोक्तेः । द्वादशे–ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषस्व
ज्ञानस्य मोक्षजनकत्वे सत्प्रवृत्तिसापेक्षत्वं स्यादित्याक्षेपस्य द्वितीयसूत्रोक्तकामचारश्रुति
निरासोक्तिः । कामचारश्रुत्या असत्प्रवृत्तेर्मोक्षाप्रतिबन्धकत्वसिद्धावपि सत्प्रवृत्तेस्तदक
त्वासिद्ध्या ज्ञानस्य मोक्षजनने अग्निहोत्रादिसापेक्षत्वमस्त्येवेति शङ्कापरिहाराय
ज्ञानपूर्वकालीनकर्मसापेक्षत्वमुच्यते, उत्तरकालीनकर्मसापेक्षत्वं वेति विकल्पं हृदि
पूर्वतनप्रवृत्तेः ज्ञानोत्पत्त्युपयोगित्वे प्रमाणोक्त्या, त्रयोदशे– आद्यस्य परिहारोक्ति
उत्तरसत्प्रवृत्तेस्तु ज्ञानप्रतिष्ठापकत्वे संपूर्णफलजनकत्वे च प्रमाणोक्त्या, चतुर्दशे– द्वित
परिहारोक्तिः । अत्र ''तथा तु'' इति ''तु''शब्देन सत्प्रवृत्तेः पूर्णफलत्वोक्त्याऽसत
ह्रासहेतुत्वेनाल्पफलार्थत्वमपि सूचितम् । अत एव ''शब्दश्चातो कामचारः''
''अतः'' शब्देन ''तु''शब्दसूचिताल्पफलत्वमेव परामृष्टमित्यभिप्रेत्य भाष्ये अत
अल्पफलत्वं सूचयतीत्युक्तम् । एवं च ''अन्यथाऽल्पफलं भवेत्'' इत्यस्य–

''न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया'' इति वाक्यानुसारेण अन्यथाऽसत
''ह्रासेनाल्पफलं भवेत्'' इत्यर्थताऽपि वक्तव्या ।

तत्र च ''यदि ह वा'' इति श्रुतिविरोधपरिहाराय पञ्चदशे– तस्याः साव
त्वोक्तिः । षोडशे– असत्प्रवृत्त्यकरणे बाधकाभावोक्तिः । सप्तदशे– असत्प्रवृत्ति
स्मृतिरूपप्रमाणोक्तिः । अष्टादशे– ''शब्दश्चाऽतोऽकामचारे'' इत्यनेन तत्रैव स्मृत्
लकश्रुत्युक्तिः । ''अतः'' इत्यनेन असत्प्रवृत्तिकरणे बाधकोक्तिः । त्यागे प्रमाणस
ह्रासहेतुत्वेन चासत्प्रवृत्तेः पूर्वसूत्रेषु त्यागोक्तौ तर्हि ह्रासकारणत्यागज्ञानादेव संपूर्ण
सिद्धेर्न सत्कर्म कार्यमित्याशङ्कानिरासाय, एकोनविंशे– विहितत्वात् सत्
कर्तव्यत्वोक्तिः । ''शमदमाद्युपेत'' इत्यत्र शान्त्यादेर्ज्ञानप्रतिष्ठापकतया, आनन्द
हेतुतया, विहिततया च कर्तव्यत्वोक्तिः । अत्र पुनर्वर्णाश्रमोचितकर्मणो विहि
आनन्दाभिवृद्धिरूपफलत्वेन च कर्तव्यत्वोक्तिरिति च भेदः । विंशतितमे– विहितमपि

## भावदीपः

॥ ॐ शब्दश्चाऽतो कामचारे ॐ ॥ ३१
पौनरुक्त्यादिति चेन्न । यथा वियन्नये अस्ति तु गौण
प्रपंचनं तथात्रापि श्रुत्यंतरोक्त्या प्रागुक्तस्यैव प्रपंचन
अबाधाच्चेत्यादिसूत्राणि उदाहृत्योक्तमेवार्थं प्रमाणां
प्रागुक्तनिषेधश्रुतौ ज्ञानिपरत्वस्यास्फुटत्वादत्र चैवंविदि

## वाक्यार्थमुक्ताव

ॐ शब्दश्चातोऽकामचारे ॐ ३-४-३१ ॥ न
भक्षयीतेत्यादिश्रुतेः कथं स्मृतिविरोधेन सावकाशत्वा
अकामचारे कामेनागम्यगमनाभक्ष्यभक्षणविशेषसवनान
चरतेर्भक्षणार्थत्वात् भक्षयीतेति पृथगुक्तेः चरेदित्
चरगतिभक्षणयोरिति धातोरिति भावः ॥ कामचरतिमि
वा । यद्यप्यचोदनाप्रपञ्च इत्यदोषः । तदुक्तं तत्त्व
हृत्योक्तमेवार्थं प्रमाणान्तरैः [illegible] [illegible]तीति ।

(तत्त्वसुबोधिनी)

युक्तत्वात् । सप्तमे पुनः स्वमतेनैव केन स्यादिति
अष्टमे सप्तमोक्तस्वेच्छाचारविध्याक्षेपपरिहारः । न
प्रमाणोक्तिः । दशमे केन स्यादिति श्रुतेः अ
ज्ञानिनामनेकप्रकारत्वोक्तिः । एकादशे ज्ञानिनाम
द्वादशे ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषाकारज्ञान
स्यादित्याक्षेपस्य कामचारश्रुतिबलेन निरासः । तथा
सापेक्षत्वमस्त्येवेति शङ्कापरिहाराय किं ज्ञानप
उत्तरकालीनकर्मसापेक्षत्वमिति विकल्पं हृदि नि
उत्तरत्प्रवृत्तेः ज्ञानप्रतिष्ठापकत्वादौ प्रमाणोक्त्या द्विती
श्रुतिपरिहाराय तस्याः सावकाशत्वोक्तिः । षोडशे
सप्तदशे असत्प्रवृत्तित्यागे स्मृतिरूपप्रमाणोक्तिः । अ
तत्रात इत्यनेनासत्प्रवृत्तिकरणे बाधकोक्तिः । एको
त्वोक्तिः । विंशे आनन्दाभिवृद्धौ कर्मणो ज्ञानसहक

(तत्त्वप्रकाशिका)

**विहितत्वाच्चेति ॥ सुनियतं वर्णाश्रमोचितम् । सूत्रेऽनुक्तो अपीति ॥ ३२ ॥**

## भावदीपः

॥ ॐ विहितत्वाच्चाश्रमकर्मापि ॐ ॥ ३२
गतार्थत्वमाशंक्य तदाक्षिपति ॥ ह्वासेति ॥ ३२ ॥

## वाक्यार्थमुक्ताव

ॐ विहितत्त्वाच्च ॐ ३-४-३२ ॥ आश्रमकर्मा
नमेतत् । अन्यथा तत्र शमादिकं सर्वसाधारणमेव
शङ्काप्रसरादिति ज्ञेयम् ।

## वाक्यार्थमञ्जरी

ॐ विहितत्वाच्चाऽऽश्रमकर्मापि ॐ ॥ न
आश्रमाद्युचितकर्म च कार्यं कुतः कुर्यात्कर्मेति श्रुतौ
मोक्षस्य ज्ञानकर्मोभयसाध्यत्ववादेत्यर्थः ॥

## तत्त्वप्रकाशिक

विहितत्वेऽपि न सत्कर्म ज्ञानिना कार्यम् । फलाभा एव सिद्धेः । अन्यथा समुच्चयवादापत्तेरित्याशङ्कां परिहरत कर्तव्यमेव ज्ञानिना सत्कर्म संपूर्णफलसिद्धौ कर्मणो समुच्चयवादापत्तिः । विनापि कर्म ज्ञानमात्रेण मोक्षस मन्त्रिणमृते कार्यं प्राप्नोति तथापि मन्त्री सहकारी संपूर्ण मोक्षकार्यं साधयेत्तथापि कर्म सहायभूतम् । फलाधिक ज्ञानादिति ॥ यदि संपूर्णानन्दप्राप्तिमन्तरेण मोक्षस्वरू आह ॥ सर्वेति ॥ सर्वदुःखनिवृत्तिर्ज्ञानसाध्यो मोक्ष इ इति न तद्युक्तम् । ब्रह्मादीनां पुत्रिकाकामाद्यसत्प्रवृत्त अन्येषामेवमभावात्तेषामेवायं विशेषः कथमित्यत सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपि मोक्षो नियत एवेति

## भावदीपः

॥ ॐ सहकारित्वेन च ॐ ॥ ३३ ॥ कर्तव्

ज्ञेयम् । अस्मिन् अधिकरणे विंशतिसूत्राणि ज्ञानिनः स्यादिति वाक्यस्य आपष्टं विधित्वाभावमङ्गीकृत्य अ बाधिकायाः कामचाराणां साम्यश्रुतेः स्मृतित्वानुमति सत्प्रवृत्त्याविशेषे मोक्षाभावयुक्तिबाधमाशङ्क्य कामचार कैमुत्यन्यायेन तदुक्तिः । चतुर्थे कामचाराणां मोक्षाङ्ग राणां ज्ञानं स्यादिति बाधकोद्धारः । पञ्चमे जैमिनीर कथनं सदाचारपरत्वेन श्रुतेरर्थान्तरस्य च परिचोदना । साम्यश्रुतेः अमुख्यत्ववर्णनम् । सप्तमाष्टमनवमेषु स्वेच्छ र्थान्तरवर्णनम् । तत्र सप्तमे हिरण्यगर्भाभिप्रायेण विधित्वमुक्त्वा ज्ञानिनामप्येवं स्यादिति प्रतिबन्दीबाध भगवद्वशत्वान्यथानुपपत्या तत्समर्थनम् । नवमे श्रुत्य चार्थत्रयस्य विरोधमाशङ्क्याधिकारिभेदेनैकवाक्यतोक्ति सत्प्रवृत्तेर्विशेषहेतुत्वे सविशेषमोक्ष एवेति समुच्चयवादाप मोक्षस्य सत्प्रवृत्त्यनपेक्षत्वे अत एवेति द्वितीयसूत्रोक्त व त्रयोदशे तस्याः श्रुतेः असत्प्रवृत्तेर्मोक्षाप्रतिबन्धक सत्प्रवृत्तेर्मोक्षहेतुत्वमाशङ्क्य सत्प्रवृत्तेर्ज्ञान एवापेक्षयोक्ति

## वाक्यार्थमञ्जर

ॐ सहकारित्वेन च ॐ ॥ मोक्षहेतुज्ञान
कार्यमित्यर्थः । श्रुतिं व्याचष्टे ॥ यद्यपीति ॥ ४ ॥

## ५. उभयलिङ्गाधिक

॥ ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ।

सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त ए
आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजि
सङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य'(छां.उ.
म्येऽपि विरोचनो विपरीतज्ञानमापेन्द्रः सम्यग्ज्ञान

## तत्त्वप्रदीपिक

अयोग्या अपि कापि तप आदिभिर्महोत्साहैः कथ
महोत्साहवैयर्थ्यादित्यत आह– ॐ सर्वथाऽपि तु त

(तत्त्वप्रकाशिका)

वेदानधिकारिणामपि प्रयत्नेन तत्प्राप्तिदर्शनात् । अतोऽयोग्यैरपि योग्यानामपि मोक्ष इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ।। सर्वथ श्रवणाद्यनेकोत्साहेऽपि योग्यानामेव ज्ञानप्राप्तिर्भवति नायोग्यानाम् रूपेणेन्द्रविरोचनयोः प्रजापतेराचार्यस्योपदेशसाम्येऽपि योग्यत्वादि त्वयोग्यो विरोचनः । प्रत्युत विपरीतज्ञानमेवापायमात्मापहतपाप्मत प्रजापतिनोपदिष्टे कोऽसाविति ताभ्यां पृष्टेन प्रजापतिनोक्तम् । य एषो आत्मा' इति । तच्छ्रुत्वेन्द्रेणापहतपाप्मत्वादिलक्षणोऽक्षिस्थो हरिरात्मे चक्षुषि प्रतीयमानप्रतिबिम्ब एवापहतपाप्मत्वादिलक्षणात्मेति अविजिघत्सोऽपिपास इति बुभुक्षादिना पीडाभाव उच्यते । न ह्यस्य घ स विजिज्ञासितव्य इति ।। ३४ ।।

## गुर्वर्थदीपिका

उभयथापि लोके दर्शनमित्यत्रावैष्णवविप्रैर्वैष्णवविप्रैश्च त्वादित्यर्थः । वेदानधिकारिणामपीत्यत्र वेदानधिकारिणां योग्य ज्ञानप्राप्तिदर्शनाद्वेदान्तजनितज्ञानमप्ययोग्यानां भवत्वित्यर्थः । प्र बिम्ब एवेत्यर्थः । एवं बिम्बप्रतिबिम्बयोरैक्यादहमेव ब्रह्मेति ज्ञात

(भावबोधः)

ननु ''असार्वत्रिकी'' इत्यत्र ज्ञानस्य नियताधि
तत्प्राप्तिः स्यादित्यत आह– वेदानधिकारिणामिति
ध्ययनस्यान्यायेनाधिकारिणामपि प्रयत्नेन प्राप्तिदर्शना
देशत्वेन कथं श्रुत्योपदेशसाम्येऽपीत्युक्तमित्यत आह
पिपास'' इति पदयोरिच्छाभावार्थत्वनिरासायाह–
इत्यस्य पौनरुक्त्यपरिहारार्थमाह– न हीति ।

## भावदीपः

॥ ॐ सर्वथापि तु त एवोभयलिंगात् ॐ ॥
अधिकारिमात्रेति ॥ महाप्रयत्नेनानधिकारिभिरपि प्राप्य
एतेन पूर्वत्र सहकारित्वेन चेत्यत्र शुभं कृत्वा च वर्धत
मुक्तावाधिक्यं प्राप्यते । तथाऽनधिकारिभिरपि महाप्र
यात्पूर्वसंगतिरपि सूचिता ॥ मोक्षप्रसङ्गादिति ॥ त
मुक्तिस्थितेः प्राचीनयोग्यतानुसारित्वाद्युक्तिरयुक्तेति भ
रधिकार्यनधिकारिभ्यां प्राप्यत्वदर्शनादिति भावः ।

(भावदीपः)

श्रुत्येत्युक्तमिति भावेन तदर्थमाह ॥ इति प्रजापतिनो
कोऽसाविति । अदनपानेच्छाराहित्यदिनिरासायाह ॥
इत्येतद्विजिज्ञासितव्य इति कुतो व्याख्यायते निर्बीजत्वा

## वाक्यार्थमुक्ताव

ॐ सर्वथापि तु त एवोभयलिङ्गात् ॐ ३-४-
ज्ञानिनो भवन्ति । मनुष्योत्तमादेवाब्रह्मेत्युक्तम् । त
ज्ञानित्वसम्भवात् इत्याक्षेपोत्थानादनन्तरसङ्गतिः ॥
नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्यत्रोक्तभङ्गप्रसङ्ग इति
किमनधिकारिभिरप्याप्यते उताधिकारिभिरेवेति चिन्त
योग्यतामभिभाव्यानधिकारिणां ज्ञानदानशक्त उता
वेदानधिकारिभिरपि वेदप्राप्तेरधिकारिभिश्च प्राप्तेरित्यु
ज्ञानाधिकारितेत्युक्तत्वात्कथं ज्ञानस्य सर्वप्राप्यत्वमित्य
॥ तथाप्यात्मस्वरूपयोग्यतावन्महाप्रयत्नस्यापि दृढत्वा
सर्वथापि सर्वप्रकारेणोत्साहेऽपीति सूत्रभाष्यसूचि

(वाक्यार्थमुक्तावली)

वाक्येनैवेन्द्रविरोचनयोःसम्यज्ज्ञानविपरीतज्ञानयोर्जननात्
भाष्योपात्तश्रुतेस्तादृशोपदेशत्वमित्यत इति ॥ श्रुत्येति ।
इति प्रजापतिनेत्यादिना ॥

अविजिघित्सोपिपास इति जग्धुं पातुं चेच्छाभाव
॥ अविजिघित्स इति ॥ क्षुत्पिपासादिकाश्चैव देवानां
षामिति वचनादिति भावः । एतेन स्थितिरित्युक्तन्याय
ज्ञानस्य स्थितिरिति सूत्रारूढो दर्शितो भवति ।

## तत्त्वसुबोधिनी

ॐ सर्वथाऽपि तु त एवोभयलिङ्गात्
नियताधिकाध्ययनस्यानधिकारिप्राप्यत्ववत्तथाभूताप
पूर्वाधिकरणोक्तस्वफलजनकत्वनियमो न स्यादिति प
सर्वथाऽपीति । सर्वप्रकारेणोत्साहेऽपीति । पूर्वप्रक
सूचितयुक्तिमाह । अधिकाराभावेऽपीति । ननु असार्व
उक्तत्वात् कथं अधिकाराभावे तत्प्राप्तिः स्यादित्यत

(वाक्यार्थमञ्जारी)

॥ य आत्मेत्यादिना ॥ पीडाभाव इति ॥ ने
जिज्ञासितव्य इत्यनयोः पौनरुक्त्यवारणायाह ॥ न

## सूत्रभाष्य

॥ ॐ अनभिभवं च दर्शयति ॐ ॥ ३८

'दैवीमेव सम्पत्तिं देवा अभिगच्छन्त्य
कदाचित्स्वभाव एव ह्यवतिष्ठत' इति स्वभावा

## तत्त्वप्रदीपि

अयोग्यानामपि कारणात्स्वभावाभिभवेन योग्य
अनभिभवं च दर्शयति ॥ स्वभावानभिभवं च
परिणामस्वभावत्वाददृष्टान्तत्वम् ॥

## तत्त्वप्रकाशि

ननु महाप्रयत्नेनायोग्यताया अभिभवितुं शक्यत्व

## भावदीपः

॥ ॐ अनभिभवं च दर्शयति ॐ ॥ ३५ ॥ अयो
नन्विति ॥ विप्रत्वमिति ॥ ''गाधेरभून्महातेजाः समिद्ध
यो लेभे ब्रह्मवर्चसमि''ति नवमस्कंधे व्यक्तमेतत् । भाष
प्रागुक्तं निराह ॥ नन्वेतदिति ॥ यदभिभवेन ज्ञानप्रा
स्तीत्यर्थः । यद्वा अयोग्यताभिभवेन प्राप्तिरिते
भिभवप्रयोजकत्वेन स्वभावत्वे कथमभिभव इत्यर्थः । स्व
चाप्रयोजको हेतुरित्याशंक्य विपक्षे श्रुतिविरोध इ
स्वभावत्वेऽपीत्यादिना ॥ प्रकृतोपयोगाय श्रौतपदार्थमाह

## वाक्यार्थमुक्तावली

ॐ अनभिभवं च दर्शयति ॐ ३-४-३५ ॥ सूत्रे
भवश्च दर्शयतीत्यर्थमभिप्रेत्याह ॥ भवेदित्यादिना ॥

## तत्त्वसबोधिनी

## तत्त्वप्रदीपि

अन्तरा चापि तु तद्दृष्टेः ॥ मिश्रबुद्धीनामपि
योग्यानां मिश्रबुद्धिस्वभावो नाभिभूयते । तेषां द्वे
लोकतश्च । तत्रापि विशेषो दृश्यते । एकेषामुभय
औदासीन्यमन्येषामित्यादिः ॥

## तत्त्वप्रकाशि

अस्त्वत्यन्तायोग्यानामसुरादीनां ज्ञानप्राप्त्ययोगं
दार्ढ्येनाभिभवायोगात् । मध्यममानुषाणां तु ज्ञाना
शक्यत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥
ज्ञानयोरन्तरास्थिततत्वमेव मिश्रज्ञानित्वमेव न तु केव
नास्ति । कुतः। तेषां मिश्रज्ञान एव विशेषेण दार्ढ्यदृष्टेः

## भावबोधः

योग्यतया मानवानामित्यस्य च लाभ इत्य

## वाक्यार्थमुक्ताव

ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ३-४-३६ ॥
त्वमिति पदद्वयमध्याहार्यम् । तुशब्दो विशेषार्थः
ज्ञानयोरन्तरास्थितानां मानवानामपि अन्तरस्थितत्व
प्राप्तिस्तेषामपि स्वभावाभिभवो नास्तीति यावत् ॥
भावयोर्मिश्रज्ञान एवेति यावत् । तुविशेषाकारेण त
मानवानामित्यादिना ॥

## तत्त्वसुबोधिनी

योग्यतया मानवानामित्यस्य च लाभ इत्यभिप्रे
मानवानामिति । तेषामपीति । अनेन सौत्रापिपदेन पूर्व
तेषामिति । मिश्रज्ञान एवेति । अनेन तुशब्दो विशेषार्थ
मिश्रज्ञानेन तस्य दार्ढ्येत्यर्थत्रयपर इत्युक्तं भवति ।

## वाक्यार्थविवरण

(सूत्रभाष्यम्)

देवा दैवस्वभावेन कर्मणा चाप्यसंशयम्
सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्ण
नानयोरन्यथाभावः कदाचित्कापि विद्य
मानुषा मिश्रमतयो विमिश्रगतयोऽपि च

## तत्त्वप्रका

ननु देवदानवमानवानां तत्स्वभावत्वे भवेदभि
तथाफलेन भाव्यम् । तदपि कुतः इत्याशङ्कां स्मृत्य
अपीति ॥ स्वभावेनेति ज्ञानकर्मणोर्विशेषणम् । ज्ञा
ज्ञातव्यम् ॥ ३७ ॥

## भावबो

तत्स्वभावत्व इति । ज्ञानादिस्वभावत्व
ग्रीसंपादकत्वेनैव कार्यजनकत्वात् स्वभावे
स्वभावेनेतीति । ज्ञानादेर्दैवत्वादिकं चेति । दैव

(भावदीपः)

''अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ।।
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ।
अनुबंधं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।''

मोहादारभ्यते कर्म तत्तामसमुदाहृतमि''
सात्त्विकत्वादिकं ज्ञातव्यमित्यर्थः ।। ३७ ।।

## वाक्यार्थमुक्ता

ॐ अपि स्मर्यते ॐ ३-४-३७ ।। तत्स्व
इत्यर्थः । देवादीनां तत्तत्स्वभावत्वमपि शब्दात्तादृ
स्मृतौ ज्ञानकर्मणोरिव योग्यतापरपर्यायवाच्यस्य स्व
तदयुक्तम् ।। तदनुसारिज्ञानकर्मणोरेव साक्षाद्धेतुत्वा
चेयं स्मृतिरुदाहृता । तदसिद्धिप्रसङ्गाच्चेत्यत आह
दैवस्वभावेनेत्यत्र दैवेन स्वभावेन चेति विशेषणोभय

## वाक्यार्थविव

तत्स्वभावत्व इति ॥ देवत्वादिस्वभावत्व इत्य
कत्वादिकमेव दैवत्वादिकम् । तत्र ''तज्ज्ञानं विद्धि

## वाक्यार्थमअ

ॐ अपि स्मर्यते ॐ ॥ असुरा इति स्मृत्य
स्मर्यत इत्यर्थः । स्वभावस्य प्रथक्कारणत्वप्रतीति
ज्ञानकर्मादिसामग्री संपादकत्वेनैव कार्यजनकत्वादि
दैवत्वं सात्विकत्वं, मिश्रत्वं राजसत्वं, आसुर
भावमव्ययमीक्षते । ''अविभक्तं विभक्तेषु तज्ज्ञान
नानाभावान्पृथग्विधान्'' । ''वेत्तिसर्वेषु भूतेषु तज
स्मिन्कार्ये सक्तमहैतुकम् ॥ अतत्वार्थवदल्पं च त
व्यमित्यर्थः ॥

## सूत्रभाष्यम्

॥ ॐ विशेषानुग्रहं च ॐ ॥ ३८ ॥

(तत्त्वप्रकाशिका)

देवेष्वेव विशेषतो नान्येषु श्रुतिसिद्धोऽतस्तेषामेव सम्य
सायान्तगामी परमेश्वरः सर्वानुग्रान् दैत्यान् दमयंस्त
नयन्वेदादिषु श्रूयते स एव मनुष्यप्रजाः संसार
परमेश्वरस्येति । श्रुत्यर्थनिश्चायिकां स्मृतिं चाह ॥ असु

## भावबोधः

ननु देवानामेव सम्यज्ज्ञानं तत्फले प्रतिपादनीये
मित्यत आह– ज्ञानादीति । ''असुरान्दमयन्'' इति
इत्यस्यार्थकथनमिदम् । उग्रमुग्रमिति वीप्सार्थः – स
अतीत्युपसर्गस्यार्थोऽतिक्रम्येति । अतिक्रमयित्वेत्यर्थः
स्वपदमिति शेषोक्तिः । वेदादिष्वित्यस्य योग्यतया त
तमोयोग्यवर्गयोः फलस्योक्तत्वाद्विश इति मनुष्या ए
''अतः'' शब्दः ''अनभिभवं च'' इत्युक्तस्व
''एवार्थः । ततश्च वह्निमत्त्वादेव धूमवत्त्वमितिवत् ।

## वाक्यार्थमुक्ता

ॐ विशेषानुग्रहश्च ॐ ३-४-३८ ॥ हेत्वन्त
रूपहेत्वपेक्षया भगवद्विशेषानुग्रहपात्रत्वरूपहेत्वन्तरेण
सर्वानुग्रानिति फलितोक्तिः ॥ दैत्यानिति ॥
अतिक्राम्येति ॥ अतिक्रामयित्वेप्यर्थः । चोःकूय
एधमानद्विट् स्वयोग्याधिकं एधमानानां ह्रासकर्ता ।

## तत्त्वसुबोधिन

ननु देवानामेवसम्यग्ज्ञानतत्फलप्रतिपादनीयेषु
मित्यत आह । ज्ञानादीति । असुरान् दमयन्
अध्यवसायेति । वीर इत्यस्यार्थकथनं इदमुग्रमुग्र
फलितोक्तिः । दैत्यानिति । अतीत्युपसर्गस्यार्थः ।
संसारमिति योग्यतया संबन्धः, स्वपदमिति शेषोक्तिः
मनुष्यप्रजा इति ॥ मुक्तियोग्यतमोयोग्यवर्गयोः
विवक्षिता इति भावः ।

## सूत्रभाष्यम्

॥ ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ॥ ३९

देवभागादसुरभाग एव बहुलः । 'तस्मान्न
लिङ्गात् । चशब्दात् 'ततः कनीयसा एव देवा
श्रुतेश्च ।

'असुरा बहुला यस्मात्तस्मान्न जनतामियादि'

## तत्त्वप्रदीपिक

अतस्त्वितरज्ज्यायो लिङ्गाच्च—

''द्वया ब्रह्मसुतास्तत्र दैतेया बहवः स्मृताः ।
तमोभूताः सत्वरूपा अल्पसंख्याः सुराः स्मृता''

## तत्त्वप्रकाशिक

(भावबोधः)

इति बृहदारण्यकभाष्यं मनसि निधाय व्याचष्टे
निर्धारणार्थकषष्ठीद्विवचनान्तात्तसिरित्युक्तंभवति । f
किमर्थमुदाह्रियत इत्यतस्तदवतारयति– ननु जनतेि

## भावदीपः

॥ ॐ अतस्त्वितरज्ज्यायो लिंगाच्च ॐ ॥
दर्शयतीति प्रागेव समर्थनादाह ॥ युक्त्येति ॥
सुरभागबाहुल्योक्तेः प्रकृतोपयोगाय तर्कमाह ॥
तोपपादकत्वेन भाष्यं व्याचष्टे ॥ न चैवमित्या
तद्व्याख्यात्वद्योतनाय भाष्यपदानुवादो देवभागादिति
लिंगादिति भ्रांतिनिरासायाह ॥ जनतेति ॥ जनस
कनीयसा इति श्रुतेश्चेत्यर्थः । श्रुत्यर्थमाह ॥ त
तस्याप्यर्थो देवेत्यादि । तत्राहेत्युपलक्षणम् ।
बाहुल्यवाचीत्यत्रापीत्यपि ध्येयम् ॥ ३९ ॥

(वाक्यार्थमुक्तावली)

स्यादिति भावः ॥ असुरबाहुल्य इति ॥ स्मृत्
निमित्तकत्त्वोक्त्या तस्मान्न जनतामियादिति सा
जनतामियादिति स्मृत्यन्तरोक्तो जनताप्रवेशनिषेधो 
भावः । स्मृत्यन्तरमेव तत् भाष्ये चशब्दार्थतयोपात्तं 
दाहरणसम्भवेन द्विःपठनायोगात् । श्रुतिवद् ब्राह्मपुरा
व्यर्थत्वाच्च । स्पष्टमसुरबाहुल्यस्य तत्रैवोक्तौ तत्र लिङ्ग

## तत्त्वसुबोधिनी

अत्र सूत्रे अतश्शब्दः अनभिभवं पराभवं चेत्यु
एवार्थः । वह्निमत्वादेव धूमवत्वमितिवदासुरस्वभावानि
स्त्वम् । अन्यथा तन्न स्यादिति सूत्रांशस्यार्थ इत्य
देवभागा इत्यनेन इतरप्राप्तियोगित्वेन विशेषानुग्रहं
अतःशब्दो भाष्ये व्याख्यात इत्युक्तं भवति । तस्मा
प्रमाणदर्शकमित्यभिप्रेत्याह । जनतेति । ततः 
षष्ठीद्विवचनात्सिद्धिरित्युक्तं भवति । लिङ्गप्रदर्शकत्वे

(वाक्यार्थमञ्जारी)

चशब्दात्कनीयस एवेति श्रुतेश्चेत्यर्थः । जनता
जनसमुदाये तेषामपि सत्वेन तत्संगदोषाभावाय तत्
ततस्तयोरिति ॥ अनेन तयोरिति निर्धारणार्थकषष्ठ

## सूत्रभाष्यम

॥ ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि निय

असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जै
देवा आसुरीं न मनुष्या दैवीमासुरीं च गति
नियमश्रुतेः । 'नासुराणां दैवं रूपं न देवानाम
स तद्रूपो निसर्गो ह्येष भवती'त्यतद्रूपत्वश्रुतेः ।
बभूवुस्तस्माद्धाऽप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्व
(ऐ. आ. २-१-८)ति देवासुराणां भावाभावश्रु

'देवानां भूतिरित्येव मनो विष्णौ
असुराणामभूतित्वेनैतन्नेयमतोऽ

(तत्त्वप्रदीपिका)

''देवासुरनरत्वाद्या जीवानां तु निसर्गतः । निसर्गो
देवाः शापबलादेव प्रह्लादादित्वमागताः । अतः पु
हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा । तत
किन्त्वाक्रम्यैव तं तिष्ठेद्देवसर्गस्ततो हि यः । अशो

नारदीये च । नचानादिकालान्मुच्यमानानां
एकैकपदयोग्यानामेवानन्तत्वात् ॥

''अनागता अतीताश्च यावन्तः सहिताः क्षणाः ।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथगि''ति
''परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः । सूक्ष्मत्व

''सहस्रयोजनसभां प्रभावाद्विश्वकर्मणः । अनन्ता र

''स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा'' इत्य

''स एव भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः । अज्ञा

(तत्त्वप्रकाशिका)

स न स्यात् । बभूवुर्भूतिमन्तः । सुप्तः सुप्तेषु स्थितो वायुः । ग
सम्यग्ज्ञानफलयोर्दर्शनात्कथमेतदित्यत उक्तार्थे स्मृतिं चाह ।। दे
देवानामसुरत्वप्राप्तिः । 'हेतुतः सोऽन्यथाभावो रक्तता स्फटिके य
भगवज्ज्ञानस्य योग्यैकसाध्यत्वाद्योग्यानामेव मोक्ष इति सिद्धम् ।। ४

## भावबोधः

अत्र सूत्रे ''तच्छब्दः'' ''अतस्त्वितरत्'' इति पूर्वसूत्रप्र
''भूत''शब्दः स्वभावरूपजात्याशयकः । ''तु''शब्दः
प्रवृत्तमसुरजातेरेवेति भाष्यं व्याचष्टे– देवस्यैवेत्यादिना । मनु
ज्ञातव्यम् । ''नासुरा दैवीम्'' इत्यादिश्रुत्यनुसारेण भाष्ये
निर्देशः । टीकायां त्वभ्यर्हितत्वात् प्रथमं देवस्यैवेत्युक्तमिति
जैमिनेरपि इति ''अपि''पदतात्पर्यमाह– न तु तत्रेति । अत
स्वभावार्थाविति । अनेन भाष्यगतजातिशब्दोऽप्युक्तार्थः
स्याप्युपलक्षक इत्यभिप्रेत्य भाष्ये भावाभावश्रुतेरित्युक्तम् । दे
सर्वसाधारणत्वादाह– भूतिमन्त इति । सुप्तः सुप्तेषु स्थितो वायु

## भावदीपः

।। ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियम
स्वरूपानभिभवेनेत्येतत्प्रमेयम् । जातिशब्दः स्वभावप
।। श्रुत्यनुरोधेन भाष्येऽन्यथानिर्देशेऽपि पूर्वसूत्रभा
सूत्राविसंवादद्योतनाय भावशब्देन भाष्यस्थत्वप्रत्ययान्
।। ज्ञानस्य कर्मशेषतया फलहेतुत्वं मनुष्यापेक्षया दो
जैमिनिव्यासमतावलंबेनोक्तः । स्तुतयेऽनुमतिर्वेत्यत्र
विषयम् । अनियमेन तदनुष्ठानं देवताविषयमित्या
नेत्यर्थः । कस्मिन्नर्थे हेतुत्वमित्यप्रतीतेर्नासुरा
यर्थिमाह ।। केनेति ।। नियमादीति ।। नियमात्त
स्वभावानभिभवोक्त्यप्रतीतेराह ।। गतिजातिशब्दावि
रूपपदार्थमाह ।। रूपमितीति ।। तं भूतिरित्यादिश्रुते
स्वभावाभिभवे सति परस्परविपरीतोपासनफलनियमो
।। बभूवुर्भूतिमंत इति ।। ननु द्वितीयांत्यपादे त

(वाक्यार्थमुक्तावली)

प्रस्तुतदेवादित्रयपरामर्शः । तुशब्द एवार्थः भूप्राप्तौ ।
उक्तार्थस्याभियुक्तसम्मतिरूपहेत्वन्तरसमुच्चयार्थः । त
प्राप्तस्य देवादेरेव तद्भावाद्देवादिभावो जैमिनेरपि सिद्ध
।। देवस्यैवेति ।। श्रुत्यनुसारेण भाष्ये असुरजाते
देवस्यैवेति प्रथमं ग्रहणम् । सिद्ध एवेत्येवकारव्यावर्त्यम
जैमिन्युक्तस्य बादरायणसम्मतत्वेऽपि कर्मणः पुरुषार्थः
मानुषविषयत्वात् बादरायणोक्तस्य कर्मणो ज्ञानशेष
व्यवस्थितवैकल्पिकोक्तिर्नात्र किंतु सिद्धमेव न वैकल्
''सिद्धमेवेति मतान्तराभावोपन्यासेन विषयभेदाशङ्कां
किञ्चिदपि न प्रायिकता प्राप्नोतीति स्थापयितुमिति
नियमात्तद्रूपाभावेभ्य इति नियमादिश्रुतिर्लक्ष्यत इति इत्
रित्यनेन रूप्यते निरूप्यत इतरव्यावृत्ततया वस्त्वनेनेति
देवादीनां रूपं तद्रूपं तन्नेत्यतद्रूपम् । भावप्रधानो
लक्षणवत्त्वश्रुतेः इत्युक्तं भवति । भावाभावश्रुतेरित्यने
लक्षणम् । भावो भूतिः । अभावो अभूतिः । श्रु

(वाक्यार्थमुक्तावली)

विशेषवाक्येन परिहरति ॥ न चेति ॥ देवाः शा
पुनश्च देवत्वं ते यान्ति निजमेव तु । हेतुतः सोऽन्य
नित्यश्चनाप्येषः स्वभावो विनिवर्तक इति गीता
प्रयत्नस्याप्रयोजकत्वं, योग्यताया एव प्रयोजकत्वम् ।
योग्यानामेवेत्यत्र लिङ्गोक्तिः । द्वितीये मरुता प्रयत्ने
किन्न स्यादित्याशङ्क्य योग्यतायाः स्वभावत्वस्य स्व
तृतीये स्वभावानभिभवश्रुतेरसुरदेवमातृविषयत्वेन
निषेधः । चतुर्थे द्वितीयसूत्रे चशब्दसमुच्चितस्य
त्स्वभावत्वस्य स्मृत्यादिसिद्ध्युक्तिः । षष्ठे तु द्विती
युक्त्यापि समर्थनम् । सप्तमे जैमिनिसंमत्यापि दृढीक

## तत्त्वसुबोधिन

अत्र सूत्रे तच्छब्दः अतस्त्वितरदिति पूर्वसूत्रप्र
स्वभावरूपजात्यभिप्रायः । तुशब्द एवार्थ इत्यभिप्रेत
देवस्यैवेत्यादिना । मनुष्यस्यैव मानुषभाव इत्यपि ज्ञ

## वाक्यार्थविवरणम्

जैमिनेरपीति ।। अपिपदतात्पर्यमाह ।। न तु तत्रेति ।। दे
स्यैवासुरभाव इत्यर्थः ।। पुरुषार्थाधिकरणवदिति ।। यथा 'पुरुषा
ज्ञानेनैव सिध्यति स्वर्गे कर्मातिशयमाधायकमिति जैमिनिमत
धिकारिभेदेन व्यवस्थितो विकल्पः । एवं देवस्यैव देवत्वम्
'अनभिभवं च दर्शयति' इत्यादिना भगवता प्रतिपादितम् ।
कस्यचिद्देवस्यासुरत्वं कस्यचिदसुरस्य देवत्वं भवतीति व्यवस्थि
तत्परिहारार्थं जैमिनेरपीत्युक्तं यत्पूर्वं भगवता प्रतिपादितम् । न
कश्चिद्विकल्प इत्यर्थः । फले ।। भूत्यभूतिरूपे ।। अन्यथेति ।।
सः फलनियमो न स्यादित्यर्थः ।। भाष्ये केवलं दैवीं केवलमासुरी
।। ज्ञानाद्यैश्वर्यवन्तो बभूवुरित्यर्थः । भाष्ये भावाभावशब्दौ भूत्य
एतावतेति ।। देवा इति वाक्ये देवानां प्रल्हादाद्यसुरभावेनोत्पत्ति
।। शापरूपादित्यर्थः । तथा च देवानाम् ।। सोऽन्यथाभावः ।। प्र
।। शापरूपोपाधिनिमित्तत एव । न स्वाभाविक इत्यर्थः । तत्र
जपाकुसुमसन्निधानादिति भावः । शङ्कुकर्णो नाम कश्चिद्दे
नियुक्तः । कदाचिद्वस्त्रानयने विलम्बं कृतवान् । तदानीं

## ६. आधिकारिकाधि

॥ ॐ न चाऽधिकारिकमपि पतनानुमानात्तद

न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यम् । ब्रह्मादीन
सूचयितुमपिशब्दः । चशब्दस्तु ज्ञानार्थिनां
अयोग्यमारोढुं प्रयतन् प्रपतन्हि दृश्यते । एवमयोग
चाकाङ्क्षायां पतनमनुमीयते ।

'न देवपदमन्विच्छेत्कुत एव हरेर्गुणान् ।
इच्छन्पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिरि'
'स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकमि'त्याद
'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः ।
इति श्रुतिश्च ॥ ४१ ॥

(तत्त्वप्रदीपिका)

श्रुतिस्मृतिभिर्बहुभिर्निवारिता अप्ययोग्यं पदमारुरुक्षन्ति ते
याभिरुत्सिसृप्सत'' इत्यादि । एवमयोग्यस्येति वचनात्तत्प

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्य देवादिपदाकाङ्क्षाश
शास्त्रादिसंगतिः । अन्यथा यागाद्यतिशयासिद्धेरेतत्साध्य
प्राप्यमित्युक्तम् । तत्संगतं देवतापदं विषयः । किमन्यै
रतीताधिकरणन्यायश्च सन्देहबीजम् । देवतापदमन्यप्राप
शतजन्मभिः पुमान्विरिञ्चतामेति' इत्यादेः । देवत्वस्य स्व
प्रयत्नसाध्यत्वश्रवणात्तस्य स्वभावत्वानुपपत्तेः । यद्धि चे
सर्वेषां सममेवेति न कश्चिद्देवत्वादिः स्वभावः । किं बहुन
किमु देवपदमित्यतो ज्ञानमप्ययोग्यप्राप्यमिति । सिद्धान्त
यदुक्तं देवतापदं भगवदैश्वर्यं चान्यैः प्राप्यमिति न
तत्प्राप्तेर्दूरोत्सारितत्वादिति भावः । सूत्रे ब्रह्मादिपदानाकाङ्
कमाकाङ्क्ष्यमिति भाष्यत इत्यत आह ॥ ब्रह्मादीनामिति
इति तत्राह ॥ अयोग्यमिति ॥ अत्रायं प्रयोगः । ब्रह्मादि

(गुर्वर्थदीपिका)

तदाकांक्षामात्रस्य पतनहेतुताया अदर्शनादप्रयोजको
रोहाकांक्षामात्रेणापि कारागृहादौ पतनस्यापि व
पौनरुक्त्यपरिहाराय उत् उत्कृष्टत्वं सर्पितुमिच्छन्
उत्तमत्वमिति ।

## भावबोधः

ओं न चाऽधिकारिकमपि पतनानुमानात्तदयो
पूर्वोक्तादित्थंभावान्तरसूचक इति भाष्यं मनसि नि
काङ्क्षाशून्यैरिति । तथाच एवं पूर्वाधिकरणे ज्ञानस्या
देवादिपदाकाङ्क्षाशून्यतालक्षणेत्थंभाववद्भिरधिकारिभिः
भावः । पूर्वाधिकरणोपक्षिप्तदेवतादिपदविचाराच्चान
देवादिष्वित्यादिना । यद्वा "स्वधर्मनिष्ठः" इत्यादि
पूर्वाधिकरणोक्तं देवत्वस्य स्वाभाविकत्वमित्याक्षे
किमित्यादि । अत्र देवतापदं किमन्यैः प्राप्यं भ
विरिञ्चादिदेवतापदं प्रयत्नमात्रसाध्यं भवत्युत न

(भावबोधः)

तत्र साधनगोचरेच्छाप्रयत्ने प्रवृत्तिरित्युच्येते इति । वै
सायुज्यादिमोक्षविशेषहेतुत्वेन साधनत्वमप्यस्तीति ज्ञात
मत्त्वादिति हेत्वर्थ इति । अयोग्यारोहप्रयत्नस्य प
दप्येवमेव व्याख्येयम् । ''स्वधर्मनिष्ठ'' इत्यादिवाक्यस्य
भाष्ये ''न देवपदमन्विच्छेत्'' इति पुराणोदाहरणमुपलक्ष
इत्यादिन्यायविवरणोदाहृतश्रुतिरप्यनुमानमूलभूतेति द्रष्टव
प्रवृत्तिशब्दवाच्यस्येत्यर्थः । स्मार्तानुमानेनेति । अनेन
भाष्ये प्रकारान्तरेण व्याख्यातो भवति । ''मायाभिः
''उत''शब्दस्यार्थ उत्तमत्वमिति । ''सिसृप्यते'' इ
गतौ'' इति धातोरिति भावः । ''अव'' इत्यस्यार्थोऽ
समीपवर्तिवाचकः । पूर्वसूत्राद्देवतावाचकाधिकारिकपदस्य

## भावदीपः

॥ ॐ न चाधिकारिकमपि पतनानुमानात्तदयोगात्
योग्याप्राप्यत्वोक्तावपि पादांतर्भावलाभाय सूत्रतात्पर्यार्थं

(भावदीप:)

स्वधर्मनिष्ठ: शतजन्मभि: पुमान्विरिंचतामेति तत:
वैष्णवं पदं यथार्हं विबुधै: कलात्यये इति चतुर्थस्कंध
तात्पर्यम् । मां श्रियम् । ऋजवो नाम ये देवा योग
विशेषोपासका हरे: ।। प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्र
वसंति हरिसन्निधौ ।। अनादिकालभक्ताश्च ज्ञानिन
सर्वजीवनिकायत: ।। सर्वदापि विशेषेण शतज
मुक्तिरवाप्यते ।। तथैव चत्वारिंशद्भि: पदं शैवं च
मप्युदीरितमिति षाड्गुण्ये इति । तथापि तदन
चोद्यमिति ज्ञेयम् । आदिपदेन वया विष्णोरेषस्य
महित्वमित्यादिग्रह: । पूर्वोक्तविरोधमाशंक्य नि
पूर्वोक्तस्मृत्यादावुक्तेरित्यर्थ: । देवत्वादेरस्वभावत्त्वादे
जीव: स्यादित्यत: सर्वजीवानामित्याद्यन्यत्रोक्तवा
एवकारव्यावर्त्योक्तिर्नेत्यादि । सौत्रापिपदव्यावर्त्यं न
।। अत इति ।। देवादित्वस्य प्रयत्नसाध्यत्वादित्यर्थ:
पूर्वपक्षनिरासकहेतुपरतया भाष्यं व्याचष्टे ।। यदुक्त

(वाक्यार्थमुक्तावली)

अत्राधिकरणे देवादिपदस्य ज्ञानादिश्रेयस्कामेनानाकाङ्क्षत्वाभिधाना
।। देवादिपदाकाङ्क्षाविरागस्यापि ज्ञानाधिकारित्वाद्देवादिपदाकाङ्क्षा
प्राप्यत्वेन यागाद्यतिशयो न स्यात् । तथा च यागवदयोग्यप्राप्यत्वे
ज्ञानयोग्या एव ज्ञानमाप्नुवन्तीत्युक्तमयुक्तम् स्यादिति पूर्वाक्षेपे
भावः ।। तत्सङ्गतमिति ।। देवादिषु नियतं ज्ञानं तदन्यैर्न प्र
तदन्यप्राप्यत्वे तन्नियतं ज्ञानमन्यप्राप्यं प्रसज्येतेति तदाक्षेपव
संशयविषयो विचार्यत इत्यर्थः । एतेन प्रकारान्तरेणाप्याक्षेपिकी
किमिति ।। देवादिपदं किमन्यप्राप्यमुत नेति चिन्ता । तव
स्वाभाविकमिति । तदर्थं तत्पुरुषप्रयत्नसाध्यं न वेति ।। लोकेति
राजादिपददृष्टिरित्यर्थः ।। गताधिकरणेति ।। योग्यानामेव
स्वाभाविकी । स्वभावस्य चानभिभव इति पूर्वोक्तं न्यायमेव पद
पूर्वोक्तन्यायः संशयबीजमिति भावः । तथा च पूर्वन्यायेन संशय
ज्ञेयम् । आधिकारिकपदनिरस्यं प्रमाणमाह ।। स्वधर्मेति ।।
तत्प्राप्त्यर्थं नाधिकारिविशेषक्लृप्तिरित्यर्थः । पूर्वाधिकरणन्यायेन
माशंक्य निषेधति ।। देवत्वस्येति ।। कुतो नेत्यत: पततानुमाना
प्रयत्नेति ।। न तु प्रयत्नस्य योग्यताव्यंजकत्वसम्भवादप्रयोजको

(वाक्यार्थमुक्तावली)

कार्येति यावत् । तदपि कुतः तदयोगात् । तदाकांक्षाया
इत्यंतेन व्याख्यातम् । तथा च सूत्रे ब्रह्मादिपदान
सूत्रखण्डे ब्रह्मादिपदानाकांक्षैवोच्यत इत्यर्थः ज्ञेयः ।
ऊर्ध्वरेतस्सु चेत्याद्युक्तब्रह्मचर्यगुरुशिष्यादीत्थंभावमपेक्ष्य इ
रूपेत्थंभावांतरसूचक इत्यर्थः । यद्वा योग्यतेत्थंभाव
योग्यानामप्युत्तमपदवीरागोऽपीत्थंभाव उच्यत इत्यर्थद्वयं
द्याकाङ्क्षायोगः कुतः प्रमाणादवसीयत इत्यतः प्रवृत्तं त
अयोगात् अयोग्यत्वात् तद्विशेषणकप्रयत्नवत्त्वहेतुना प
सूत्रांशं व्याचष्टे इत्यर्थः । ब्रह्मादिपदाकांक्षावति सर्वत्र प्र
॥ इच्छाया अपि प्रयत्नविशेषत्त्वादिति ॥ प्रवृत्तिविशेषत
साधनगोचराविछाप्रयत्नौ प्रवृत्तिरित्युच्येत इति । अत्र
मस्थानप्राप्तिः । उत्तमस्थानं च दार्ष्टान्तिके पदरूपं दृष्ट
पातोप्येवमवस्थानप्राप्तिरूप उभयानुगतो बोध्यः ।

ननु प्रयत्नासाध्यं चैतन्यमेव निजस्वभावः । न तु
साध्यत्वश्रवणादित्याशङ्कच निषेधति ॥ न चेति ॥ कु

(तत्त्वसुबोधिनी)

पूर्वाधिकरणे ज्ञानस्याधिकारिमात्रप्राप्यत्वमुक्त्वा ज्ञानस्य दे इत्थंभाववद्भिरधिकारिभिः प्राप्यत्वसमर्थनादनन्तरसंगतिरिति भ क्षिप्तदेवतादिपदविचाराच्चानन्तरसंगतिं दर्शयन् विषयमाह । दे स्वधर्मनिष्ट इत्यादिना देवत्वस्य प्रयत्नसाध्यत्वश्रवणादयुक्तं स्वाभाविकं वेत्याक्षेपादनन्तरसंगतिरिति भावः । अन्यथेति प्राप्यत्वसमर्थनाभावे योगाद्यपेक्षया विशेषो न स्यात्तस्याप्युत्तमपद त्यर्थः । पूर्वन्यायश्चेति । देवादिपदमेव देवादिभिः प्राप्यं नान्यै नचाधिकारिकमिति सूत्रनिवर्तनीयपूर्वपक्षमाह । देवतापदमिति शतक्रतुरिन्द्रो नवतीत्यादेर्ग्रहणम् ॥

देवत्वं चेदस्वाभाविकं किं तर्हि चेतनेषु स्वाभाविकमित्यत देवान्याप्राप्यमस्तु इत्यत आह । तच्चेति । अतो ज्ञानम देवतापदहेतुत्वात्तदप्राप्तौ पदप्राप्तेरेवायोगादिति भावः । इत्थंभावान ज्ञानिनां ब्रह्मचर्यगुरुशुश्रूषा भक्तिश्रवणादयो विहिताः । तेषामे सूचितम् । ज्ञानार्थिनामुक्तन्यायोऽपीत्थंभावोऽपेक्षितः परब्रह्मणो दे कार्येति इत्येतच्चशब्दसूचितमित्थंभावान्तरं देवादिपदाकांक्षाशून्यै

(वाक्यार्थविवरणम्)

देवजातेरेव देवत्वाद्युक्त्या तत्पदमपि तन्मात्रप्राप्यं ना
यः कश्चित्पुमान् स्वधर्मनिष्ठो विरञ्चितामेतीति पूर्वप
देवत्वस्येति ॥ प्रयत्नेति ॥ स्वधर्माचरणरूपप्रयत्नेत्यर्थ
॥ यद्धीति ॥ तदाकाङ्क्षाया एवेति ॥ देवतापदाक
काङ्क्षावति तद्विषयकप्रयत्नाभावादसिद्धिरित्यत आह
साधनेच्छाप्रयत्नौ अत्र प्रवृत्तिरित्युच्येत इति सुधोक्ते
तु देवत्वादिकमित्यर्थः ॥ ननु देवत्वादेः स्वाभा
त्वप्रतिपादकोदाहृतवाक्यविरोध इत्यत आह ॥ प्रय
यस्मिन् स्थाने स्थितस्तस्मात् स्थानादधस्तात् पत
नोत्थानमित्यर्थः । शक्ये तत्पदयोग्ये तत्पदे
भावाद्व्यभिचारवारणाय अशक्तत्वे सतीत्युक्तम् । अ
निच्छौ पुरुषे व्यभिचारवारणाय तत्पदेच्छुत्वादित्युक्त

## वाक्यार्थमञ्ज

अतीताधिकरणेति ॥ ज्ञानस्य योग्यैरेव प्राप्य

## सूत्रभाष्यम्

॥ ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम्

उपदेवपदं च (नाकांक्ष्य) नापेक्ष्यमित्येके । मिन्द्रद्युम्नश्रुतौ— 'अथ यथर्षीन्प्रजापतीन्नाक सिद्धानि'ति ।

बृहत्संहितायां च —

'न दैवानभिकाङ्क्षेत कुत एव हरे
प्राजापत्यान्न चाऽऽर्षांश्च गान्धव
ऋष्यादिषु विशेषे तु दोषो नैवा

इति विशेषदर्शनार्थमेक इत्युक्तम् ॥ ४२ ॥

## तत्त्वप्रदीपिक

उपेत्यादि सूत्रम् ॥ गन्धर्वादिपदं च नाऽक

(तत्त्वप्रकाशिका)

**इत्युक्तम् । न त्वेकस्मिन्नेव विषये विप्रतिपत्तिसूचना**
**संभवाच्चेति भावः ॥ ४२ ॥**

## गुर्वर्थदीपिका

ऋष्यादीनां गुरुत्वेन तदाकांक्षाया अदोषत्वात्
ऋषीणामिमे आर्षाः तत्पदव्याद्याः । स्मृतेस्तु
ऋजुभ्योऽन्यत्रायोग्यत्वात्पुमान् ब्रह्मपदप्राप्तियोग्यः पुम

## भावबोधः

''पूर्व''शब्दः प्रभृत्यर्थकः ''अपि''शब्दः कैम
मुनीनामित्यादिना । ''ऋषीन्'' इत्यादिप्रकृतोप
नित्यादीति ॥

ननु गन्धर्वादिपदस्यानाकाङ्क्ष्यत्वे तत्समं ऋषि
त्वानिश्चये मुनिपदेऽपि तदनिश्चयादित्यत आह– मु
मुनीनां'' इति मुनिपदस्यापि गन्धर्वादिपदसमानय

(भावदीपः)

निर्धारितत्वादित्यर्थो ध्येयः । दोषांतरं चाह
आकांक्ष्यत्वतदभावरूपविकल्पेत्यर्थः ॥ ४२ ॥

## वाक्यार्थमुक्ता

ॐ उपपूर्वमपीत्येके भावशमनवत् तदुक्तं ॐ ।
उपशब्दोऽयं समीपवृत्तिवाची । संख्यायामुपसन्नेत्यत्र
भावे चित्ते चेष्टायां च शमनात् भावशमना ऋषय
प्रजापतयोऽप्युच्यन्ते । तेषां कश्यपकर्दमादीनां त्र
नाकांक्ष्यमिति प्रकृतमनुवर्तते । तथा च पूर्वेषां
गन्धर्वादीनामपि पदं नाकांक्ष्यं किं देवानां भाव
वदन्ति । सामान्यतो ऋष्यादित्वाकांक्षायां न दो
गन्धर्वादिपदस्य ऋष्यादिपदस्य चानाकांक्ष्यत्वं श्रुत्या
श्रुत्यनुसारेण दृष्टान्तत्वग्रहणेऽपि तस्यापि कैमुत्य
मुनीनामिति ॥ केचित्तु उपेतिशब्दः पूर्वो यस्
देवपदमिह विशेषतयऽन्वीयते । तथा च उपदेवपदमि

(वाक्यार्थमुक्तावली)

ननु नाकांक्ष्यमित्येक इत्युक्त्यैवाऽनाकांक्ष्यमिति स्व
वस्तुविकल्पेति ॥ तन्मतस्यादूषितत्वादुभयमपि वास्तवं
सूत्रे गन्धर्वादिपदमिति वाच्ये उपेत्त्याद्युक्तिस्तत्सम
तेषामित्यपिपदसूचितकैमुत्यव्यक्त्यर्था । ऋषिस्वरूपप्रति

## तत्त्वसुबोधिनी

सूत्रे उपशब्दः समीपवर्तिवाचकः । पूर्वसूत्राद्देवत
स्यानुवृत्तिः । पूर्वशब्दः प्रभृत्यर्थः । अपिशब्दः कैमु
मुनीनामिति । भावे वित्ते चेष्टायां च शमनाद्धा
नाकांक्ष्यत्वे ततोपि न्यूनं मुनिपदं कथं दृष्टान्तः ॥ त
सुतरां तदनिश्चयादित्यत आह । मुनिपदस्येति । अ
स्यापि दृष्टांन्तत्वमुक्तम् । तच्छेषम् । ऋष्यादिष्विति स
दिपदे साकांक्ष्यतानाकांक्ष्यत्वयोः अन्यतरस्यानाक
वस्तुनीति । गन्धर्वादिपदरूपवस्तुनि कदाचित्
विकल्पासंभवादित्यर्थः ॥ ननु विज्ञानभक्त्यादिमती

(वाक्यार्थमञ्जरी)

चित्ते चेष्टायां च शमनाः । भावशमना ऋषयः तत्प
कुतः तद्वयं नाकांक्ष्यमित्येतद्यथार्षीनित्येतत् श्रु
ऋषिसंबन्धभूतान् तत्पदाकांक्षानिषेधस्यैव प्रकृतत्वा
नाकांक्ष्यत्वे तत्समऋषिपदं कथं दृष्टान्तः तत्र न
यादित्यत आह ।। मुनिपदस्येति ।। एकस्मिन्नेवेति ।
।। गन्धर्वादिपदस्याकांक्ष्यत्वानाकांक्ष्यत्वयोरन्यतरस्येत

## सूत्रभाष्यम्

।। ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय आक

देवर्षिगन्धर्वाणां पदाकाङ्क्षी पतेद्ध्रुवम्
अन्यत्र शुभमाकाङ्क्षन्न पतेदविरोधत
'नानात्वमेव कामानां नाकामः क्व
अतोऽविरुद्धकामः स्यादकामस्तेन

(तत्त्वप्रकाशिका)

तादृशस्यादर्शनादित्यर्थः । आचारवाचकं वाक्यमाचा
भ्यत्वादुक्तं युक्तमिति सिद्धम् ॥ ४३ ॥

## गुर्वर्थदीपिका

अधिकरणार्थमुपसंहरति अत इति ॥ ननु
कामबहिष्कृतं चेत्, न साधनं स्यादित्यादिना ज्ञान
मनाकाङ्क्षायां न पतनमित्यत आह– आकाङ्क्षायामि
मेवेति, नियमाभावसूचनमित्यर्थः ॥ अत्राद्ये–
प्रमाणोक्तिः ॥ द्वितीये– तत्रैव कैमुत्यप्रदर्शनम् ॥
ज्ञानभक्त्यादिकमपि नाकाङ्क्ष्यमित्याशङ्कानिरास इति
काधिकरणम् ॥ ६ ॥

## भावदीपः

॥ ॐ बहिस्तूभयथापि स्मृतेराचाराच्च ॐ ।
विरोधात्कथमनाकाङ्क्षायां चेति समुच्चय इत्यत अ

(वाक्यार्थमुक्तावली)

देवर्षिगन्धर्वपदेभ्यो बहिर्भूतज्ञानभक्त्यादिषुतु विशेषः
यामपि न पतनम् । कुतःस्मृतेर्देवऋषिगन्धर्वेतिस्मृती
स्पष्टार्थमिति न व्याख्यातम् । नन्वाकांक्षायामित्य
तत्साधनं कामबहिष्कृतं चेत् । अकामितो वाग्गति
ज्ञानभक्तीश्वरप्रसादादेरकामनायामनर्थोक्तेरित्यत आह
देवत्त्वमनाकांक्ष्यमिति नियमः । स्वयोग्यं स्वायोग्यमि
किन्तु स्वयोग्यमाकांक्ष्यमयोग्यमनाकांक्ष्यमित्यनियमसू
भक्त्यादेराकांक्ष्यत्त्वेऽपि न पतनमित्युच्यत इति भावः
प्रतिषेधो युक्त इति चेद्दृष्टान्तोपपत्तेः । यद्वा सुप्तौ तिर्
प्राप्तेर्मनुष्यादिदेहेष्वाकांक्ष्यत्वादाकांक्षायामनाकांक्षायां च
अयोग्यज्ञानादि नाकांक्ष्यमिति भावेन स्मृतावविरोध
शुभमाकांक्षन्निति शुभमात्रस्य भाष्ये उपादानेन च
तत्साधनैश्वर्यादिषु विषयम् । ततश्च ज्ञानसाधनैश्वर्यादिशु
पतनम् । ऐश्वर्यादिर्ज्ञानं प्रति नियतसाधनत्वाभावादि
इति ॥ ऐश्वर्यादि ज्ञानविरोधि चेन्नाकांक्ष्यमिति

तदाकांक्षायोगस्यानुमानेनोपपादनम् । द्वितीये कैम्
तृतीयेऽयोग्यज्ञानादिकमप्यनाकांक्षं किमु पदमिति
सूत्रक्रमः ।

## वाक्यार्थविवर

ननु "विज्ञानभक्त्यादिकमप्यतीव तत्साधनं काम
तात्पर्यनिर्णये ज्ञानभक्त्यादेरवश्यमाकाङ्क्ष्यत्वविधानात्
आह ॥ आकाङ्क्षायामनाकाङ्क्षायां चेति ॥ अनि
भावसूचनमित्यर्थः । तथा चाकाङ्क्ष्यमेवेति भावः ।
ज्ञानिन इति शेषः ॥ शुभकाम इति ॥ ज्ञानभक्त्या
॥ "विहाय कामान्" इति सर्वकामप्रहाणविधानात्
योग्यकामे कथं न पतनमित्यर्थः । नाकामः क्वच ह
सर्वथा विरुद्धाविरुद्धकामनामात्रशून्यस्य पुरुषस्यादर्शे
अविरुद्धकामः स्यादिति विहितत्वादिति भावः ॥

## वाक्यार्थमञ्ज

## तत्त्वप्रदीपिका

अनन्तजीवेष्वनादिसञ्चितपुण्यपूगपावितचित्तानां केषाञ्चि
नचायोग्यानां केनाप्युपायेन ज्ञानोत्पत्तिः। न च योग्यता क्वापि कदा
अयोग्यपदारुरुक्षायामधः पतनं चेत्युक्तम्। एवमवसितो योग्यताप्रस
यस्य तज्ज्ञानं जायते किं तस्यैव तत्फलमथवा तत्प्रयोजकानां देवादी
"ब्रह्मविदाप्नोति परमि"ति वचनात्तस्यैव फलम्। नह्यन्य उपास्तेऽ
भवेत्। प्रेरकाणां किमप्यदृष्टं ज्ञानादिफलं तद्वदेवाङ्गीकार्यम्। अन्यथ
फलं प्रेरकाणामिति तु न प्रमाणपद्धतिमध्यास्ते। एवं प्राप्ते प्रत्याह– स
ज्ञानादिप्रवर्तकतया तत्स्वामिनां देवानामेव महत्तमं फलम्। तत्प्रवत
तदपेक्षयाऽत्यल्पफलत्वात्तेषामेव फलमित्युक्तिः। "महानपि वृ
भवेदि"तिवत्, "यदु किञ्चेमाः प्रजाः" इत्यादिवच्च। नह्यत्र प्रजाग
प्रत्यक्षविरोधात्। "कर्ता शास्त्रार्थवत्त्वादि"त्यादेश्च। किन्तु पराधीनं
हि फलमश्नुत" इति च महत्त्वापेक्षया, अन्नवानितिवत्। "नास्वा
प्रमाणसिद्धप्रवृत्तिफलप्रतिषेधः। भृत्येष्वपि वेतनादिफलोपलब्धेः। अ
वक्तुं शक्यत इत्यभिप्रायः॥

# भावबोधः

ओं स्वामिनः फलश्रुतेरित्यात्रेयः ओं ॥ ४४
ज्ञानदानमेव देवानां विहितम् । ''चरन्ति देवाविहि
देवानां ज्ञानदानादिविहितमित्युक्तम् । ''न चाऽधिक
प्रतिपादकेन ज्ञानदानादिविभागादेरप्युपलक्षणतया सू
फलदं न स्यात्तर्हि विधेयं न स्यात् इत्याशङ्क
संपूर्णफलमन्येषां सन्निधिमात्रेणाल्पं फलमिति प्रतिपा
ज्ञानस्वामिनामेव देवादीनां फलं नत्वस्वामिनां
देवानामिति । अत्र ज्ञानं किं देवानामेव प्रजानामप
ज्ञानस्वामित्वमेव प्रयोजकमुत ज्ञानदत्वमपीति
पादकमुनिमतश्रुत्योः किं निरवकाशत्वमुत सावकाश
सद्भावे प्रमाणं नास्त्युतास्तीति । प्रजानां ज्ञानफलव
त्वरूपयुक्तिप्रमाणकत्वे ज्ञानफलं देवानां न संभवत्यु
ज्ञानदानं किं प्रजार्थमेव क्रियते स्वार्थमपीति । त

(भावदीपः)

॥ इत्युक्तमिति ॥ अनियमस्सर्वेषामित्यत्रोक्तमित्यर्थः ॥
देवतापदाद्यनाकाङ्क्षाङ्गमित्युक्तं तज्ज्ञानमित्यर्थः ॥ देवानामि
सम्बन्धसामान्ये षष्ठी । अस्योद्भवादिदमितिवत् ॥ प्रजानामिति ।
प्रयोजकत्वं कर्तृप्रेरकत्वं कर्तृत्वकृतिमत्त्वं चेति । तच्च प्रजानां क
क्वचित्प्रयोजकयस्यैव फलं लोके दृष्टम् । क्वचित्कर्तुरपीति भावः ।
तत्र प्राप्तिविषये । भाष्यं व्याचष्टे ॥ ब्रह्मेति ॥ एवकारार्थो न
ज्ञानादिफलं न किञ्चिदन्येषामित्यन्यत्रोक्तेरिति भावः । स्वा
स्वामिनामित्येतद्धेतुगर्भमिति भावेनाह ॥ कस्मादिति ॥
निरुपाधिकसहचारभङ्गप्रसङ्गो बाधक इति भावेनाह ॥ लोके
प्रतिज्ञायाः कर्तृत्वेन फलवत्त्वानुमानविरोधमाशङ्कते ॥ न
किंत्वन्वयव्यतिरेकाभ्यां स्वामित्वमेवेति भावेनाह ॥ कर्तुरपीति
वेतनप्रत्युपकारान्नदानादिफलं दृश्यत इत्याशङ्क्य निराह ॥
कर्मानुगुणं मूल्यद्रव्यदानं तर्हीहापि प्रजानां कर्तृणां
परिहारबहुकालजीवनादिकं देवाः प्रयच्छन्तीत्यवांतरमपि फलमस्त्ये
वोच्यतेऽस्माभिरिति भावेनाह ॥ अन्नादेरिति ॥ देवैः प्रजानामिति

